जं तुज्झ सईजाआ असयिओजंचसुहअअहोपि। ता किं पुट्टउ पिह्लं तुज्जसमाणो जुआणद्दि॥

जायन्ते च म्रियन्ते च मद्विधाः क्षुद्रजन्तवः। परार्थबद्धकक्ष्याणां त्वादृशामुद्भवः कुतः ॥

अत्राद्योदाहरणे तत्किं स्फुटतु बिल्वमित्येतत्पर्यन्तमेकं वाक्यम्। तत्र बिल्वस्फुटनेनात्र रहस्यभेदोऽभिमतः। यथा—बिल्वमस्फुटितमन्तः पक्वमपक्वं मधुरममधुरं सुरभि नसुरभीति वा न ज्ञायते। एवं यत्तव जाया सतीवयमसत्य इत्येतद्रहस्यमभिन्नं न ज्ञायते। स किं रहस्यभेदो भवतु? भवत्वित्युक्ते द्वितीयं वाक्यं तव समानो युवा नास्ति यदि ह्यस्माकमपि त्वत्तुल्यो भर्ता भवेत् त्वज्जायेव वयमप्यसत्यो न स्यामेति। द्वितीयोदाहरणे तु क्षुद्रजन्तव इत्येतत् पदं भिद्यते क्षुद्रेति जन्तव इति च। अन्यथा हि राज्ञा लुप्तशासनग्रामास्य स्यादप्रजन्मनः तं प्रत्येतद्वचो न भवतीति। अन्यधर्माणामन्यत्र प्रापणमतिदेशः। स द्विधा, सामान्यातिदेशो विशेषातिदेशश्च। तयोर्यत्र अन्यरूढसम्बद्धा धर्माः प्रसिद्धैरनुमेयभेदसंभवैः सम्बन्धिभिर्व्यप-दिष्टाः निर्ज्ञातभेदेष्वर्थेषु प्राप्यन्ते स सामान्यातिदेशः। यथा—ब्राह्मणवदस्मिन् क्षत्रिये वर्तितव्यमिति। तत्र यावन्तमर्थं ब्राह्मणशब्दो न व्यभिचरति तावत्यर्थे यानि प्रसिद्धसंबन्धानि कार्याण्यग्रभोजनादीनि तानितान्यत्यन्तमलब्धब्राह्मणव्यपदेशे क्षत्रियेऽतिदिश्यन्ते। तत्र सामान्य ब्राह्मणशब्दो न व्यभिचरति। माठरादिभिस्तु व्यभिचरति, नहि कठे माठरत्वमस्ति। सन्निहितेष्वपि च निर्ज्ञातेषु वा विशेषेषु कश्चिदेवार्थात्मा केनचिच्छब्देन संस्प्रष्टुं शक्यते, विशिष्टभागाभिनिवे-शीनि हि रूपविशेषयुक्तान्यभिधानानि सामान्येन च ब्राह्मणशब्दस्य प्रत्यक्षोऽभिसंबन्धः। आनु-मानिकस्तु विशेषैर्माठरवदस्मिन्कठे वर्तितव्यमित्यपि सामान्यातिदेश एव। नह्यत्रापि माठरस्या-भिरूप्यादयो विशेषा आश्रीयन्ते एवं विशिष्टवदस्मिन्न वर्तितव्यमित्यत्रापि यद्विशिष्टेषु विशिष्टत्वं तदाश्रीयते। सोऽपि सामान्यातिदेशो, न विशेषातिदेशः। तदाह—

सामान्यमात्रं शब्दार्थो विशेषा व्यभिचारिणः। सामर्थ्यमन्तरेणातो विशेषो नातिदिश्यते॥

यत्र तु सामर्थ्याद्विशेषधर्माणामन्यत्र प्रापणं स विशेषातिदेशः। तद्यथा—ब्राह्मणवद-स्मिन् ब्राह्मणे वर्तितव्यमिति। तत्र हि सामान्यकार्यप्रतिपत्तिं ब्राह्मणादेव सिद्धा येनैव हेतुनोप-माने कार्यविशेषसिद्धिरविशिष्टोऽसौ हेतुरुपमेयेऽपि। तस्माद्विशिष्टब्राह्मणविषयाणि कार्याण्यति-दिश्यन्ते। ये च ब्राह्मणेषु ब्राह्मणवदेव वर्तन्ते तान्प्रत्ययमेवभूतोऽतिदेशो विज्ञायते। येषां तु बुद्धि-संभेदात् प्रमादाद्वा प्रवृत्तिसङ्करस्तेषु नियम एव क्रियते। तथा च ब्राह्मणमर्हति वृत्तमिति तदर्हमिति सूत्रेणाचार्येणायमेवार्थो भेदेन निदर्शनायान्यथैव प्रक्रान्तः। स च तद्धितेषु वत्यर्थप्रस्तावे निर्णीतः पुरस्तादिति। अथ यत्र ब्राह्मणवदस्मिन् क्षत्रिये वर्तितव्यमित्यतिदेशः किं तेन क्षत्रियेण तद्वतिग्रामे अब्राह्मणको ग्राम इति व्यपदेशः क्रियते? नेत्याह, व्यपदेशमात्रमपि कार्यमति-देशस्येति। अथ तद्वदेव ब्रह्महत्याप्रायश्चित्तं कर्तव्यं नेत्याह—यावति हि विषये तस्यातिदेष्टरि

सिद्धं तावत्तत्रानुपपद्यते । नह्यस्मादतिदेशात् ब्राह्मण्युपयमनप्रतिपत्तिर्भवति । एवं प्रकारेषु अस्यातिदेशेषु नाकामचारः, स्मृत्यधीनत्वात् । यदि [illegible] स्मृतिरेवंभूता स्यात्तदापि तदानुष्ठीयते, यथा क्षत्रियवैश्यौ सवनगतौ हत्वा ब्रह्महत्याप्रायश्चित्तं कुर्यादिति । किं पुनरयमतिदेशो वत्यादिमन्तरेणापि भवति । बाढम् । यथा ब्रह्मदत्तेऽप्येष ब्रह्मदत्त इति । तत्र भूतानां वा ब्रह्मदत्तविषयाणां क्रियागुणानामब्रह्मदत्ते समारोपाद्भाविनां वा रूढसंबन्धानामिव बुद्ध्यादिभिः संबन्धात् तन्निमित्तमुपमानोपमेयलक्षणं संबन्धमभ्यन्तरीकृत्योपचारेण ब्रह्मदत्तशब्दः प्रयुज्यते ॥

ननु च उशीनरवन्मद्रेषु यवा इति नात्र अन्यधर्माणामन्यत्रारोपणं मद्रयवेष्वतिदिश्यते अपितु यवा एव मद्रेषु सन्ति न सन्तीति वा गम्यते । तथाहि, यद्युशीनरेषु तन्निष्पत्तिर्विज्ञाता तदा सन्तीति गम्यते । अथानिष्पत्तिस्तदा न सन्तीति गम्यते । नैवम् । अत्राप्यन्यधर्माणामेवान्यत्र प्रापणं यावेवोशीनरयवानां भावाभावौ प्रसिद्धौ तावेव मद्रयवेष्वतिदिश्येते । कथंपुनरयमभिन्नस्वरूपो वतिः क्वचित्प्रकृत्यर्थधर्मानन्यत्रातिदिशति क्वचित्सम्बन्धिधर्मान् ? उच्यते, यत्र तेनतुल्यं क्रियाचेद्वतिः तत्र प्रकृत्यर्थधर्मान् यत्र तु तत्रतस्येव तत्राधेयसंबन्धिधर्मानिति तदेवमुपमानेषु प्रसिद्धाः धर्माः उपमेयेष्वारोप्यन्त इत्यतिदेशार्थः । प्रसिद्धिश्च क्वचिल्लोकापेक्षया, क्वचित्प्रयोक्त्रपेक्षया, क्वचित्प्रत्यक्षादि प्रमाणापेक्षयेति । तत्र लोकापेक्षया यथा—

जोह्नाओव्वमिअंकंकित्तीव्विअसुपुरिसंपहाएप्प ।
रइँसेइंमहाणईएव्वसिरीए चिरणिग्गआए पिअमुचंतम् ॥

यथा वा—

यस्तवेह सवनेन भूपतिः कर्मकर्म करवत्करिष्यति ।
तस्य नेष्यति वपुः कबन्धतां बन्धुरेव जगतां सुदर्शनः ॥

प्रयोक्त्रपेक्षया यथा—

अहमिव शून्यमरण्यं वयमिव तनुतां गतानि तोयानि ।
अस्माकमिवोच्छ्वासा दिवसा दीर्घाश्च तप्ताश्च ॥

प्रत्यक्षादिप्रमाणापेक्षया यथा—

दृष्टे लोचनवन्मनाङ्मुकुलितं पार्श्वस्थिते वक्त्रव
न्न्यग्भूतं बहिरासितं पुलकवत्स्पर्शं समातन्वति ।
नीवीबन्धवदागतं शिथिलतां संभाषमाणे ततो
मानेनापसृतं ह्रियेव सुदृशः पादस्पृशि प्रेयसि ॥

क्रियासु योग्यत्वमधिकारः, कः पुनर्योग्यः? अर्थी समर्थः शास्त्रेणापर्युदस्त इति। तथा र्थित्वमधिकारकारणं, परं हि पुरुषार्थं मोक्षमाचक्षते, तस्मादप्यनर्थी जुगुप्सते प्रमाद्यति च। तद्यथा—

अपि वृन्दावने शून्ये सृगालत्वं परीप्सति। न तु निर्विषयं मोक्षं कदाचिदपि गौतमः॥

सत्यपि चार्थित्वे सामर्थ्यमधिकारकारणं समुत्पन्नायामप्यतिशयेन दिदृक्षायामसमर्थत्वेनान्धो रूपदर्शनेनाधिक्रियते। अर्थिनः खल्वपि कचित्समर्थाश्च कर्मसु शास्त्रेण पर्युदासात् क्षुद्रशूद्राः श्रोत्रियादयः नाधिक्रियन्ते। अदृष्टार्थविषये हि सामर्थ्यासामर्थ्ये शास्त्रादेव समधिगम्येते। तस्मात्प्रधानमधिकारकारणं शास्त्रोपदेशमाचक्षते। तत्रोदाहरणम्—

साधारण्यान्निरातङ्कः कन्यामन्योऽपि याचते। किं पुनर्जगतां जेता प्रपौत्रः परमेष्ठिनः॥

यथा च—

उपप्लुतं पातुमदो मदोद्धतैस्त्वमेव विश्वम्भर विश्वमीशिषे।
ऋते रवेः क्षालयितुं क्षमेत कः क्षपातमस्काण्डमलीमसं नभः॥

वाक्यस्य न्यूनतायामाकाङ्क्षानिवृत्तये विशिष्टक्रियाकारकपदादेरुपादानमध्याहारः। यथा द्वारद्वारमित्युक्ते निव्रियतामपाव्रियतां वेत्यध्याह्रियते तथा वर्षत्युदेतीत्युक्ते देवः सूर्य इति। यथा च—

यश्च निम्बं परशुना यश्चैनं मधुसर्पिषा। यश्चैनं गन्धमाल्याभ्यां सर्वत्र कटुरेव सः॥ इति।

यथा वा—

यो न ददाति न यजते न यजति न जुहोति नात्ति नाधीते।
न धिनोति नाधितिष्ठति न चकास्ति न शास्ति किं तेन॥

लिङ्गविभक्तिवचनादेरन्यथोपात्तस्यार्थान्तरानुरोधादपुनरुच्चारितस्यैवान्यथाभिसंबन्धो विपरिणामः। तेषु लिङ्गविपरिणामो यथा—

मामूमुहत्खलु भवन्तमनन्यजन्मा मा ते मलीमसविकारघना मतिर्भूत्।
इत्यादि नन्विह निरर्थकमेव यस्मिन् कामश्च जृम्भितगुणो नवयौवनं च॥

विभक्तिविपरिणामो यथा—

श्रियः कुरूणामधिपस्य पालिनीं प्रजासु वृत्तिं यमयुङ्क्त वेदितुम्।
स वर्णिलिङ्गी विदितस्समाययौ युधिष्ठिरं द्वैतवने वनेचरः॥

वचनविपरिणामो यथा—

सर्वप्राणप्रवणमघवन्मुक्तमाहत्य वक्ष स्तत्सङ्घट्टाद्विघटितबृहत्खण्डमुच्चण्डरोचिः ।
एवंवेगात्कुलिशमकरोद्व्योम विद्युत्सहस्रै र्भर्तुर्वज्रज्वलनकपिशास्ते च रोषाट्टहासाः ॥

सर्वेषां वाक्यानां विधिनिषेध पर्यवसायित्वात्साक्षादश्रुतावपि तदुपकल्पनं वाक्यशेषः । तद्यथा—आर्यनिवासोऽयं देश इत्युक्ते इहैव स्थातव्यं मध्याह्नो वर्तत इत्युक्ते इहैव भोक्तव्यं स चोरः पन्था इत्युक्ते न गन्तव्यं, ग्राहाः सरित्यस्यामित्युक्ते न स्नातव्यमिति वाक्यशेषो भवति । यथा च—

त्वं जीवितं त्वमसि मे हृदयं द्वितीयं त्वं कौमुदी नयनयोरमृतं त्वमङ्गे ।
इत्यादिभिः प्रियशतैरनुरुध्य मुग्धां तामेव शान्तमथवा किमतः परेण ॥

यथा वा—

पत्न्याः पितेव स भवानलकूबरस्य रम्भास्नुषा धनपतेरिव सा तवापि ।
यस्त्वन्यदत्र हृदयान्न तदेति कण्ठं दोषस्तथापि यदि तत्स्मृत एष रुद्रः ॥

कः पुनरध्याहारवाक्यशेषयोर्विशेषः ? शब्दाकाङ्क्षानिवर्तकोऽध्याहारः, अर्थाकाङ्क्षानिवर्तको वाक्यशेषः, इति । यद्येवमनन्तरश्लोकयो रध्याहारोदाहरणताप्रसङ्गः । तथाहि—तामेव त्वं तथाप्तो विशुद्धामाहितगर्भामनागसं विस्रब्धां च धर्मपत्नीमत्याक्षीरिति, प्रथमश्लोके कामयमानायामपि च स्नुषायां कामतोऽपि यत्प्रधर्षणं तन्महापातकेषु प्रकल्प्यते, किमङ्ग पुनरकामयमानायाः शपन्त्याः क्रोशन्त्याश्च हठेनेति । द्वितीयश्लोके वाक्यस्यैवापरिपूर्णभावेनाकाङ्क्षितमध्याह्रियते । तत्र- शान्तमथवा किमतः परेण, यस्त्वन्यदत्र हृदयान्न तदेति कण्ठमित्यनेन शब्दाकाङ्क्षाया निवर्तितत्वात् अर्थाकाङ्क्षा तु विद्यते, तत्र तु यथोक्त एव वाक्यशेषो भवति । अथैष प्रत्यक्षानुमानोपमानशब्दैरनुपलभ्यमानः किंप्रमाणविषयः स्यात् ? अध्याहारवच्छ्रुतार्थापत्तिप्रमेय इति ॥

ननु श्रुतार्थापत्तिर्नाम वाक्यैकदेशविषयं वाक्यशेषविषयं वा किञ्चित्प्रमाणमस्ति ? अस्तु वा । तथापि तत्प्रवर्तमानमर्थानुपपत्त्या प्रवर्त्स्यति । अर्थानुपपत्तिश्चार्थान्तरमन्तरेण नोपशाम्यतीति तदेव कल्पनीयं भवति । शब्दस्यानुपपत्त्या शब्द एव कल्प्यते । तत्र, श्रोत्रप्रत्यक्षसमधिगतस्य स्वरूपेणानुपपत्तेरभावादर्थानुपपत्तिनिबन्धनमेवानुपपद्यमानत्वं । नचार्थकल्पन एवोपपद्यते । न चैतद्वाच्यं, कल्प्यमानस्यार्थस्यावैदिकत्वं प्राप्नोति । श्रूयमाणस्यैव हि शब्दस्यायमिषोरिव दीर्घदीर्घो व्यापारः । अविरतव्यापार एव हि शब्दे सा प्रतीतिरुदयते, तद्व्यापारविरतौ तदुपादानकारणानुपलब्धेः । लोकश्च वृद्धव्यवहारेण शास्त्रार्थेषु व्युत्पद्यमानस्तथाभूतवाक्यव्यवहारिणो वृद्धात्पदवाक्यस्यैव तादृशि वाक्यार्थे सामर्थ्यमवधारयति । वाक्यार्थश्चेह विधिनिषेधादिरूप आख्यातार्थः ।

तदनुवर्तीनि तु पदानि तस्मिन्नैमित्तिके निमित्तानि भवन्ति। नैमित्तिकानुकूलतया च क्वचिदश्रूयमाणान्यपि तानि विश्वजिदादौ स्वर्गकामादिपदवन्निमित्ताभावेनाद्रियन्ते, क्वचिच्छ्रूयमाणान्यप्यननुकूलतया यस्योभयं हविरार्तिमार्च्छेदित्यादिवत्परिह्रियते, क्वचिदन्यथास्थितानि प्रयाजादिशेषेण हवींष्यभिघारयतीतिवद्विध्यनुरोधात्प्रयाजशेष हविष्यभिघारयेदित्यन्यथावस्थाप्यन्ते। तस्माद्यथा प्रथमावगतघनाकारवाक्यार्थानुसारेण सतामसतां वा पदार्थानां निमित्तभावव्यवस्था तथैवाश्रूयमाण तथाविधैकदेशादपि वाक्यात्तदर्थावगतिर्भविष्यतीति किं श्रुतार्थापत्त्या। एव च न वाक्यशेषाध्याहारसोपानव्यवहितस्यार्थस्य शाब्दत्वमपितु साक्षादेव भवति॥

नन्वेवमश्रूयमाणेषु निमित्तेषु कुतस्तत्पदार्थमवगच्छामः? अनवगच्छन्तश्च कीदृश नैमित्तिकमवकल्पयामः? उच्यते, श्रुतेष्वपि पदेषु तेषां निमित्तभावो न स्वमहिम्नाऽवकल्पते, किं तर्हि नैमित्तिकानुसारेण, सचाश्रुतेष्वपि भविष्यति। तथाहि—न यजौ करणविभक्तिः श्रूयते, न स्वर्गे कर्मविभक्तिः, अथ चार्थः प्रतीयते एव विश्वजिता यजेतेति नैमित्तिकबलादेव स्वर्गकामादिपदाध्याहारार्थमुक्तश्लोकयोश्च यथोपन्यस्तवाक्यशेषार्थं प्रत्येयम इति॥

अत्र समाधीयते, यत्तावदुक्तमर्थानुपपत्त्यार्थान्तरमेव कल्पनीयमिति तत्र नार्थमात्रस्यानुपपत्ति। किं तर्हि शब्दार्थस्य, स च शब्दकल्पनापूर्वकार्थप्रतिपादित्व्यतिरेकेण नोपपन्नो भवति॥

यच्चोक्त न स्वरूपेण शब्दस्य काचिदनुपपत्तिरिति सत्यं तत्। किन्तु सार्थद्वारिकापि शब्दानुपपत्तिर्न शब्दान्तरकल्पनां विनोपशाम्यति। न ह्योदनं प्रत्यक्षेणापि प्रतियत पचतीत्युक्ते कर्मपदापेक्षा न भवति॥

यच्चोक्त कल्प्यमानस्याधस्यावैदिकत्व माभूदिति श्रूयमाणस्यैव शब्दस्यायमिषोरिव दीर्घदीर्घो व्यापार इति तदपि न सम्यक्, तस्य तथाविधार्थप्रत्यायनासामर्थ्यात्। सहि तमर्थ प्रत्याययन्नभिधाशक्त्या वा प्रत्याययेत्तात्पर्यशक्त्या वा। न तावदभिधाशक्त्या, तस्या पदार्थप्रतिपादनमात्र एवोपक्षीणत्वात्। नापि तात्पर्यशक्त्या, तात्पर्यशक्तिर्हि प्रतीयमानार्थविषया तत्रैव प्रकाशते, यत्र वाक्यवाक्यार्थयो परिपूर्णत्व भवति। यथा विष भुङ्क्ष्व माचास्य गृहे भुङ्क्था इति। अत्र तु परिपूर्णे वाक्ये नार्थः परिपूर्ण इति तात्पर्यशक्तेरवकाश। न हि तां तथाविधां त्वमत्राक्षीरित्यादिपदप्रयोग विना वाक्यार्थस्य परिपूर्णत्व भवति, तस्मादवश्यमेवार्थस्य शाब्दत्वसिद्धयेऽध्याहारवाक्यशेषादिशब्दकल्पना अभ्युपेया। तस्यां च सत्यां तत एवार्थसिद्धेः किमर्थकल्पनयेति। न च श्रूयमाणस्यैव शब्दस्यायमर्थ इति शक्यमभिधातुम्। तस्य ह्यनुपपद्यमान एवार्थो न पुनरुपपादक। किञ्च पदार्थानामेव वाक्यार्थत्वात्, कल्प्यमानवाक्यार्थगत

पदार्थाभिधायिनां पदानां सत्त्वमभिधातव्यम् । न च श्रूयमाणे वाक्ये तानि तथाभूतानि सन्ति, अविचायमेवंविधो बोधस्तिरश्चामनुपजायमानत्वान्नाशब्दज्ञस्य भवति । तदस्य सविकल्पकवि- ज्ञानात्पूर्वकालभाविना शब्दादिज्ञानेन भाव्यम् । नचेहार्थापत्तिव्यतिरेकेण सविकल्पकप्रत्यक्षादि प्रमाणवच्छब्दसहचरितार्थदर्शनादिनिमित्तकं स्मृत्याद्युपायान्तरं शब्दावगतावस्ति । तस्मादर्था- पत्त्या पूर्वं शब्द एव प्रत्येतव्यः । तस्मिंश्च प्रतिपन्ने तत एवार्थागमोऽपि भविष्यतीति न तात्प- र्यतः श्रूयमाण एव शब्दः परिक्लेशनीयः । यदि च श्रुतार्थापत्तेः शब्दविषयत्वं नाभ्युपेयते तदुपदेशे यथोपदेशं कार्यमतिदेशे तु यथाकार्यमुपदेश इति न्यायादतिदेशागतान्याग्निपदार्था- नुपपत्तौ अग्नये त्वा जुष्टं निर्वपामीत्यादि वाक्येषु सूर्यायेत्यादिपदानामूहो न स्यात्, तस्मादध्य- मेव अध्याहारवाक्यशेषादिसिद्धये श्रुतार्थापत्तिरभ्युपगन्तव्येति । अस्यैतावतः शब्दस्यायमर्थोऽ- स्मिन्नर्थे चायमेतावाञ्छब्द इति बुद्धिनिबन्धनमवधिः । तद्यथा—काले नदन्ति नागाः, श्वेताश्वो धावति, अलम्बुसानां यातेति । यदा पदानामवधिस्तदा समये शब्दायन्ते फणिनः शुभ्रो अश्वो धावति, अलम्बुसानां गन्तेत्यर्थः प्रतीयते । यदा तु कालेन दन्तिना अगाः, श्वा इतः धावति, अलं बुसानां यातेति, तदा कृष्णेन करिणा गतवानसि, कौलेयकोऽत्र वेगेन सति, समर्थो बुसानां गन्तेत्यर्थान्तरप्रतीतिः । तमिममलङ्कारेषु तद्विदः शब्दश्लेषमामनन्ति यथा—

येन ध्वस्तमनोभवेन बलिजित्कायः पुरास्त्रीकृतो
यो गङ्गां च दधेऽन्तकक्षयकरो यो बर्हिपत्रप्रियः ।
यस्याहुरशशिमच्छिरो हर इति स्तुत्यं च नामामराः
सोऽव्यादिष्टभुजङ्गहारवलयस्त्वां सर्वदोमाधवः ॥

पदार्थसमवायिनोऽर्थविशेषस्य शब्दान्तरेण पृथक्करणमपोद्धारः । यथा—वायव्यं श्वेतमा- लभेत वायुर्वै क्षेपिष्ठा देवतेति । एवं च वृत्तिच्छन्नस्य सर्वनाम्नानुसन्धानं भवति । तद्यथा—

पत्युः शिरश्चन्द्रकलामनेन स्पृशेति सख्या परिहासपूर्वम् ।
सा रञ्जयित्वा चरणौ कृताशीर्माल्येन तां निर्वचनं जघान ॥

अनेनेनेति सर्वनाम्ना रञ्जयित्वेति श्रुतौ समवेतश्चरणरागः पृथगपोद्ध्रियते । प्रसिद्धपदार्था- वधारणेऽप्रसिद्धपदार्थपर्यनुयोगो निर्ज्ञातप्रश्नः यथा वनात्पिक आनीयतां, जीर्णवरासी वृषलाय दीयतामित्युक्ते कोऽयं पिको नाम यो वनादानेयः, का वा वरासी या वृषलाय दातव्येति । एतेन प्रसिद्धाभिधानार्थावधारणे प्रसिद्धाभिधार्थपर्यनुयोगो व्याख्यातः । यथा—

काञ्चिद्वयकुञ्चनवती नातिपरिस्फुटशरीरलावण्या ।
मध्ये तपोधनानां किसलयमिव पाण्डुपत्राणाम् ॥

सामर्थ्यार्थित्वादेः क्वचिदयोग्यता क्रियान्तरव्युदासः, यथोच्यते । क्वचित्कश्चित्प्रगल्भते, न सर्वः सर्वं जानाति । किमपि कस्मैचिद्रोचते भिन्नरुचिर्हि लोक इति । यथा च—

कुमुदान्येव शशाङ्कः सविता बोधयति पङ्कजान्येव ।
वशिनां हि परपरिग्रहसम्पर्कपराङ्मुखी वृत्तिः ॥

शब्दान्तरोपलब्धवस्तुसामर्थ्यात्सामान्याक्षिप्तस्य विशेषेऽवस्थापनं लिङ्गाद्भेदः । यथा—अक्ताः शर्करा उपदधाति, तेजो वै घृतं, इति शर्कराणां घृताक्तत्वं प्रतीयते । यथा च—

न त्वं पुत्र पितुर्बिभेषि न च मे किञ्चिद्विधत्से वचः
केदं बालविरुद्धसाहसमिति व्याहृत्य सावेगया ।
उत्तीर्णस्य जयन्ति दान्तभुजगस्याश्लिष्य मात्रा हरे
र्निर्धूताश्चलकाकपक्षशिखरव्यासङ्गिनोऽम्भःकणाः ॥

अत्र दान्तभुजगस्येत्यम्भःकणा इति च लिङ्गाद्यमुना ह्रदादुत्तीर्णस्येति विशेषो गम्यते । लिङ्गमर्थः प्रकरणमौचित्यं देशः काल इति लिङ्गादयः सामान्यशब्दानां विशेषाध्यवसायो लिङ्गादिभेदः । स लिङ्गाद्यथा—धेनुरानीयतां सवत्सा धन्वका सकिशोरेति गौरजा वडवा च प्रतीयते । अर्थाद्यथा—अञ्जलिना सूर्यमुपतिष्ठते, अञ्जलिना पयः पिबति, अञ्जलिना लाजान् जुहोतीति अर्थानुरोधात्तथातथा पाणिसन्निवेशः प्रतीयते । प्रकरणाद्यथा—सैन्धवमानय, गोपालकमानयेत्युक्ते भोजने लवणं प्रयाणेऽश्वः, अध्यापने पुत्रः पाशुपाल्ये [redacted] गोपविशेषः प्रतीयते । औचित्याद्यथा—करभोरूः शिखरिदशना पुण्डरीकमुखी, उपमेयौचित्यात् करभादिशब्दैर्धनुःकोटिकुन्दकुड्मलकमलानि प्रतीयन्ते, नोष्ट्राचलाग्रच्छत्राणि । देशतो यथा—हरिररण्ये हरिर्द्वारकायां हरिरमरावत्यामिति सिंहविष्णुवासवाः प्रतीयन्ते । कालतो यथा—दिवा हस्तोऽयमित्युक्ते पाणिः प्रतीयते, न नक्षत्रम् । रात्रौ पतङ्ग इत्युक्ते शलभो न सूर्यः । त्रेतायामर्जुन इत्युक्ते कार्तवीर्यो न कौन्तेय इति । अस्य चोपलक्षणत्वात् साहचर्यादिभिरपि पदार्थावच्छेदो भवति । तद्यथा—

लक्ष्मणानुगतो भाति शशी राम इवापरः । कौसल्येव विभाति द्यौरभिषेकोज्ज्वलानिशम् ॥

यथा च—

गौर्गौः कामदुघा सम्यक्प्रयुक्ता स्मर्यते बुधैः । दुष्प्रयुक्ता पुनर्गोत्वं प्रयोक्तुः सैव शंसति ॥

शब्दान्तरमभ्यासः सङ्ख्या संज्ञा गुणः प्रकरणमिति शब्दान्तरादयः, तेभ्यः क्रियादीनामनेकत्वं शब्दान्तरादिभेदः । तेषु शब्दान्तरात्क्रियाभेदो यथा—

आरोहत्यवनीरुहः प्रविशति श्वभ्रं नगैः स्पर्धते
खं व्यालेढि विचेष्टते क्षितितले कुञ्जोदरे लीयते ।
अन्तर्भ्राम्यति कोटरस्य विसरत्यालम्बते वीरुधः
स्तिघन्न करोति मारुतवशं यातः कृशानुर्वने ॥

अभ्यासात्क्रियाभेदो यथा—"जाणिमिघमावराह जाणिमिमळिआ इभणइसमळाइ । भणुणेते उणजाणेकमावराइ विघअप्पाण ॥" इति । सङ्ख्याया द्रव्यभेदो यथा—

त्रयोऽग्नयस्त्रयो वेदास्त्रयो देवास्त्रयोगुणाः । त्रयो दण्डिप्रबन्धाश्च त्रिषु लोकेषु पूजिताः ॥

सङ्घातो द्रव्यभेदो यथा—

लाङ्गलेनोल्लिख्यमानाया यज्ञभूमेः समुद्गता । सीतेयमूर्मिलेयं तु द्वितीया जनकात्मजा ॥

गुणाद्द्रव्यभेदो यथा—

इन्द्रनीलनिभः पृष्ठे क्रोडे कुमुदपाण्डरः । गङ्गायमुनयोरेष सारङ्गस्सङ्गमोपमः ॥

प्रकरणात्क्रियाविशेषभेदो यथा—

एको दाशरथिः कामं यातुधानाः सहस्रशः । ते तु यावन्त एवाजौ तावद्भि ददृशे स तैः ॥

शक्तिः शक्तिव्यापारः क्रियाफलं क्रियासम्बन्धिनः सहचारिण इति शक्त्यादयः । तेषां वास्तवः औपाधिको वा भेदेनावभासः शक्त्यादिभेदः । तत्र वास्तवः शक्तिभेदो यथा—अग्निः काष्ठानि दहति, ओदनं पचति, पदार्थान्प्रकाशयति, सर्पिरांसि दीपयति, पित्तं शमयति, शरीरमाप्याययतीति । वास्तवः शक्तिव्यापारो यथा—आभ्यां भीतम्, आभ्यां पय, आभ्यां दत्तमित्यत्राभ्यामित्यस्य ल्यब्धादिपदसन्निधेरपादानकरणकर्तृसम्प्रदानविषयेऽभिधाव्यापारो भिद्यते । पय पय पयो जरयतीति कर्तृकर्मविशेषविषय गावो गावौ श्रूयेते इति च पय क्रियावच्छिन्न, पय पयोऽजरयतीति चतुर्थ्यर्थकल्पितं । एवं कर्माधिकरणादिविषयेऽपि कुण्डे कुण्डे निरीक्षीत्यादिरनन्तरय इति । वास्तवः क्रियाफलभेदो यथा—एकस्मिन्नेव यागे यजमानस्य धर्मः, ऋत्विजामर्थः, अन्नभुजां कामः, पशूनां मोक्षः, एकस्मिन्नपि सङ्ग्रामे भृत्यानां धर्मः, राज्ञामर्थः, क्रव्यादां कामः, अभिमुखहतानां मोक्ष इति । औपाधिकः क्रियाभेदो यथा—उष्ट्रासिका आस्यन्ते, हतशायिकाश्शाय्यन्ते, स्थाने पुष्यति, समूलकाषं कषति यथा च भवेदपि भवेत्स्यादपि स्यादिति । औपाधिकः सम्बन्धिभेदो यथा—सम्पन्नो यवः यवनेषु गुणरत्नसुगन्धेषु विनयः सुराष्ट्रेषु च भवान्पटुरासीत् पटुतर एषम अन्य यवाति सम्पन्न इति । यथा च—

तासु श्रिया राजपरम्परासु प्रभाविशेषोदयदुर्निरीक्षः ।
सहस्रधामा व्यचरद्विभक्तः पयोमुचां पङ्क्तिषु विद्युतेव ॥

औपाधिकः सहचारिभेदो यथा—

मगधेषु स्तनौ पीनौ कलिङ्गेष्वक्षिणी शुभे । बाहू प्रलम्बावङ्गेषु वङ्गेषु चरणौ दृढौ ॥

यथा च—

दैत्याधिपप्राणमुषां नखाना मुपेयुषा भूषणतां क्षतेन ।
प्रकाशकार्कश्यगुणौ दधानाः स्तनौ तरुण्यः परिवव्रुरेनम् ॥

श्रुतिः लिङ्गं वाक्यं प्रकरणं स्थानं समाख्येति श्रुत्यादयः । तैःप्रधानाङ्गत्वापादनं श्रुत्यादि-विनियोगः । स श्रुतितो यथा—पशुना रुद्रं यजते, अत्र पशुनेति तृतीयाश्रुत्या रुद्रयागे पशोरङ्गभावः प्रतिपाद्यते । लिङ्गतो यथा—बर्हिर्देवसदनं दामि इति । अत्र दामीति लवन लिंगादनेन मन्त्रेण बर्हीपि लुनीयादिति प्रतीयते । वाक्यतो यथा—श्वेतं छागमालभेत । अत्रैकवाक्योपादानाच्छ्वेतगुणस्य छागावच्छेदकत्वेन क्रियाङ्गभावो गम्यते । प्रकरणतो यथा—यज्ञे समिधो यजति, तनूनपातं यजति इडो यजति बर्हिर्यजति स्वाहाकारं यजतीति प्रयाजानां दर्शपूर्णमासप्रकरणे पठितानां तदङ्गत्वमवगम्यते । स्थानतो यथा—मार्जनाघमर्षणो-पस्थान जपहोमादिस्थानेषु पठितानां मन्त्राणां तत्रैवाङ्गभावो भवति । समाख्यातो यथा—हौत्रं कर्म, आध्वर्यवं कर्म, औद्गात्रं कर्मेत्यन्वर्थसंज्ञाबलाद्धोत्रादीनामेव तेष्वङ्गभावो भवति । श्रुत्यादयश्च कचित्समस्ताः क्वचिद्व्यस्ता एव विनियोजयन्ति । समस्ता यथा—

अनेन कल्याणि करे गृहीते महाकुलीनेन महीव गुर्वी ।
रत्नानुविद्धार्णवमेखलाया दिशःसपत्नी भव दक्षिणस्याः ॥

व्यस्ता यथा—

स क्षत्रियस्त्राणसहः क्षताद्य स्तत्कार्मुकं कर्मसु यस्य शक्तिः ।
वहन्द्वयीमप्यफले ऽर्थजाते करोत्यसत्कारहतामिवोक्तिम् ॥

श्रुतिलिंगवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षादिति श्रुत्यादि-बलाबलं तदप्यखण्डवाक्यार्थपक्षे असमर्थितमेव भवति । यतः—

अखण्डमेकं वाक्यं चेदविभक्तार्थमिष्यते । तत्सर्वं श्रुतिभूतत्वाच्च श्रुत्यैव विरोत्स्यते ॥

न च श्रुतिर्लिङ्गवाक्यादि न विरुणद्धि, तत्र श्रुत्या लिङ्गविरोधो यथा—ऐन्द्या गार्हपत्य मुपतिष्ठते, ऐन्द्या ऋचा इन्द्रप्रकाशनसामर्थ्यलक्षणाल्लिङ्गादिन्द्रोपस्थानविनियोगो गार्हपत्यमिति

द्वितीयाश्रुत्या बाध्यते । तेनैन्द्याप्येतया गार्हपत्यस्यैवोपस्थानं भवति । श्रुत्या वाक्यविरोधो यथा—पयसा भुङ्क्तां देवदत्तः शृतेन । अत्र विशेषणविशेष्यभावेन वाक्यप्रापितस्य पयोविषयस्य श्रपणस्यासंभवेऽपि श्रुतिप्रापितं पयस उपसेचनत्वं न निवर्तते । नचोपसेचनत्वेन यदप्रसिद्धमुदकादिकं, तेन शृतेन श्रपणस्यानुग्रहो भवत्विति युज्यते । श्रुतिवाक्यार्थविकल्पसम्भवे श्रुत्यर्थ एव क्रियते, न वाक्यार्थः, अर्थाविप्रकर्षात् । ननु च शृतेनेत्यपि तृतीयान्तमेव । तत्र यथा अरुणयैकहायन्या पिङ्गाक्ष्या सोमं क्रीणातीत्यारुण्यादयः स्वाश्रयमवच्छिन्दन्तः श्रुत्या क्रयेण संबध्यन्ते, तथा श्रपणमपि श्रुत्यैव भोजने न संपत्स्यत इति विषम उपन्यासः । तत्र ह्यरुणयैकहायन्या पिङ्गाक्ष्येति प्रशस्तगवीविषयाणि विशेषणान्येव श्रूयन्ते, न विशेष्यं शावलेयादि । ततश्च यैरेवासाधारणविशेषणैररुणादिभिर्नीलग्रीवत्रिलोचनार्धनारीश्वरादिभिरिव महेश्वरादिविशेष्यं शावलेयादि यदवगम्यते, नैव तेषां बाधो भवति । तदग्रहे तस्याग्रहणात् । नापि विकल्पः सम्मतानामेवावच्छेदनिमित्तत्वात् । इह तूभयं श्रूयते, विशेष्यं विशेषणं च पयसेति विशेष्यं, शृतेनेति विशेषणं, विशेषणविशेष्ययोश्च विकल्पसंभवे विशेष्यमेवोपादीयते, न विशेषणमिति मूर्धैवोपालब्धाः स्मः । अपि च द्विविध इहानुष्ठेयः शब्दार्थः, दृष्टविषयोऽदृष्टविषयश्च । तत्रादृष्टविषये यथोक्ताकरणेन माभूद्विफल इति निवापाञ्जलिप्रदानवदन्यूनाधिक एव अनुष्ठीयते । दृष्टविषये पुनरदृष्टनियमाभावेन शक्यते शक्तिवल्लङ्घयितुं, तत्र नायं नियमो यदुत शृतेनैव पयसा भोक्तव्यं इति, नचाशृतेन पयसा भुजिक्रिया न निर्वर्तते । न च निर्वृत्तात्फलं न निवर्तयति । तस्मादशृतमपि पय एवोपादीयते । न तु शृतमप्युदकादीति ॥

ननु च लिङ्गेनापि श्रुतिबाधो दृश्यते । तद्यथा—पच्यतां पिष्यतामवहन्यतामतिथिरायात इति । अत्र हि पाकपेषणावघाताः श्रुत्यातिथिविषयतयोपस्थापिताः लिङ्गेन पाकपेषणावघाता व्रीह्यादिविषयतयोपस्थाप्यन्ते । अत्रापि भ्रमः, कामं पुनरिहातिथिविषयां श्रुतिमायुष्मान्मन्यते पच्यतामतिथिरायात इति । तत्र यदि पूर्वानुसरम्यातिविषयो वक्तव्यः । अथोत्तरां कथमाम्रपाकादयोऽतिथिविषया इति किं ब्रवीषि ? अतिथिविशेषणानुकारिण्यैकवाक्यभ्रान्तिकारिणा आयात इति पदेन विप्रलब्धोऽसि । नियदिदं ते, यतोऽत्रापि श्रुत्यर्थमपि नावबुध्यसे । श्रुतिर्हि नामानेकपदनिबन्धन एव शब्दविषयो विभ्यादिरर्थः । स च स्वार्थसिद्धये कर्मकरणकर्त्रधिकरणादिकं यदाक्षिपति स सर्वः श्रुत्यर्थो भवति । तद्यथा—अवहन्यतामित्युक्ते व्रीह्यादि । वर्षतीत्युक्ते देवादि । सूर्य उदेतीत्युक्ते प्राच्यादि । तत्र द्रव्यमेव न गुणः । स स्वर्थसामर्थ्यात् सन्निहितोऽपि श्रुतिपदानाक्षिप्त श्रुताद्यणादिशब्दसन्निधाने व्यापारवान्प्रतीयत इति यत्नान्तरप्रापितत्वाच्छ्रुत्यर्थविलक्षणो वाक्यार्थविषयतया क्रियाङ्गभावमनुभवति, तदुक्तम् ॥

सामर्थ्यप्रापितं यत्र वाक्यार्थमनुपश्यते । श्रुतिरेवानुषङ्गे सा बाधिका लिङ्गवाक्ययोः ॥

अनाक्षिप्तोरुणादिर्यः सन्निधानेन गम्यते। श्रवणप्रापितो वाक्ये श्रुतिधर्मविलक्षणः ॥ इति ॥

एतेन लिङ्गाद्यनुपात्तयापि श्रुत्या लिङ्गादिबाधो व्याख्यातः। तद्यथा—

यथाश्रुतं वेदविदां वर त्वया जनोऽयमुच्चैःपदलङ्घनोत्सुकः।
तपःकिलेदं तदवाप्तिसाधनं मनोरथानामगतिर्न विद्यते ॥

यथा वा—

अलं विवादेन यथाश्रुतस्त्वया तथाविधस्तावदशेषमस्तु सः।
ममात्र भावैकरस मनः स्थितं न कामवृत्तिर्वचनीयमीक्षते ॥

श्रुत्यर्थपाठस्थानमुख्यप्रवृत्त्यादिभिः पदार्थानां यागादिकर्मसु परिपाट्यावस्थापनं श्रुत्यादिक्रमः। तत्र श्रुतिक्रमो यथा—अध्वर्युर्गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयति। अर्थक्रमो यथा—अग्निहोत्रं जुहोति, यवागूं पचति। पाठक्रमो यथा—धर्मार्थकामानां समवाये पूर्वः पूर्वो गरीयान्। स्थानक्रमो यथा—भूर्भुवः स्वर्लोकांस्तर्पयति। मुख्यक्रमो यथा—देवानृषीन्मनुष्यानर्चयति। प्रवृत्तिक्रमो यथा—प्राग्वदनोऽघमर्षणानि जपति। एषामन्योन्यसङ्करः क्रमसम्भेदः। तत्र श्रौतार्थक्रमसङ्करो यथा—

प्रथममरुणच्छायस्तावत्ततः कनकप्रभ स्तदनुविरहोत्ताम्यत्तन्वीकपोलतलद्युतिः।
प्रभवति पुनर्ध्वान्तध्वंसक्षमः क्षणदामुखे सरसबिसिनीकन्दच्छेदच्छविर्मृगलाञ्छनः ॥

स्थापनार्थसङ्करो यथा—

स्थिताःक्षणं पक्ष्मसु ताडिताधराः पयोधरोत्सेधनिपातचूर्णिताः।
वलीषु तस्याः स्खलिताः प्रपेदिरे चिरेण नाभिप्रथमोदबिन्दवः ॥

पाठस्थानसङ्करो यथा—

हरकण्ठवक्त्रश्रोत्रेषु कस्य नावस्थितं तव। श्रीकण्ठहारकर्पूरदन्तपत्रप्रभं यशः ॥

श्रौतार्थप्रवर्तितसङ्करो यथा—

प्रथमं कलाभवद् थार्धमथो हिमदीधितिर्महदभूदुदितः।
दधति स्फुटं क्रमश एव न तु प्रथितौजसापि सहसोपचयम् ॥

श्रौतार्थपाठसङ्करो यथा—

क्वाप्यस्ताद्रिदरीषु पूष्णि पतिते सान्ध्ये च धाम्नि क्रमात्
किञ्चित्किञ्चिदुदञ्चति प्रतिकलं मन्दासु दृक्पंक्तिषु।

एताः पक्वपरूपकच्छविमुषः पूर्वं ततस्तायता
जायन्ते तमसा दिशः परिणमज्जम्बूफलश्यामलाः ॥

श्रौतार्थमुख्यसङ्करो यथा--

श्रुत्वा यं सहसा पुरं निजपुरात्त्रासेन निर्गच्छतां
शत्रूणामवरोधनैर्जललवप्रस्यन्दितिम्यत्पुटाः ।
शुभ्रे सद्मनि पल्लविन्युपवने वाप्यां नवाम्भोरुहि
क्रीडाद्रौ च सशाद्वले विवलितग्रीवैर्विमुक्ता दृशः ॥

श्रौतार्थस्थानमुख्यसङ्करो यथा—

आयाते दयिते मरुस्थलभुवां सञ्चिन्त्य दुर्लङ्घतां
गेहिन्या परितोषबाष्पतरलामासज्य दृष्टिं मुखे ।
दत्वा पीलुशमीकरीरकवलान्स्वेनाञ्चलेनादरात्
उन्मृष्टं करभस्य केसरजटाभाराग्रलग्नं रजः ॥

श्रौतार्थपाठप्रवृत्तिसङ्करो यथा--

दृष्टे लोचनवन्मनाक् मुकुलितं पार्श्वस्थिते वक्त्रव
न्न्यग्भूतं बहिरासितं पुलकवत्स्पर्शं समातन्वति ।
नीवीबन्धवदागतं शिथिलतां संभाषमाणे ततो
मानेनापसृतं ह्रियेव सुदृशः पादस्पृशि प्रेयसि ॥

आदिग्रहणाद्विप्रकर्षादिभिरपि श्रुत्यादिक्रमसंभेदो यथा—

चयस्त्विषामित्यवधारितं पुरा ततः शरीरीति विभाविताकृतिम् ।
विभुर्विभक्तावयवं पुमानिति क्रमादमुं नारद इत्यबोधि सः ॥

प्राधान्यादिभिरपि यथा—

कम्पेन मूर्ध्नः शतपत्रयोनिं वाचा हरिं वृत्रहणं स्मितेन ।
आलोकमात्रेण सुरानशेषान् संभावयामास यथाप्रधानम् ॥

औचित्यादिभिरपि यथा--

दुर्जातबन्धुरयमृक्षहरीश्वरो मे पौलस्त्य एष समरेषु पुरः प्रहर्ता ।
इत्यादरेण कथितौ रघुनन्दनेन व्युत्क्रम्य लक्ष्मणमुभौ भरतो ववन्दे ॥

वयःश्रुतादिभिरपि यथा—

मूर्ध्ना जाम्बवतोऽभिवाद्य चरणावापृच्छ्य सेनापती
नाश्वास्याश्रुमुखान्मुहुः प्रियसखान्प्रेष्यान्समादिश्य च ।
आरम्भं जगृहे महेन्द्रशिखरादम्भोनिधेर्लङ्घने
रंहस्वी रघुनाथपादरजसामुच्चैः स्मरन्मारुतिः ॥

तदेवमेते ये पुरस्तादुपवर्णिताः ये चैवं प्रकाराः समाहारेतरेतरयोगैक शेषाभ्वाचाद्यो वाक्यगतानां पदार्थानामनुग्राहिणो धर्मास्ते सर्वेऽप्यविद्यमानोद्देशविभागेन एकेन वाक्याख्येन शब्देनाभिधीयमानेऽवयवाभावादनवेध्याप्य(स्य)शक्तिमात्रपरिग्रहे क्रियात्मन्येव केवले प्रतिज्ञायमाने न संभवन्ति । तस्मात्प्रविभक्तरूपाणामप्यव्यभिचरितावधिविभागानां चतुर्णां पञ्चानां वा पदजातानां सङ्कीर्णैर्वाच्यधोत्यगमनीयैरर्थैर्भवितव्यमिति यस्याप्येकः सन्निविष्टानेकशक्तिरूपसर्वोपाधिविशिष्टः क्रियात्मा व्यावहारिकाभ्यां प्रकल्पितोद्देशविभागेनैकेन वाक्याख्येन शब्देनाभिधीयते तस्यापि यावानयं पदश्रुतिरूपभेदेन पदार्थरूपभेदेन च व्यवहारः परस्तादुपन्यस्तः स सर्वं एकस्मादर्थाच्छब्दरूपाणि बुद्ध्यन्तरैः कृतप्रविभागाण्यपोद्धृत्यापोद्धृत्य प्रकृतिप्रत्ययादिवत् श्रुतिरूपप्रविभागे क्रियमाणे न विरुध्यते । तत्र च—

रूपनाशे पदानां स्यात्कथं चावधिकल्पना । अगृहीतावधौ शब्दे कथं चार्थो विविच्यते ॥
तथाहि भागे सादृश्यं भागे भेदोऽवसीयते । भागाभावेऽपि वाक्यानामत्यन्तं भिन्नधर्मणाम् ॥
एकस्य भागे सादृश्यं भागे भेदश्च लक्ष्यते । निर्भागस्य प्रकाशस्य निर्भागेनैव चेतसा ॥
अप्रसिद्धं तु यं भागमदृष्टमनुपश्यति । सर्वत्रासंविदं मूढस्तावति प्रतिपद्यते ॥
यतः पिकादियोगेन वाक्येऽत्यन्तविलक्षणे । सदृशस्येव संज्ञानमसतोऽर्थस्य मन्यते ॥
गवये नरसिंहे वाप्येकज्ञानावृते यथा । भागं जात्यन्तरस्यैव सदृशं प्रतिपद्यते ॥
यथैवैकस्य गन्धस्य भेदेन परिकल्पना । पुष्पादिषु तथा वाक्येऽप्यर्थभेदस्य कल्पना ॥
अतोऽखण्डेऽपि वाक्यार्थे शक्तिभेदादपोद्धृते । वाक्यान्तरविभागेन यथोक्तं न विरुध्यते ॥

तस्माद्युक्तमेव पदगतदोषगुणनिरूपणमिति । तत्र पदवाक्यवाक्यार्थदोषेषु पददोषाः षोडश । असाधु, अप्रयुक्तं, कष्टं, अनर्थकं, अन्यार्थकं, अपुष्टार्थक, असमर्थ, अप्रतीतं, क्लिष्टं, गूढार्थं, नेयार्थं, सन्दिग्धं, विरुद्धं, अप्रयोजकं, देश्यं, ग्राम्यमिति । तेषु शब्दानुशासनविरुद्धमसाधु । यथा—

भूरिभारभराक्रान्ते बाधति स्कन्ध एष ते । न तथा बाधते स्कन्धो यथा बाधति बाधते ॥

कविभिरनिबद्धमप्रयुक्तम् । यथा—

कामचोकमथाःकेऽमी त्वामजिह्वायकीयिपन् ।
ससस्ति किंपचन्तीमे कम्वः शर्म्यं धरिष्यति ॥

श्रुतिविरसं कष्टम् । यथा—

वर्वर्ष्टि जलदो यत्र यत्र दर्धर्ष्टि चातकः। यत्राश्वकर्णः पोफुल्ति स कालो मामजिह्लदत् ॥

पादपूरणमात्रार्थमनर्थकम् । यथा—

बिभर्ति यश्च देहार्धे प्रियामिन्दुं च मूर्धनि। स वै देवः खलु त्वां हि पुनातु मदनान्तकः॥

रूढिच्युतमन्यार्थकं यथा—

ते दुःखमुच्चावचमावहन्ति ये प्रस्मरन्ति प्रियसङ्गमानाम् ।
अत्राङ्प्रपूर्वौ वहतिस्मृधातू स्वार्थे प्रयुक्तौ न च तत्र रूढिः ॥

तुच्छाभिधेयमपुष्टार्थम् । यथा—

शतार्धपञ्चांशभुजो द्वादशार्धार्धलोचनः । त्रिंशत्यर्धार्धमूर्धा वः पुनातु परमेश्वरः ॥

अवाचकमसमर्थं यथा—

जलं जलधरे क्षारमयं वर्षति वारिधिः । इदं बृंहितमश्वानां ककुम्मानेष हेषते ॥

शास्त्रमात्रप्रयुक्तमप्रतीतम्, यथा—

किं भाषितेन बहुना रूपस्कन्धस्य सन्ति ये न गुणाः ।
गुणनान्तरीयकं च प्रेमेति न तेऽस्त्युपालम्भः ॥

व्यवहितार्थप्रत्ययं क्लिष्टम् । यथा—

विजितात्मभवद्वेषिगुरुपादहतो जनः । हिमापहामित्रधरै र्व्याप्तं व्योमाभिनन्दति ॥

अप्रसिद्धप्रयुक्तं गूढार्थं, यथा—

सहस्रगोरिवानीकं भवतो दुस्सहं परैः। गोशब्दस्याक्षिवाचित्वादिहेन्द्रो हि सहस्रगुः ॥

सङ्केतकल्पिताभिधेयं नेयार्थम् । यथा—

सपदि पङ्क्तिविहङ्गमनामभृत्तनयसैन्यमुलूकजिना जितम् ।
अयमिहार्थमुलूकजमिन्द्रजिद्बलमनेन च दाशरथेर्जितम् ॥

अनिश्चयफलं सन्दिग्धम्, यथा—

स एव हि महादेव इत्युक्ते हि न निश्चितम्। विभावसुर्विवस्वान्वा वृषाङ्को वा प्रतीयते॥

विपरीतकल्पनं विरुद्धम्, यथा—

अकार्यसुहृदोऽस्माकमपूर्वास्तव कीर्तयः । इति स्तुत्यर्थमेतदत्तुल्यथं विकल्प्यते ॥

अविशेषाधायकमप्रयोजकम् । यथा—

तमालश्यामलं क्षारमत्यच्छमतिफेनिलम् । बलेन लङ्घयामास हनूमानेष सागरम् ॥

अव्युत्पत्तिमद्देश्यम्, यथा—

गल्लौ लावण्यतल्लौ ते लडहौ मडहौ भुजौ । नेत्रेविसट्टकं दोट्ट मोट्टायितसखेसखि ॥

अश्लीलामङ्गलघृणावदर्थं ग्राम्यम् । तत्रासभ्यमसभ्यार्थान्तरमसभ्यस्मृतिहेतुश्चाश्लीलम् । तत्रासभ्यं यथा—

छत्राकारशिराः सिरालसरलस्थूलप्रकाण्डो महान्
मध्ये सूर्यसुताभ्रसिन्धुविपुलाभोगो वटः पातु वः ।
कायैक्ये विकटप्रसारितमहाजङ्घं महीसुतयो-
र्यः खण्डेन्दुकिरीटकैटभजितोः कामश्रियं कर्षति ॥

असभ्यार्थान्तरं यथा—

विद्यामभ्यस्यतो रात्रावेति या या भवे(व)त्प्रिया । वनितागुह्यकेशानां कथं ते पेलवं ध(व)नम् ॥

असभ्यस्मृतिहेतुर्यथा—

उत्कम्पयसि मां चूत पिकवाक्काटवेन किम् । कृतं कृकाटिकायां ते पदं प्राणेन यास्यता ॥

अप्रशस्तमप्रशस्तार्थान्तरमप्रशस्तस्मृतिहेतुश्चामङ्गलार्थम् । तेष्वप्रशस्तं यथा—

खेटके भक्तयूपस्य वलभ्यां पत्तनस्य च । अतृप्तोऽहं मरिष्यामि हेहले भाषितस्य च ॥

अप्रशस्तार्थान्तरं यथा—

प्रवासयति या कान्तं वसन्ते गृहसंस्थितम् । विनाशपथदानेन पिशाची सा न साऽङ्गना ॥

अप्रशस्तस्मृतिहेतुर्यथा—

मारीचोऽयं मुनिर्यस्य कृत्या कालान्तकालये ।
पत्न्यः सङ्क्रन्दनादीनां सुतानामाप्तयेऽभवन् ॥

घृणावद्घृणावदर्थान्तरं घृणावत्स्मृतिहेतुश्च । घृणावदर्थं यथा—

पर्दते हदते स्तन्यं वमत्येष स्तनन्धयः । मुहुरुत्कौति निष्ठीवत्यार्त(त्त)गर्भा पुनर्वधूः ॥

घृणावदर्थान्तरं यथा—

बाष्पक्लिन्नाविमौ गण्डौ विपूयापाण्डरौ तव । प्रियोऽग्रे विष्ठितः पुत्रीस्मितवचोभिरर्चति ॥

घृणावत्स्मृतिहेतुर्यथा—

प्रत्याद्रियन्तो रूढानि मदनेषुव्रणानि नः । हृदयं क्लेदयन्त्येते पुरीषण्डमहाद्रुमाः ॥

वाक्यदोषाः षोडश, शब्दहीनं, पुनरुक्तिमत्, अपक्रमं, भिन्नवृत्तं, यतिभ्रष्टं, विसन्धि, व्याकीर्णं, सङ्कीर्णं, गर्भितं, अपदं, अशरीरं, ऊनोपमं, अधिकोपमं, भिन्नलिङ्गं, भिन्नवचनं, श्लेषा-द्विगुणविपरीतं, चेति । तेष्वपशब्दवच्छब्दहीनं यथा—

समुच्छ्वसत्पङ्कजकोशकोमलै रुपाहितश्रीण्युपनीविनाभिः ।
दधन्ति मध्येषु वलीविभङ्गिषु स्तनातिभारादुदराणि नम्रताम् ॥

अभिन्नपदपदार्थं पुनरुक्तिमद्यथा—

उत्कामुन्मनयन्त्येते गम्भीराः स्तनयित्नवः । अम्भोधरास्तटिद्वन्तो गम्भीराः स्तनयित्नवः ॥

क्रमभ्रष्टमपक्रमम् । यथा—

कान्तिप्रतापौ भवतः सूर्याचन्द्रमसोः समौ । तुरङ्गरथमातङ्गं प्रयच्छास्मै मदालसम् ॥

छन्दोभङ्गवद्भिन्नवृत्तं यथा—

यस्मिन्पञ्चपञ्चजना आकाशश्च प्रतिष्ठितः । तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः ॥

अस्थानविरतिर्यत्र तत् यतिभ्रष्टम् । यथा—

ब्रह्मेन्द्रोपेन्द्रादिगीर्वाणवन्द्यो भक्तानां भूयाच्छ्रिये चन्द्रचूडः ।
स्त्रीणां सङ्गीतं समाकर्णयन्केतूदस्ताम्भोदं सदोऽध्यास्त ईशः ॥

विसंहितं विरूपसन्धि च विसन्धि । यथा—

मेघानिलेन अमुना एतस्मिन्नद्रिकानने । मञ्जर्युद्गमगर्भासौ तर्वाल्युर्वी विधूयते ॥

विघटितविभक्ति व्याकीर्णम् । यथा—

दण्डे चुम्बति पद्मिन्या हंसः कर्कशकण्ठके । मुखं वल्गुरवं कुर्वन्तुण्डेनाङ्गानि घट्टयन् ॥

वाक्यान्तरपदव्यामिश्रं सङ्कीर्णम् । यथा—

काअंकाअइचुहि ओकरं खल्लेइ णिब्भरं रुट्ठो । सुणयि गल्लइ कंठे हकेइ अणत्तिअं थेरो ॥

वाक्यान्तरगर्भं गर्भितम् । यथा—

योग्यो यस्ते पुत्रः सोऽयं दशवदन लक्ष्मणेन मया ।
रक्षैनं यदि शक्तिर्मृत्युवशं नीयते त्रिदशः ॥

भिन्नभाषाप्रकृत्यादिकमपदम् । यथा—

आउज्झिअ चास्थिअए जह कुकुलिणा ममज्झभत्ताले ।
पेच्छंतहलाउलकंणिआहहा करस कं देमिं ॥

निष्क्रियमशरीर, यथा—

सेलसुआरुढद्धं दुद्धाणावद्धमुद्धससिलेहं । सीसपडिच्छिअगंगं संसापणअं पमहणाहं ॥

ऊनोपमानविशेषणमूनोपमम् । यथा—

संगअचक्काअजुआविअसिअकमळामुणाळसंछन्ना ।

वापीवहुव्वरोअण विलित्तथणआसुभावेइ ॥

अधिकोपमानविशेषणमधिकोपमम् । यथा—

अह्णिवमणहाविरइअवलअविहूसाविहाइणवबहुआ ।

कुंदलएव्वसमुप्पुळ्ळगुच्छपरिळेतभमरगणा ॥

भिन्नलिङ्गोपम भिन्नलिङ्गम् । यथा—

अविगाह्मोऽसि नारीणामनन्यमनसामपि । विषमोपलभिन्नोर्मिरापगेवोत्तितीर्षताम् ॥

भिन्नवचनोपमं भिन्नवचनम् । यथा—

सरांसीवामलं व्योम काशा इव सित. शशी । शशीव धवला हंसाः हंसीव धवला दिशः ॥

गुणविपर्ययस्त्रिधा । शब्दप्रधानः, अर्थप्रधानः, उभयप्रधानश्च । तत्र श्लेषसमतासौकुमार्य-विपर्ययः शब्दप्रधानः, तेषु श्लेषविपर्ययाच्छिथिल यथा—

आलीयं मालतीमाला लोलालिकलिला मनः । निर्मूलयति मे मूलात्तमालमलिने वने ॥

समताविपर्ययो विषमम् । यथा—

कोकिलालापवाचालोमामेति मलयानिलः । उच्चलच्छीकराच्छाच्छनिर्झराम्भ.कणोक्षितः ॥

सौकुमार्यविपर्ययोऽसुकुमारम् । यथा—

अधिकर्तुतुगद्रिच्छित्स्वः क्षितांपतिरदृिदृक् । अर्कभिःशुभ्रदग्दष्टैर्द्विपो जेघ्नायिषीष्ट वः ॥

प्रसादार्थव्यक्तिकान्तिविपर्ययोऽर्थप्रधानः । तेषु प्रसादविपर्ययोऽप्रसन्नम् । यथा—

लवङ्गकमलं चक्रे मयामानमरालिका । पश्यानंह्यर्जुनाब्जन्म सवृक्षाङ्कौ बलक्षगुः ॥

अर्थव्यक्तिविपर्ययो नेयार्थम् । यथा—

मही महावराहेण लोहितादुद्धृतोदधेः । इतीयत्येव निर्दिष्टे नेया लौहित्यहेतवः ॥

कान्तिविपर्ययो ग्राम्यम् । यथा—

कन्ये कामयमानं मां त्वं न कामयसे कथम् । इति ग्राम्योऽयमर्थोक्तिः वैरस्यायैव कल्पते ॥

ओजोमाधुर्यौदार्यविपर्यय उभयप्रधानः । तेष्वोजोविपर्ययः खण्डितरीतिरसमस्तं यथा—

स्मरः खरः खलः कान्तः कायः कोपश्च नः कृशः ।
च्युतो मानोऽधिको रागो मोहो जातोऽसवो गताः ॥

माधुर्यविपर्ययः खण्डितरीतिः अतिव्यूढम् । यथा—

नखिनां च नदीनां च शृङ्गिणां शस्त्रिणां तथा ।
विश्वासो नोपगन्तव्यः स्त्रीषु राजकुलेषु च ॥

औदार्यविपर्ययः खण्डितरीतिरनलङ्कारं । यथा—

दीर्घपुच्छश्चतुष्पादः ककुद्मान् लम्बकम्बलः । गोरपत्यं बलीवर्दस्तृणान्यत्ति मुखेन सः ॥

वाक्यार्थदोषा अपि षोडशैव । अपार्थं, व्यर्थं, एकार्थं, ससंशयं, अपक्रमं, खिन्नं, अतिमात्रं, परुषं, विरसं, न्यूनोपमं, अधिकोपमं, असदृशोपमं, अप्रसिद्धोपमं, निरलङ्कारं, अश्लीलं, विरुद्धं चेति । तेषु समुदायार्थहीनमपार्थम् । यथा—

जरद्गवः कम्बलपादुकाभ्यां द्वारि स्थितो गायति मङ्गलानि ।
तं ब्राह्मणी पृच्छति पुत्रकामा राजन्रुमायां लवणस्य कोऽर्घः ।

निष्प्रयोजनं गतार्थं च व्यर्थम् । यथा—

आहिषातां रघुव्याघ्रौ शरभङ्गाश्रमं स च। अहौषीत्स्वतनुं वह्नौ दृष्ट्वाप्तौ रामलक्ष्मणौ ॥

उक्तामिन्नार्थमेकार्थम् । यथा—

प्रसाधितस्याथ मधुद्विषोऽभूदन्यैव लक्ष्मीरिति युक्तमेतत् ।
वपुष्यशेषेऽखिललोककान्ता सानन्यकान्ताह्युरसीतरा तु ॥

इत्युक्तार्थमेवाह—

कवाटविस्तीर्णमनोरमोरःस्थलस्थितश्रीललनस्य तस्य ।
आनन्दिताशेषजना बभूव सर्वाङ्गसङ्गिन्यपरैव लक्ष्मीः ॥

अनिश्चयकृत्ससंशयम् । यथा—

मनोरथप्रियालोकरसलोलेक्षणे सखि । आराद्वृत्तिरियं माता न क्षमा द्रष्टुमीदृशम् ॥

क्रमच्युतमपक्रमम् । यथा—

काराविऊण खउरु गामउडो मज्जिओ अ जिमिओ अ ।
णक्खत्तं तिहिवारं जोइसिअं पुच्छिउं चलिओ ॥

जात्याद्युक्तावनिर्व्यूढं खिन्नम् । यथा—

वेवाहिऊणबहुआ साअरअंदोलिआए णिज्जंती । रोअइ दि अरो तस्सिं नेच्छइ वासेण पच्चंतो ॥

लोकातीतार्थमतिमात्रम् । यथा—

भृङ्गेण कलिकाकोशस्तथा भृशमपीड्यत । ववर्ष विपिनोत्सङ्गे गोष्पदप्रं यथा मधु ॥

अतिक्रूरार्थं परुषम् । यथा—

खाहिविसंमुत्तं पिव णिज्झसु मारीएवउउदेवज्झो ।
दंतक्खंडिअथणिआ खिविऊणसुअं वइमाआ ॥

अप्रकृतरसं विरसम् । यथा—

तव वनवासोऽनुचितः पितृमरणशुचं जहीहि किं तपसा ।
सफलय यौवनमेतत्सन्वनुरक्तेन सुतनु मया ॥

हीनोपमान हीनोपमम् । यथा—

क्वचिदग्रे प्रसरता क्वचिदापत्य निघ्नता । शुनेव सारङ्गकुलं त्वया भिन्नं द्विषां बलम् ॥

अधिकोपमानमधिकोपमम् । यथा—

अयं पद्मासनासीन श्चक्रवाको विराजते । युगादौ भगवान्ब्रह्मा विनिर्मित्सुरिव प्रजाः ॥

अतुल्योपमानमसदृशोपमम् । यथा—

णमह हरं रोसाणलणिद्दड्ढविअद्धवम्महसरीरम् ।
वित्थअणिअंवणिअंवणिग्गअगंगासोत्तं व हिमवंतम् ॥

अप्रसिद्धोपमानमप्रसिद्धोपमम् । यथा—

कुमुदमिव मुखं तस्या गौरिव महिषः शशीव काव्यमिदम् ।
शरदिव विभाति तरुणी विकसितपुलकोत्करेयमिति ॥

अलङ्कारहीनं निरलङ्कारम् । यथा—

कोलाघणंति मोत्था निद्धाखाअंति मअअमंसाइं ।
उलुआहरंतिकाए कायाउलुएपिहोहंति ॥

असभ्यार्थमश्लीलम् । यथा—

उद्यतस्य परं हन्तुं स्तब्धस्य विवरैषिणः । पतनं जायतेऽवश्यं कृच्छ्रेण पुनरुन्नतिः ॥

विरोधस्त्रिधा—प्रत्यक्षविरोधोऽनुमानविरोध आगमविरोधश्च । तत्र देशकाललोकादिप्रतीतः प्रत्यक्षविरोधः । तेषु देशविरुद्धं यथा—

सुराष्ट्रेष्वस्ति नगरी मधुरा नाम विश्रुता । अक्षेयनारिकेलाङ्का यस्याः पर्यन्तभूमयः ॥

कालविरुद्धं यथा—

पद्मिनी नक्तमुन्निद्रा स्फुटत्यह्नि कुमुद्वती । मधुरुत्फुल्लनिचुलो निदाघो मेघदुर्दिनः ॥

लोकविरुद्धं यथा—

आधूतकेसरो हस्ती तीक्ष्णशृङ्गस्तुरङ्गमः । गुरुसारोऽयमेरण्डो निरसारः खदिरद्रुमः ॥

युक्त्यौचित्यप्रतिज्ञादिकृतोऽनुमानविरोधः । तत्र युक्तिविरुद्धं यथा—

सुरहिमहुपाणलंपडभमरगणाबद्धमंडलीबद्धम् । कस्य मणं णाणंदइ कम्मपट्टङ्किअं कमलम् ॥

औचित्यविरुद्धं यथा—

पट्टं सडत्तरिज्जे णपामरोपामरीए वरिमुसइ । अइगरुअकुच(कूर)कुंभीभरेणसेओल्लिअं बअणम् ॥

प्रतिज्ञाविरुद्धं यथा—

यावज्जीवमहं मौनी ब्रह्मचारी च मे पिता । माता च मम वन्ध्यासी त्स्मराभोऽनुपमो भवान् ॥

धर्मार्थकामादिशास्त्रकृत आगमविरोधः । तत्र धर्मशास्त्रविरुद्धं यथा—

असावनुपनीतोऽपि वेदानधिजगे गुरोः । स्वभावशुद्धः स्फटिको न संस्कारमपेक्षते ॥

अर्थशास्त्रविरुद्धं यथा—

कामोपभोगसाफल्यफलो राज्ञां महीजयः । अहङ्कारेण जीयन्ते द्विषन्तः किं नयश्रिया ॥

कामशास्त्रविरुद्धं कलाशास्त्रविरुद्धं कामविरुद्धम् । यथा—

तवोत्तरोष्टे बिम्बोष्टि दशनाङ्को ऽभिशोभते । पूर्णसप्तस्वरः सोऽयं भिन्नमार्गः प्रवर्तते ॥

निर्दोषस्य च काव्यस्य शरीरवस्तुनः कामनीयकोपपत्तावयमुपाय, यद्गुणोपादानमलङ्कारयोगश्च । यदाह—

युवतेरिव रूपमङ्ग काव्यं स्वदते शुद्धगुणं तदप्यतीव ।
विहितप्रणयं निरन्तराभिः सदलङ्कारविकल्पकल्पनाभिः ॥

तत्र च गुणोपादानालङ्कारयोगयोर्गुणोपादानं गरीयः । अतस्तदेव प्रथममुच्यते । यदाह—

यदि भवति वचश्च्युतं गुणेभ्यो वपुरिव यौवनवर्ज्यमङ्गनायाः ।
अपि जनदयितानि दुर्भगत्वं नियतमलङ्करणानि संश्रयन्ते ॥

अयमेव च गुणालङ्कारयोर्विशेषो यद्गुणोपादाने नियमोऽलङ्कारयोगे तु कामचार इति गुणाश्च युवत्याः शरीरेषु त्रिविधास्तदर्थिनामादरातिशयहेतवो भवन्ति बाह्या आन्तरा वैशेषिकाश्च । तत्र वयावयवयोरूपलावण्यादयो बाह्याः शीलवैदग्ध्यमाहाभाग्यसौभाग्यादयश्चान्तराः । ये तु दोषा अप्यार्श्रयविशेषादुपाधेर्गुणत्वमाश्रीयन्ते ते वैशेषिकाः । यथोच्यते—

सामण्णसुन्दरीणं विब्भममावहइ अविणओच्चेअ ।
धूमोच्चिअपज्जलिआहिवहुमओसरहिदाकुणा ॥

काव्यशरीरेऽपि ते त्रिधैव, तत्र बाह्याः शब्दगुणाः । तेऽन्वयादिवत् बाह्यत्वेनावभासन्ते । आन्तरा अर्थगुणास्ते सौशील्यादिवद्विमर्शेन ज्ञायन्ते । वैशेषिका दोषगुणाः, ते हि प्रमातृविशेषाद्युपाधेर्दोषा अपि गुणत्वेन व्याख्यायन्त इति । तत्र शब्दगुणाश्चतुर्विंशतिः; श्लेषः, प्रसादः, समता, माधुर्यं, सौकुमार्यं, अर्थव्यक्तिः, कान्तिः, उदारता, उदात्तत्वं, ओजः, और्जित्यं, प्रेयः, सुशब्दता, समाधिः, सौक्ष्म्यं, गाम्भीर्यं, विस्तरः, संक्षेपः, संमितत्वं, भाविकत्वं, गतिः, रीतिः, उक्तिः, प्रौढिरिति । तेषु सुश्लिष्टपदता श्लेषः । यथा—

उभौ यदि व्योम्नि पृथक्प्रवाहावाकाशगङ्गापयसः पतेताम् ।
तेनोपमीयेत तमालनीलमामुक्तमुक्तालतमस्य वक्षः ॥

प्रसिद्धार्थपदता प्रसादः । यथा—

गाहन्तां महिषा निपानसलिलं शृङ्गैर्मुहुस्ताडितं
छायाबद्धकदम्बकं मृगकुलं रोमन्थमभ्यस्यतु ।
विस्रब्धैः क्रियतां वराहततिभिर्मुस्ताक्षतिः पल्वले
विश्रामं लभतामिदं च शिथिलज्याबन्धमस्मद्धनुः ॥

मृदुस्फुटोन्मिश्रवर्णबन्धानामवैषम्यं समता । यथा—

यच्चन्द्रकोटिकरकोरककहारभाजि बभ्राम बभ्रुणि जटापटले हरस्य ।
तद्वः पुनातु हिमशैलशिलानिकुञ्जझाङ्कारडम्बरविराविसुरापगाम्भः ॥

पृथक्पदता माधुर्यं । यथा —

स्थिताः क्षणं पक्ष्मसु ताडिताधराः पयोधरोत्सेधनिपातचूर्णिताः ।
वलीषु तस्याः स्खलिताः प्रपेदिरे चिरेण नाभिं प्रथमोदबिन्दवः ॥

अनिष्ठुराक्षरप्रायता सौकुमार्यम् । यथा—

मण्डलीकृत्य बर्हाणि कण्ठैर्मधुरगीतिभिः । कलापिनः प्रनृत्यन्ति काले जीमूतमालिनि ॥

सम्पूर्णवाक्यत्वमर्थव्यक्तिः । यथा—

वागर्थाविव सम्पृक्तौ वागर्थप्रतिपत्तये । जगतः पितरौ वन्दे पार्वतीपरमेश्वरौ ॥

बन्धोज्ज्वलता कान्तिः । यथा—

निरानन्दे कौन्दे मधुनि विधुरो बालबकुले न साले सालम्बो लवमपि लवङ्गे न रमते।
प्रियङ्गौ नासङ्गं रचयति न चूते विचरति स्मरल्लँक्ष्मीलीलकमलमधुपानं मधुकरः॥

बन्धविकटत्वमुदारता। यथा—

आरोहत्यवनीरुहान् प्रविशति श्वभ्रं नगैः स्पर्धते
खं व्यालेढि विवेष्टते क्षितितले कुञ्जोदरे लीयते।
अन्तर्भ्राम्यति कोटरस्य विसरत्यालम्बते वीरुधः
किं तद्यन्न करोति मारुतवशं यातः कृशानुर्वने॥

श्लाघ्यविशेषणयोग उदात्तत्वम्। यथा—

श्रुत्वा यं सहसाऽऽगतं निजपुरात्त्रासेन निर्गच्छतां
शत्रूणामवरोधनै र्जलल्लवप्रस्यन्दतिम्यत्पुटाः।
श्वभ्रे सद्मनि पल्लविन्युपवने वाप्यां नवाम्भोरुहि
क्रीडाद्रौ च मनोहरे विवलितग्रीवै र्विमुक्ता दृशः॥

समासभूयस्त्वमोजः। यथा—

जयति भुजगरज्जुग्रन्थिनिष्पीडितेन्दुस्रवदमृतनिवृत्तप्रेतभावैः कपालैः।
विरचितनुतिबन्धो मूर्ध्नि सद्यः पुरारेः परिणतबहुकल्पब्रह्मणां ब्रह्मघोषः॥

बन्धगाढत्वमौर्जित्यम्। यथा—

अश्मिन्नीषद्वलितविततस्तोकविच्छिन्नभुग्नः
किञ्चिल्लीनोपचितविनतः पुञ्जितश्चार्थितश्च।
धूमोद्गारस्तरुणमहिषस्कन्धनीलो दवाग्नेः
स्वैरं सर्पन् सृजति गगने गत्वरान्पत्रभङ्गान्॥

वार्ताभिधानवर्णनादौ मनःप्रियार्थोपाख्यानं प्रेयः। यथा—

सौजन्याम्बुनिधे बुधप्रिय गुणप्राकार धर्मद्रुम-
प्रारोह प्रतिपन्नवत्सल महात्यागिन् विवेकाश्रय।
लक्ष्म्यावास मनस्विनीमनसिजव्यापारलीलागुरो
श्रीमन्मुञ्ज किमित्यमुं जनमुपस्रष्टुं दृशा नार्हसि॥

सुप्तिङ्व्युत्पत्तिः सुशब्दता । यथा—

तस्या जीवनिरस्तु मातरवमा जीवस्य माजीवतो
भूयाद्वा जननिः किमम्ब जनिना जन्तोर्वृथा जन्मनः ।
यस्त्वामेव न वन्दते न यजते नोपैति नालोकते
नोपस्तौति न मन्यते न मनुते नाध्येति नो ध्यायति ॥

अन्यधर्मस्यान्यत्रारोपणं समाधिः । यथा—

प्रतीच्छत्याशोकीं किसलयपरावृत्तिमधरं कपोलं पाण्डुत्वादवतरति तालीपरिणतिम् ।
परिम्लानप्रायामनुवदति दृष्टिः कमलिनीं न पीनस्तन्वङ्ग्या मनसिजविकारो विजयते ॥

शब्दानामन्तःसञ्जल्परूपता सौक्ष्म्यम् । यथा—

केवलं दधति कर्तृवाचिनः प्रत्ययानिह न जातु कर्मणि ।
धातवः सृजतिसंहृशास्तयः स्तौतिरत्र विपरीतकारके ॥

ध्वनिमत्ता गाम्भीर्यम् । यथा—

मौलौ धारय पुण्डरीकममितं तन्वात्मनो विक्रमं
चक्राङ्कं वह पादयुग्ममवनीं दोष्णा समभ्युद्धर ।
लक्ष्मीं भूनिकटे निवेशय भवज्यायान्दिवौकस्पते
विश्वान्तःकरणैकचौर तदपिज्ञातो हरिः खल्वसि ॥

व्यासाभिधानं विस्तरः । यथा—

जनः पुण्यैर्यायाज्जलधिजलभावं जलमुचः तथावस्थं चैनं विदधतु शुभैः शुक्तिवदने ।
ततस्तां श्रेयोभिः परिणतिमसौ विन्दति यया रुचिं तन्वन् पीनस्तनि हृदि तवायं विलुठति ॥

समासाभिधानं संक्षेपः । यथा—

स मारुतिसमानीतमहौषधिहतव्यथः । लङ्कास्त्रीणां पुनश्चक्रे विलापाचार्यकं शरैः ॥

यावदर्थपदता संमितत्वम् । यथा—

केचिद्वस्तुनि नो वाचि केचिद्वाचि न वस्तुनि ।
वाचि वस्तुनि चाप्यन्ये नान्ये वाचि न वस्तुनि ॥

भावतो वाक्यवृत्तिर्भाविकत्वम् । यथा—

एह्येहि वत्स रघुनन्दन रामचन्द्र चुम्बामि मूर्धनि चिराय परिष्वजे त्वाम् ।
आरोप्य वा हृदि दिवानिशमुद्वहामि वन्देऽथवा चरणपुष्करकद्वयं ते ॥

आरोहावरोहक्रमो गतिः । यथा—

वराहः कल्याणं वितरतु स मे यस्य शशभृत्कलाकोटीकान्तं क्रमविगलदभ्युद्धृतिभयात् ।
मिथस्संमूर्च्छद्भिश्चतुरुदधिकल्लोलपटलैरनामृष्टं दंष्ट्राशिखरमधिशेते वसुमती ॥

उपक्रमाभेदो रीतिः । यथा—

ग्राव्णा नासि गिरेः क्षता न वयसा नार्तासि न ग्लायिता
न श्वासैः फणिनोऽसि न त्वदनुगा नायासिताकायिनः ।
संवेश्मप्रतिगच्छतोरिति मुहुः श्रीशार्ङ्गिणोः सस्पृहं
सा प्रश्नोत्तरयुग्मपङ्क्तिरुभयोरत्यायता पातु वः ॥

भणितिविशेष उक्तिः । यथा—

कुशलं तस्या जीवति कुशलं पृच्छामि जीवतीत्युक्तम् ।
पुनरपि तदेव कथयसि मृतां नु कथयामि या श्वसिति ॥

उक्तिपरिपाकः प्रौढिः । यथा—

अभ्युद्धृता वसुमती दलितं रिपूरः क्षिप्तक्रमं कबलिता रिपुराजलक्ष्मीः ।
अत्रैव जन्मनि कृतं तदनेन यूना जन्मत्रये यदकरोत्पुरुषः पुराणः ॥

अर्थगुणा अप्येत एव चतुर्विंशतिः तेषु सविधानसत्रता श्लेषः । यथा—

दृष्ट्वैकासनसङ्गते प्रियतमे पश्चादुपेत्यादरादेकस्या नयने पिधाय विहितक्रीडानुबन्धच्छलः ।
ईषद्वक्रितकन्धरः स पुलकप्रेमोल्लसन्मानसामन्तर्हासलसत्कपोलफलकां धूर्तोऽपरां चुम्बति ॥

अर्थस्य प्राकट्यं प्रसादः । यथा—

अयमुदयति मुद्राभञ्जनः पद्मिनीनामुदयगिरिवनालीबालमन्दारपुष्पम् ।
विरहविधुरकोकद्वन्द्वबन्धुर्विभिन्दन् कुपितकपिकपोलक्रोडताम्रस्तमांसि ॥

क्रमवतामवैषम्यं समता । यथा—

अग्रे स्त्रीनखपाटलं कुरवकं श्यामं द्वयोर्भागयो-
र्बालाशोकमुपोढरागसुभगं भेदोन्मुखं तिष्ठति ।

ईषद्बद्धरजःकणाग्रकपिशा चूते नवा मञ्जरी
मुग्धत्वस्य च यौवनस्य च सखे मध्ये मधुश्रीःस्थिता ॥

क्रोधादावप्यतीव्रता माधुर्यम् । यथा—

भ्रूभेदे सहसोद्गतेऽपि वदनं नीतं परां नम्रता
मीषन्मां प्रति भेदकारि हसितं नोक्तं वचो निष्ठुरम् ।
अन्तर्बाष्पजडीकृतं प्रभुतया चक्षुर्न विस्फारितं
कोपश्च प्रकटीकृतो दयितया मुक्तश्च न प्रश्रयः ॥

अनिष्ठुरता सौकुमार्यम् । यथा—

सद्यः पुरीपरिसरेषु शिरीषमृद्वी गत्वा जवात्त्रिचतुराणि पदानि सीता ।
गन्तव्यमद्य कियदित्यसकृद्ब्रुवाणा रामाश्रुणः कृतवती प्रथमावतारम् ॥

स्वरूपाभिधानमर्थव्यक्तिः । यथा—

पृष्ठेषु शङ्खशकलच्छविषु च्छदानां राजीभिरङ्कितमलक्तकलोहिताभिः ।
गोरोचनाहरितबभ्रुबहिःपलाशमामोदते कुमुदमम्भसि पल्वलस्य ॥

दीप्तरसत्वं कान्तिः । यथा—

मा गर्वमुद्वह कपोलतले चकास्ति कान्त स्वहस्तलिखिता मम मञ्जरीति ।
अन्यापि किं सखि न भाजनमीदृशानां वैरी न चेद्भवति वेपथुरन्तरायः ॥

विभावोत्कर्ष उदारता । यथा—

प्राणानामनिलेषु वृत्तिरुचिता सत्कल्पवृक्षे वने
तोये काञ्चनपद्मरेणुकपिशे पुण्याभिषेकक्रिया ।
ध्यानं रत्नशिलागृहेषु विबुधस्त्रीसन्निधौ संयमो
यद्वाञ्छन्ति तपोभि रन्यमुनयस्तस्मिंस्तपस्यन्त्यमी ॥

आशयोत्कर्ष उदात्तत्वम् । यथा—

पार्श्वे पुरोवर्तिनि विश्वनाथे क्षोदीयसि क्ष्मावलये च देये ।
व्रीडास्मितं तस्य तदा तदासीच्चमत्कृतो येन स एव देवः ॥

अर्थाध्यवसायविशेष ओजः । यथा—

तान्येव यदि भूतानि ता एव यदि शक्तयः । ततः परशुरामस्य न प्रतीमः पराभवम् ॥

रूढाहङ्कारतौर्जित्यम् । यथा—

उमा वधूर्भवान्दाता याचितार इमे वयम् । वरः शम्भुरलं ह्येव त्वत्कुलोद्भूतये विधिः ॥

अर्थस्याभीष्टता प्रेयः । यथा—

रसवदमृतं कस्सन्देहो मधून्यपि नान्यथा मधुरमधिकं चूतस्यापि प्रपन्नरसं फलम् ।
सकृदपि पुनर्मध्यस्थस्सन्रसान्तरविज्जनो वदतु यदिहान्यत्स्वादु स्यात्प्रियादशनच्छदात् ॥

दारुणार्थस्यादारुणार्थपर्यायस्वशब्दता । यथा—

देवव्रते वाञ्छति दीर्घनिद्रां द्रोणे च कर्णे च यशोऽवशेषे ।
लक्ष्मीसहायस्य तवाद्य वत्स वात्सल्यवान्द्रौणिरयं सहायः ॥

व्याजावलम्बनं समाधिः । यथा—

दर्भाङ्कुरेण चरणः क्षत इत्यकाण्डे तन्वी स्थिता कतिचिदेव पदानि गत्वा ।
आसीद्विवृत्तवदना च विमोचयन्ती शाखासु वल्कलमसक्तमपि द्रुमाणाम् ॥

सूक्ष्मार्थदृष्टिः सौक्ष्म्यम् । यथा—

अन्योन्यसंवलितमांसलदन्तकान्ति सोल्लासमाविरलसंवलितार्धतारम् ।
लीलागृहे प्रतिकलं किलिकिञ्चितेषु व्यावर्तमानविनय मिथुनं चकास्ति ॥

शास्त्रार्थसव्यपेक्षता गाम्भीर्यम् । यथा—

मैत्र्यादिचित्तपरिकर्मविदो विधाय क्लेशप्रहाणमिह लब्धसबीजयोगाः ।
ख्यातिं च सत्त्वपुरुषान्यतयाधिगम्य वाञ्छन्ति तामपि समाधिभृतो निरोद्धुम् ॥

अर्थविकासो विस्तरः । यथा—

संग्रामाङ्गणसङ्गतेन भवता चापे समारोपिते देवाकर्णय येन येन सहसा यद्यत्समासादितम् ।
कोदण्डेन शराश्शरैररिशिरस्तेनापि भूमण्डलं
तेन त्वं भवता च कीर्तिरतुला कीर्त्या च सताध्वयः ॥

अर्थसङ्कोचः सङ्क्षेपः । यथा—

श्रूयतां धर्मसर्वस्वं श्रुत्वा चैवावधार्यताम् । आत्मनः प्रतिकूलानि परेषां न समाचरेत् ॥

तुल्यत्वेनार्थप्रविभागः सम्मितत्वम् । यथा—

इन्दुर्मूर्ध्नि शिवस्य शैलदुहितुर्वक्षो नखाङ्कस्स्तने
देयाद्वोऽभ्युदयं द्वयं तदुपमामालम्बमानं मिथः ।

संवादः प्रणवेन यस्य दलता कार्यैकतायां तयो-
रूर्ध्वद्वारविचिन्तितेन च हृदि ध्यातः स्वरूपेण च ॥

साभिप्रायोक्तिर्भाविकत्वम् । यथा—

दृष्टिं हे प्रतिवेशिनि क्षणमिहाप्यस्मद्गृहे दास्यसि
प्रायेणास्य शिशोः पिता न विरसाः कौपीरपः पास्यति ।
एकाकिन्यपि यामि तद्वरमितः स्रोतस्तमालाकुलं
नीरन्ध्राः पुनरालिखन्तु जठरच्छेदानलग्रन्थयः ॥

अर्थादर्थान्तरावगमो गतिः । यथा—

शुभे कोऽयं वृद्धो गृहपरिवृढः किं तत्र पिता न मे भर्ता रात्रौ व्यपगतदृगन्यश्च बधिरः ।
हुंहुं शान्तोऽहं शिशयिषुरिहैवापवरके क्व यामिन्यां यासि स्वपिहि ननु निर्दंशमशके ॥

अर्थोदयस्यादिक्रियाक्रमो रीतिः । यथा—

प्रथममरुणच्छायस्तावत्ततः कनकप्रभस्तदनु विरहोत्ताम्यत्तन्वीकपोलतलद्युतिः ।
प्रभवति पुनर्ध्वान्तध्वंसक्षमः क्षणदामुखे सरसबिसिनीकन्दच्छेदच्छविर्मृगलाञ्छनः ॥

भङ्ग्या इष्टाभिधानमुक्तिः । यथा—

त्वमेवं सौन्दर्यात् स च रुचिरतायां परिचितः कलानां सीमानं परमिह युवामेव भजथः ।
अपि द्वन्द्वं दिष्ट्या तदिति सुभगे संवदति वामतः शेषं चेत्स्याज्जितमिह तदानीं गुणितया ॥

विवक्षितार्थनिर्वहणं प्रौढिः । यथा—

त्वद्वक्त्रेन्दुविलोकनाकुलधिया धात्रा त्वदीयां श्रियं
निक्षिप्य प्रतिराजकेषु विदुषां लक्ष्म्या त्वमापूरिता ।
तेनैके(ते) नियतं दरिद्रति गृहेष्वेषामयं दृश्यते
नैतामाद्रियसे त्वमिच्छसि नु तां त्वामेव सा धावति ॥

पदादिदोषाणामनुकरणादिषु गुणत्वापत्तये दोषगुणाः । तेऽपि प्राग्वदेव त्रिविधा अपि प्रत्येकं चतुर्विंशतिधा । तत्र पददोषेषु असाधोर्म्लिष्टम्लेच्छितादेरनुकरणे गुणत्वं यथा—

उन्नमय्य सकचग्रहमास्यं चुम्बति प्रियतमे हठवृत्त्या ।
हुंहु मुञ्च ममेति च मन्दं जल्पितं जयति मानवतीनाम् ॥

अनुकरण एवाप्रयुक्तस्य गुणत्वं यथा—

दिवं पत्काषिणो यान्ति येऽचीकमत भाषिणः। पत्काषिणोऽपि नो यान्ति येवचन्ति प्रयुञ्जते॥

श्रुतिविरसं कष्टम्। तस्य दुर्वाचकानुप्रासे गुणत्वं यथा —

नाष्ट्रास्त्वाष्ट्रारिराष्ट्रेण भ्राष्ट्रेणादंष्ट्रिणो जनाः। धार्तराष्ट्राः सुराष्ट्रेण महाराष्ट्रे तु नोष्ट्रिणः॥

पादपूरणाद्यर्थमनर्थकम्। तस्य यमकादौ गुणत्वं यथा —

योषितामतितरां नखलूनं गात्रमुज्ज्वलतया नखलूनम्॥
बभौ मुखेनाप्रतिमेन काचन श्रियाधिका तां प्रतिमेन काचन॥

रूढिच्युतमन्यार्थम्। तस्य प्रहेलिकादिषु गुणत्वं यथा —

ख्यातयः कतिकाले ते स्फातयः स्फारवल्गवः। चन्द्रे साक्षाद्भवन्त्यत्र वायवो मम धारिणः॥

तुच्छाभिधेयमपुष्टार्थम्। तस्य छन्दोऽनुरोधादौ गुणत्वं यथा —

द्विरष्टवर्षाकृतिमेनमर्थिनामुशन्ति कल्पोपपदं महीरुहम्॥
यमिन्द्रशब्दार्थनिषूदनं हरेर्हिरण्यपूर्वं कशिपुं प्रचक्षते॥

अवाचकमसमर्थम्। तस्य सीत्कृतादौ गुणत्वं यथा —

आशु लम्भितवतीष्टकराग्रे नीविमर्धमुरलीकृतदृष्ट्या।
रक्तवैणिककराहततन्त्रीमण्डलः क्वणितचारु चुकूजे॥

शास्त्रमात्रप्रसिद्धमप्रतीतम्। तस्य तद्विदसंभाषणादौ गुणत्वं यथा —

सर्वकार्यशरीरेषु मुक्त्वाङ्गस्कन्धपञ्चकम्। सौगतानामिवात्मान्यो नास्ति मन्त्रो महीभृताम्॥

व्यवहितार्थप्रत्ययं क्लिष्टम्। तस्य झटित्यर्थप्रतीतौ गुणत्वं यथा —

अथात्मनः शब्दगुणं गुणज्ञः पदं विमानेन विगाहमानः।
पितुः पदं मध्यममुत्पतन्ती काञ्चीगुणस्थानमनिन्दितायाः॥

अप्रसिद्धार्थप्रयुक्तं गूढार्थम्। तस्य तद्व्याख्यानादौ गुणत्वं यथा —

अह्मारिसावि कइणो कडिणो मरिमुद्धएलवमुहाइ। मंडुक्कमक्कडाविहुहो हरीसप्पसीहावि॥

सङ्केतकल्पिताभिधेयं नेयार्थम्। तस्य प्रहेलिकादिषु गुणत्वं यथा —

मोरुकलावजंपहइतहणामहसरिणाउ। ऊसीसापाअंति क्कूअगुणत्तिहिमणिणाउ॥

अनिश्चयकृत्सन्दिग्धम्। तस्य प्रकरणादिभिर्विशेषावगमे गुणत्वं यथा —

महीभृतः पुत्रवतोऽपि दृष्टिस्तस्मिन्नपत्ये न जगाम तृप्तिम्।
स शार्ङ्गचक्रासिगदाब्जपाणिर्मेघच्छविः पातु जगन्ति शौरिः॥

विपरीतकल्पनं विरुद्धम्। तस्य तद्विधाभिधाने गुणत्वं यथा—

अभिधाय तदा तदप्रियं शिशुपालोऽनुशयं परं गतः।
भवतोऽभिमनास्समीहते सरुषः कर्तुमुपेत्य माननाम्॥

अविशेषाभिधायकमप्रयोजकम्। तस्य स्वरूपाभिधानादौ गुणत्वं यथा—

त आकाशमसिश्यामभुत्पत्य परमर्षयः। सा मे वर्षसहस्रं तु तपस्तेपे महामनाः॥

अद्युत्पत्तिमदेश्यम्। तस्य महाकविभिरङ्गीकृतत्वे गुणत्वं यथा—

षण्डेपूद्दण्डपिण्डीतगरतरलनाः प्रापिरे येन वेला-
मालम्ब्योत्तालतल्लस्फुटितपुटकिनीबन्धवो गन्धवाहाः।
पातालप्रतिमल्लगल्लविवरप्रक्षिप्तसप्तार्णवं
वन्दे नन्दितनीलकण्ठपरिषद्व्यक्तर्द्धिवः क्रीडितम्॥

अश्लीलामङ्गलघृणावदर्थं ग्राम्यम्। तस्य संवीतगुप्तलक्षितादौ न दोषः।

संवीतस्य हि लोकेन न दोषान्वेषणं क्षमम्। शिवलिङ्गस्य संस्थाने कस्यासभ्यत्वभावना॥

तत्रासभ्यमसभ्यार्थान्तरमसभ्यस्मृतिहेतुश्चाश्लीलम्। तत्राद्यस्य तु गुणत्वं यथा—

तस्मै हिमाद्रेः प्रयतां तनूजां यतात्मने रोचयितुं यतस्व।
योषित्सु तद्वीर्यनिषेकभूमिः सैव क्षमेत्यात्मभुवोपदिष्टम्॥

द्वितीयस्य गुणत्वं यथा—

सुदुस्त्यजा यद्यपि जन्मभूमि र्गजैरसंबाधमयां बभूवे।
सतेऽनुनेयः सुभगोऽभिमानो भगिन्ययं नः प्रथमाभिसन्धिः॥

तृतीयस्य गुणत्वं यथा—

ब्रह्माण्डकारणं योऽप्सु निदधे बीजमात्मनः। उपस्थानं करोम्येष तस्मै शेषाहिशायिने॥

अमङ्गलार्थममङ्गलार्थान्तरममङ्गलस्मृतिहेतुश्चामङ्गलार्थम्। तत्राद्यस्य गुणत्वं यथा—

भद्रे मारि प्रशस्तं वद सदसि मुदा नृत्यकृत्ये मुहूर्तं
मृत्योरङ्कैश्चतुष्कं विरचय रचयारात्रिकं कालरात्रि।
चामुण्डे रुण्डमालामुपनयविनयस्त्वायतां भैरवीर्ष्या-
मेवं देवे भवानीं वहति परिजनव्याहृतिस्त्रायतां नः॥

द्वितीयस्य गुणत्वं यथा—

सत्पक्षामधुरगिरः प्रसाधिताशा मदोद्धतारम्भाः ।
निपतन्ति धार्तराष्ट्राः कालवशान्मेदिनीपृष्ठे ॥

तृतीयस्य गुणत्वं यथा—

कोऽभिप्रेतः सुसंस्थानस्तस्या इति न निश्चयः ।
आशापिशाचिकैषा तु कुमारी मां वरिष्यति ॥

घृणावद् घृणावदर्थान्तरं घृणावत्स्मृतिहेतुश्च घृणावदर्थम् ।

निष्ठ्यूतोद्गीर्णवान्तादिगौणवृत्तिव्यपाश्रयम् । अपि सुन्दरमन्यत्र ग्राम्यकक्षां विगाहते ॥

यथा—

पद्मान्यर्कांशुनिष्ठ्यूताः पीत्वा पावकविप्रुषः । भूयो वमन्तीव मुखैरुद्गीर्णारुणरेणुभिः ॥
किञ्चिदाश्रयसौन्दर्याद्धत्ते शोभामसाध्वपि । कान्ताविलोचनन्यस्तं मलीमसमिवाञ्जनम् ॥

यथा—

आन्त्रप्रोतबृहत्कपालनलक क्रूरक्वणत्कङ्कणप्रायप्रेङ्खितभूरिभूषणरवैराघोषयन्त्यम्बरम् ।
पीतच्छर्दितरक्तकर्दमघनप्राग्भारघोरोल्लसद्व्यालोलस्तनभारभैरववपुर्दर्पोद्धतं धावति ॥

सन्निवेशविशेषाच्च दुरुक्तमपि शोभते । नीलं पलाशमाबद्धमन्तराले स्रजामिव ॥

यथा—

आन्त्रैः कल्पितमङ्गलप्रतिसराः स्त्रीहस्तरक्तोत्पल-
व्यक्तोत्तंसभृतः पिनह्य सहसा हृत्पुण्डरीकस्रजः ।
एताः शोणितपङ्ककुङ्कमजुषः संभूय कान्तैः पिब-
न्त्यस्थिस्नेहसुराः कपालचषकैः प्रीताः पिशाचाङ्गनाः ॥

एतेन द्वितीयतृतीययोरपि गुणत्वं व्याख्यातम् ।

मुखमापाण्डुगण्डं ते मदक्लिन्नकरः करी। विशांपते विशिष्टोऽसि हलांतं ब्रह्मवर्चसम् ॥

यथा च—

वर्मिष्ठाय यविष्ठाय प्रवीर्याय प्रचेतसे । नमः कपर्दिने नीलल्लोहितायाग्निरेतसे ॥

अथ वाक्यदोषाणामदोषस्तत्र शब्दहीनस्य क्वचिद्विवक्षातो गुणत्वम् । यथा—

आक्षिपन्त्यरविन्दानि मुग्धे तव मुखच्छविम् । कोशदण्डसमग्राणां क्रिमेषामस्ति दुष्करम् ॥

इदं हि शास्त्रमाहात्म्यदर्शनालसचेतसाम्। अपभाषणवद्भाति न च सौभाग्यमुज्झति॥
अनुकम्पाद्यतिशयो यदि कश्चिद्विवक्ष्यते । न दोषः पुनरुक्तेति प्रत्युतेयमलंक्रिया॥

यथा—

हन्यते सा वरारोहा स्मरेणाकाण्डवैरिणा। हन्यते चारुसर्वाङ्गी हन्यते मञ्जुभाषिणी॥
यत्नः सम्बन्धनिर्ज्ञातहेतुः कोऽपि कृतो यदि। क्रमलङ्घनमप्याहु र्निर्दोषं सूरयो यथा॥
बन्धुत्यागस्तनुत्यागो देशत्याग इति त्रिषु। आद्यन्तावायतक्लेशौ मध्यमः क्षणिकज्वरः॥
यदा तीव्रप्रयत्नेन संयोगादेरगौरवम्। तच्छन्दोभङ्गमप्याहुस्तददोषाय सूरयः॥

जहउय्यो इण्णे अवुत्तसुतह अणण्हाओसिनुमसच्छेगोळाणईसूहे।

अस्थानविरति यतिभ्रष्टम् —

स्वरसन्ध्यकृते प्रायेे धातुभेदे तदिष्यते। नामभेदे च शेषेषु न दोष इति तद्विदः॥

यथा—

शोभां पुष्यत्ययमभिनवः सुन्दरीणां प्रबोधः किञ्चिद्भावालसमसरलप्रेक्षितं कामिनीनाम्।
कार्याकार्याण्ययमविकलान्यागमेनैव पश्यन् वश्यामुर्वीं वहति नृप इत्यस्ति चायं प्रयोगः॥

अत्र चालुते दान्ते शेषस्य पदत्वं निश्चितम्। यथा—

तथा सन्धिविकारान्तं पदमेवेति वर्ण्यते॥

विरूपसन्धि विसन्धि —

न संहितां विवक्षामीत्यसन्धानं पदेषु यत्। तद्विसन्धीति निर्दिष्टं न प्रगृह्यादिहेतुकम्॥

यथा—

कमले इव लोचने इमे अनुबध्नाति विलासपद्धतिः।
स इतोऽब्द ऋतावृतप्रियो न ऋचस्त्वं न यजूंषि ऊहसे॥
पदानां व्युत्क्रमो यत्र क्रमेण व्युत्क्रमेण वा।
तद्व्याकीर्णं विदुस्तस्य न दोषः कोऽपि तद्यथा॥
जुगुप्सत स्त्रैन मदुष्टभावं मैवं भवानक्षतसाधुवृत्तः।
इतीव वाचो निगृहीतकण्ठैः प्राणैररुध्यन्त महर्षिसूनोः॥

पर्यायेण द्वयोर्यत्तु वाक्यप्रश्नोत्तरादिषु। सङ्कीर्णं तन्न दोषाय वाक्यो वाक्यविदो विदुः॥

बाले नाथ विमुञ्च मानिनि रुषं रोषान्मया किं कृतं
खेदोऽस्मासु न मेऽपराध्यसि भवान्सर्वेऽपराधा मयि ।
तत्किं रोदिषि गद्गदेन वचसा कस्याग्रतो रुद्यते
नन्वेतन्मम का तवास्मि दयिता नास्मीत्यतो रुद्यते ॥

वाक्यान्तरसगर्भं यत्तद्वाक्यं गर्भितं विदुः । रसान्तरतिरस्कारे तदिष्टं नेष्टमन्यथा ॥

यथा—

दिङ्मातङ्गघटाविभक्तचतुराघाटा मही साध्यते
सिद्धा सा च वदन्त एव हि वयं रोमाञ्चिताः पश्यत ।
विप्राय प्रतिपाद्यते किमपरं रामाय तस्मै नमो
यस्मादाविरभूत्कथाद्भुतमिदं यत्रैव चास्तं गतम् ॥

देशभाषाप्रभेदेन प्रकृत्यादिभिदापि वा । अपदं तस्य चानुज्ञा भाषाचित्रेषु तद्यथा ॥

हातोजोज्जलदेउ नैव मदनः साक्षादयं भूतले
तत्किं दीसइ सच्चमा हतवपुः कामः किल श्रूयते ।
पच्छाऐ किअलेउ भूतपतिना गौरीविवाहोत्सवे
ऐसे सच्चजिबोल्लुहस्तकटकः किं दर्पणेनेक्ष्यते ॥

अशरीरं क्रियाहीनं क्रियापेक्षा न यत्र तु । यत्रास्त्यादेरपेक्षा वा न दोषस्तत्र तद्यथा ॥

कियन्मात्रं जलं विप्र जानुदघ्नं नराधिप । ईदृशी किमवस्था ते न हि सर्वे भवादृशाः ॥

यत्रोपमाने धर्माः स्युर्नोपमेयेन सम्मिताः । तद्धीनोपममित्याहुस्तत्प्रसिद्धौ न दुष्यति ॥

यथा—

स मारुताकम्पितपीतवासा बिभ्रत्सलीलं शशिभासमब्जम् ।
यदुप्रवीरः प्रगृहीतशार्ङ्गः सेन्द्रायुधो मेघ इवाबभासे ॥

शक्रचापग्रहादत्र दर्शितं किल कार्मुकम् । वासः शंखानुपादानादूनमित्यत्र चोच्यते ॥

सर्वं सर्वेण सारूप्यं नास्ति भावस्य कस्यचित् । यथोपपत्ति कृतिभिरुपमानं प्रयुज्यते ॥

अखण्डमण्डलः क्वेन्दुः क्व कान्ताननद्युति। यत्किञ्चित्कान्तिसाम्यात्तु शशिनैवोपमीयते ॥

तेनाधिकोपमं व्याख्यातम्। यथा—

स पीतवासाः प्रगृहीतशार्ङ्गो मनोज्ञभीमं वपुराप कृष्णः।
शतह्रदेन्द्रायुधवान्निशायां संसृज्यमानः शशिनेव मेघः ॥

शशिनो ग्रहणादेतदाधिक्यं किल न ह्ययम्। निर्दिष्ट उपमेयेऽर्थे वाच्यो वा जलजोऽत्र तु।
न सर्वसारूप्यमयं विस्तरणोदितो विधिः। अभिप्रायात्कवेरत्र विधेया जलजे मतिः ॥
यद्भिन्नलिङ्गमित्युक्तं विभिन्नवचनं च यत्। उपमादूषणं तन्न यत्रोद्वेगो न धीमताम् ॥

तत्र लिङ्गभेदेन दोषो यथा—

अन्यदाभूषणं पुंसः शमो लज्जेव योषितः। पराक्रमः परिभवे वैयात्यं सुरतेष्विव ॥

वचनभेदेन दोषो यथा—

आज्ञा इव जगन्मृत्योः प्राणा इव नभश्रियः। गृहा इव तपस्सिद्धे दारा इव विभोः क्षितिः ॥
श्लिष्टमस्पृष्टशैथिल्यं शिथिलं तद्विपर्ययः। गौडीयैरिष्यते तत्तु बन्धप्राशस्त्यगौरवात् ॥

यथा—

लीलाविलोलललनाललितालकलालसाः। विलुप्तमालतीमाला जलकालानिला ववुः ॥
अनालोच्यैव वैषम्यमर्थालङ्कारडम्बरौ। अवेक्षमाणा ववृते पौरस्त्या काव्यपद्धतिः ॥

यथा—

चन्दनप्रणयोद्गन्धि र्मन्दो मलयमारुतः। स्पर्धते रुद्धमद्धैर्यो वररामाननानिलैः ॥
दीप्तमित्यपरैर्भूम्ना कठोरमपि बध्यते। न्यक्षेण पक्षः क्षपितः क्षत्रियाणां क्षणादिति ॥
अविद्वदङ्गनाबालप्रसिद्धार्थं प्रसादवत्। विपर्ययोऽस्याप्रसन्नं चित्रादौ तन्न दुष्यति ॥

यथा—

या श्रिता पावननया यातनाच्छेदिनी च या। याचनीया धिया माया या माया संश्रिता श्रिया॥
अध्याहारादिगम्यार्थं नेयार्थमिति तद्विदुः। प्रसिद्धेर्गम्यते यस्मिन्न च तद्दोषवद्यथा ॥

मा भवन्तमनलः पवनो वा वारणो मदकलः परशुर्वा।
वाहिनीजलभरः कुलिशं वा स्वस्ति तेऽस्तु लतया सह वृक्ष ॥

असभ्यार्थं मतं ग्राम्यं ग्राम्योक्तावेव दुष्यति। विदग्धोक्तौ तु तस्याहुर्गुणवत्त्वं मनीषिणः ॥

कामं कन्दर्पचण्डालो मयि वामाक्षि निर्दयः। त्वयि निर्मत्सरो दिष्ट्येत्येवमादि यथोदितम्॥
ओजः समासभूयस्त्वं तद्दीप्तार्थेषु बध्यते। विपर्ययोऽस्यासमस्तं त दीप्तार्थं चेन्न दोषभाक्॥

यथा—

यो यः शस्त्रं बिभर्ति स्वभुजगुरुमदः पाण्डवीनां चमूनां
यो वा पाञ्चालगोत्रे शिशुरधिकवया गर्भशय्यां गतो वा।
यो यस्तत्कर्मसाक्षी चरति मयि रणे यश्च यश्च प्रतीपः
क्रोधान्धस्तस्य तस्य स्वयमपि जगतामन्तकस्यान्तकोऽहम्॥

समस्तमसमस्तं वा न निर्वहति यद्वचः। तदनिर्व्यूढमस्यापि न दोषः क्वापि तद्यथा॥

प्रसीद चण्डि त्यज मन्युमञ्जसा जनस्तवायं पुरतः कृताञ्जलिः।
किमर्थमुत्कम्पितपीवरस्तन द्वयं त्वया लुप्तविलासमास्यते॥

अनलङ्कारमित्याहुरलङ्कारोज्झितं वचः। पूर्वोत्तरानुसन्धाने तस्य साधुत्वमिष्यते॥

यथा—

निशम्य-ताः शेषगवी रभिधातुमधोक्षजः। शिष्याय बृहतां पत्युः प्रस्तावनदिशद्दृशा॥

अथ वाक्यार्थदोषाणामदोषः। तत्र च,

समुदायार्थशून्यं यत्तदपार्थं प्रचक्षते। तन्मत्तोन्मत्तबालानामुक्तेरन्यत्र दुष्यति॥

यथा—

क्व कार्यं शशलक्ष्मणः क्व च कुलं भूयोऽपि दृश्येत सा
दोषाणां प्रशमाय मे श्रुतमहो कोपेऽपि कान्तं मुखम्।
किं वक्ष्यन्त्यपकल्मषाः कृतधियो रेखैव सान्यादृशी
चेतः स्वास्थ्यमुपैहि कः खलु युवा धन्योऽधरं पास्यति॥

यदप्रयोजनं यच्च गतार्थं व्यर्थमेव तत्। तस्यापि क्वापि निर्दोषः प्रयोगो दृश्यते यथा॥
गीता विदुरवाक्यानि धर्माः शान्तनवेरिताः। न श्रुता भारते येन तस्य जन्म निरर्थकम्॥
हृत्कण्ठवक्त्रश्रोत्रेषु कस्य नात्रस्थितं तपः। श्रीखण्डहारकर्पूरदन्तपत्रप्रभं यशः॥
अविशेषेण पूर्वोक्तं यदि भूयोऽपि कीर्त्यते। तदेकार्थं रसाक्षिप्तचेतसां तन्न दुष्यति॥

यथा—

असारं संसारं परिमुषितरत्नं त्रिभुवनं निरालोकं लोकं मरणशरणं बान्धवजनम् ।
अदर्पं कन्दर्पं जननयननिर्माणमफलं जगज्जीर्णारण्यं कथमसि विधातुं व्यवसितः ॥

संशयायैव सन्दिग्धं यदि जातु प्रयुज्यते । स्यादलङ्कार एवासौ न दोषस्तत्र तद्यथा ॥

कत्तो लब्भइ पंथिअ सत्थरअ एत्थ गामणिघरंमि ।
ऊण्ण अपओहरे पेक्खिऊण जइ वससि ता वससु ॥

वाक्ये प्रबन्धे चार्थानां पौर्वापर्यविपर्ययः । दोषः सोपक्रमो नाम चित्रहेतौ न दुष्यति ॥

यथा—

पश्चात्पर्यस्य किरणानुदीर्णं चन्द्रमण्डलम् । प्रागेव हरिणाक्षीणामुदीर्णो रागसागरः ॥

यस्मिन्नीतेरनिर्वाहः खिन्नं तदभिधीयते । न दोषस्तस्य तु क्वापि यत्र च्छाया न हीयते ॥

यथा—

अभिनववधूरोषः स्वादुः करीषतनूनपादसरलजनाश्लेषक्रूरस्तुषारसमीरण. ।
गलितविभवस्याज्ञेवाद्य द्युतिर्मसृणा रवे विरहिवनितावक्त्रौपम्यं बिभर्ति निशाकरः ॥

लोकातीत इवार्थो यः सोऽतिमात्र इहेष्यते । वार्तादौ तेन दुष्यन्ति विदग्धा नेतरे जनाः ॥

तच्च वार्ताभिधानेषु वर्णनास्वपि विद्यते । कान्तं जगति तद्वाक्यं लौकिकार्थानुयायि यत् ॥

वार्ताभिधाने यथा—

गृहाणि नाम तान्येव तपोराशिर्भवादृशः । संभावयति यान्येवं पावनैः पादपांसुभिः ॥

वर्णनायां यथा—

अनयोरनवद्याङ्गि स्तनयोर्जृम्भमाणयोः । अवकाशो न पर्याप्तस्तव बाहुलतान्तरे ॥

इति संभाव्यमेवैतद्विशेषाख्यानसंस्कृतम् । कान्तं भवति सर्वस्य लोकसीमातिवर्तिनः ॥

तदतिक्रमे वार्ताभिधान यथा—

देव धिष्ण्यमिवाराध्यमद्य प्रभृति नो गृहम् । युष्मत्पादरजःपातधौतनिश्शेषकल्मषम् ॥

वर्णना यथा—

अल्पं निर्मितमाकाशमनालोच्यैव वेधसा । इदमेवंविधंभावि भवत्यास्स्तनजृम्भणम् ॥

इदमत्युक्तिरित्युक्तमेतद्गौडोपलालितम् । प्रस्थानां प्राक्प्रणीतं तु सारं वैदर्भवर्त्मना ॥

परुषं निष्ठुरार्थं यदतीव हि विगर्हितम् । निरूढलक्षणाद्यासु तदुक्तिषु न दुष्यति ॥

यथा—

हालाहलं विषं भुङ्क्ष्व सखि मा तत्र विश्वसीः । यद्वा न दह्यसे काष्ठैः स्वल्पैस्त्वमपि मे मतिः॥

अप्रस्तुतरसं प्राहुर्विरमं वस्तु सूरयः । इष्टं तस्याप्यनुज्ञानं प्राधान्ये तु तयोर्यथा ॥

क्षिप्तो हस्तावलग्नः प्रसभमभिहतोऽप्याददानोऽशुकान्तं
गृह्णन्केशेष्वपास्तश्चरणनिपतितो नेक्षितः संभ्रमेण ।
आलिङ्गन्योऽवधूतस्त्रिपुरयुवतिभिः साश्रुनेत्रोत्पलाभिः
कामीवार्द्रापराधः स दहतु दुरितं शाम्भवो वः शराग्निः ॥

हीनं यत्रोपमानं स्यादुपमेयं गुणाधिकम् । हीनोपमं तदप्याहुर्न दोषः क्वापि तद्यथा ॥

ततः कुमुदनाथेन कामिनीगण्डपाण्डुना । नेत्रानन्देन चन्द्रेण माहेन्द्रीदिगलङ्कृता ॥

यत्रोपमानमुत्कृष्ट मुपमेयं निकृष्यते । ज्ञेयं तदधिकौपम्यमस्यापि क्वाप्यदोषता ॥

यथा—

कान्त्या चन्द्रमसं धाम्ना सूर्यं धैर्येण सागरम् । राजन्ननुकरोषि त्वं सौभाग्येनापि मन्मथम् ॥

उपमानेन वैधर्म्याद्भवेदसदृशोपमम् । तस्याभ्यनुज्ञामिच्छन्ति व्यतिरेकोपमादिषु ॥

प्रहितः प्रधनाय माधवानहमाकारयितुं महीभुजा ।
न परेषु महौजसः छलादपकर्षन्ति मलिम्लुचा इव ॥

यस्योपमानं लोकेषु न प्रसिद्धं तदिष्यते । अप्रसिद्धोपमं नाम तत्क्वचिन्नैव दुष्यति ॥

यथा—

उद्गर्भहूणरमणीरमणोपमर्दभग्नोन्नतिस्तननिवेशनिभं हिमांशोः ।
बिम्बं कठोरबिसकाण्डकडारगौरैर्विष्णोः पदं प्रथममग्रकरैर्व्यनक्ति ॥

निरलङ्कारमित्याहुरलङ्कारोज्झितं वचः । अर्थौर्जित्येषु तस्यापि क्वचिन्निर्दोषता यथा ॥

याच्ञां दैन्यपराभवप्रणयिनीं नेक्ष्वाकवः शिक्षिताः
सेवासंवलिता कदा रघुकुले मौलौ निबद्धोऽञ्जलिः ।
सर्वं तद्विहितं तदाप्युदधिना नैवोपरोधः कृतः
पाणिः सम्प्रति मे हठात्किमपरं स्प्रष्टुं धनुर्वाञ्छति ॥

असभ्यार्थं यदश्लीलं यदर्थान्तरवाचि वा । तस्येह दृश्यते भूम्ना प्रयोगो नापि दुष्यति ॥

यथा—

अद्यापि तत्कनककुण्डलघृष्टगण्डं वक्त्रं स्मरामि विपरीतरताभियोगे ।
आन्दोलनश्रमवशस्फुटघर्मबिन्दुमुक्ताफलप्रकरविच्छुरितं प्रियायाः ॥

देशोऽद्रिवनराष्ट्रादिः कालो नक्तंदिनर्तवः । नृत्तगीतप्रभृतयः कलाः कामार्थसंश्रयाः ॥
चराचराणां भूतानां प्रवृत्तिर्लोकसंज्ञिता । हेतुविद्यात्मको न्यायः सस्मृतिश्रुतिरागमः ॥
तेषु तेषु यथारूपं यदि किञ्चित्प्रवर्तते । कवेः प्रमादा देशादिविरोधीत्येतदुच्यते ॥
विरोधः सकलोऽप्येष कदाचित्कविकौशलात् । व्युत्क्रम्य दोषगणनां गुणवीथीं विगाहते ॥

तत्र देशविरुद्धस्य गुणभावो यथा—

तस्य राज्ञः प्रभावेन तदुद्यानानि जज्ञिरे । आर्द्रांशुकप्रवालानामास्पदं सुरशाखिनाम् ॥

कालविरुद्धस्य यथा—

राज्ञां विनाशपिशुनश्चचार खरमारुतः । धून्वन् कदम्बकुसुमैः सह सप्तच्छदोद्गमान् ॥

लोकविरुद्धस्य यथा—

ऐन्दवादर्चिषः कामी शिशिरं हव्यवाहनम् । अबलाविरहक्लेशविह्वलो गणयत्ययम् ॥

युक्तिविरुद्धस्य यथा—

ससङ्कोचश्चन्द्रादिव कुमुदराशेरशरणः स सूर्यात्कोकानां विरह इव लुप्तप्रतिविधिः ।
गुणेभ्यस्ते खेदप्रशमनकरेभ्योऽपि यदयं खलानामुद्वेगस्तदिदममृतादेव मरणम् ॥

औचित्यविरुद्धस्य यथा—

तेनाथ नाथ दुरुदाहरणातपेन सौम्यापि नाम परुषत्वमभिप्रपन्ना ।
जज्वाल तीक्ष्णविशदाः सहसोद्गिरन्ती वागर्चिषस्तपनकान्तिशिलेव सीता ॥

वचनविरुद्धस्य यथा—

अस्ति काचिदवस्था सा साभिषङ्गस्य चेतसः । यस्यां भवेदभिमता विरुद्धार्थापि भारती ॥
परदाराभिषङ्गो मे कथमार्यस्य युज्यते । पिबामि तरलं तस्याः कदा नु दशनच्छदम् ॥

धर्मविरुद्धस्य गुणभावो यथा—

पञ्चानां पाण्डुपुत्राणां पत्नी पाञ्चालकन्यका । पतीनामग्रणीश्चासी देवो हि विधिरीदृशः ॥

अर्थविरुद्धस्य गुणभावो यथा—

नीतिरापदि यद्गम्यपरस्तन्मानिनो ह्रिये । विधुर्विधुन्तुदस्येव पूर्णस्तस्योत्सवाय नः ॥

कामविरुद्धस्य गुणभावो यथा—

दोलातिप्रेरणत्रस्तवधूजनमुखोद्गतम् । कामिनां लयवैषम्या द्वेयं रागमवर्धयत् ॥

एवमन्येऽपि द्रष्टव्याः । तद्यथा शिरश्शेखरः, कर्णावतंसः, श्रवणकुण्डलं, पुष्पमाला, धनुर्ज्याध्वनिः, करिकलभ इत्यादिना पुष्टार्थत्वमर्थविशेषप्रतीतेः । तथा हि, शिरश्शेखरादीनां प्रभृतियोगः, पुष्पमालायां वेशा . . दिप्राशस्त्यं, धनुर्ज्यायामारूढिः, करिकलभे करिप्रमाणता प्रतीयते । भुवनशिरश्शेखरः, पृथ्वीकर्णावतंसः, सरस्वतीश्रवणकुण्डलं, रत्नमालाधनुर्ज्या, मलङ्कारध्वनिः, कुचकुम्भकलभका इत्यादिरुपचारः ।

ननु च गुणकल्पनेयं नोपचारकल्पना । तथा हि, विशेष्येषु गुणकल्पना विशेषणेषूपचारकल्पनेति प्रदर्शितं पुरस्तात् । न च गुणवृत्तिरुपचारप्रवृत्तावन्तर्भवति, अपितूपचारवृत्तिर्गुणवृत्तौ । द्विधा हि गौणी, गुणनिमित्तोपचारनिमित्ता च । सत्यमेतत् । किन्तु व्यवहितप्रवृत्तिसाधनसाधर्म्याद्दूरविप्रकर्षेण गौणीमप्युपचरितमेवाचक्षते ।

अक्षपादस्तु सहचरणस्थानतादर्थ्यादिभ्यस्तद्वदुपचार इति ब्रुवाणो यष्टीः प्रवेशय, मञ्चाः क्रोशन्ति, मल्लिकाप्रदीप इत्यादिषु लक्षणामप्युपचारपक्षे प्रतिक्षिपति । न च लक्षणागौण्योरभेद इति वक्तव्यम् । यदाह गर्गः—

अभिधेयाविनाभावप्रतीतिर्लक्षणेष्यते । लक्ष्यमाणगुणैर्योगाद्वृत्तेरिष्टा तु गौणता ॥

तत्र लक्षणायां यथैवाकृतिवचनः शब्दः तत्सहचरितां व्यक्तिं लक्षयति तथैव यष्टिमञ्चप्रदीपादयस्तत्सम्बन्धपुरुषादिलक्षणार्थाः प्रथन्ते । गौण्यां पुनरग्निर्माणवकः, सिंहो देवदत्तः, गौर्वाहीकः, इत्यादिषु नाग्नित्वाद्यविनाभावेन माणवकादयः प्रतीयन्ते । किन्तर्हि—

वह्नित्वलक्षणादर्थाद्यत्पैङ्गल्यादि गम्यते । तेन माणवके बुद्धिः सादृश्यादुपजायते ॥

ननु च गौणमुख्ययोर्विवेको युज्यते । तथा हि, एक एवायं गोशब्दो वाक्ये न कश्चिज्जातिविशेषाभिधायी गौरनुबन्ध्य इति, कश्चिज्जात्युपसर्जनद्रव्यमात्रवाची गौरानीयतामिति, क्वचित्परिच्छिन्न एव द्रव्यविशेषे वर्तते अन्यत्र काञ्चिद्गां पश्यसीति, क्वचित्तु रूढसम्बन्धेषु क्रियागुणेषु गोशब्दः प्रयुज्यमानो दृश्यते यथा— जाड्यादौच्छिष्ट्यात्सर्वसहत्वान्महाशनत्वाद्वा गौर्वाहीक इति । एवं सर्वशक्तेर्गोशब्दस्यार्थप्रकरणादिभिरवच्छिद्यमानसामर्थ्यस्य पृथिव्यादाविव वाहिकेऽपि वर्तमानस्य गौणत्वमुपपद्यते । तदाह—

सर्वशक्तेस्तु तस्यैव शब्दस्यानेककर्मणः । वृत्त्यभावान्न गौणत्वं मुख्यत्वं वा प्रकल्प्यते ॥

तथा हि—

यथा सास्नादिमान्पिण्डो गोशब्देनाभिधीयते ।
तथा जाड्यादिगुणवान् वाहीकोऽप्यभिधीयते ॥

अथोच्येत यत्र स्वविषय एव शब्दः प्रयुज्यते तत्र मुख्यः। यत्र तु कुतश्चिन्निमित्तात् प्रवृत्तिनिमित्तमर्थान्तरेऽन्यस्य प्रयुज्यते तत्र गौणः। यद्यपि जातिशब्दः तथा जात्या स्वनिबन्धनभूतया विनात्यन्तामभिधेयक्रियागुणमात्रद्वारेणान्यत्र वर्तितुमर्हति । न च शब्देनाप्रवर्तमानेन गौर्वाहीक इति सामानाधिकरण्यप्रयोगो घटते। तदपि यथाकथंचित्सम्मोहाद्रज्जुद्रव्ये प्राप्तबुद्धिविपर्ययादर्थान्तरेऽर्थान्तररूपमध्यारोप्य स्वविषय एव सर्पशब्द प्रयुङ्क्ते तथा कस्यचिदेव सदृशस्य धर्मस्य भूतस्य दर्शनात् भाविनो वा भूतपदासङ्गात् प्राप्तरूपविपर्यासायां बुद्धौ वाहीके गोत्वसंबंधं गोत्वमासद्य गोशब्दं सास्नादिमत्येव पिण्डे प्रयुङ्क्ते । एवमप्यर्थमात्रविपर्ययः, शब्दस्य तु स्वविषयव्यभिचारो न दृश्यते, न चाध्यारोपः शक्यते कर्तुम् । तथा हि ; यदा तावद्भ्रान्त्या मृगतृष्णायां तोयं शुक्तिकायां वा रजतमध्यारोप्य तच्छब्द प्रयुङ्क्ते तदोभयोः प्रतिपाद्यप्रतिपादकयोर्मुख्याध्यवसानरूढ्यैव तोयादिप्रतीतेस्तद्द्वारापत्तिमुख्यत्वम् । अथापि वक्ता विवेकी सन्नितरवञ्चनार्थं प्रयुङ्क्ते, श्रोता वा न विविङ्क्ते । तदात्वे वक्तुः विवेकेनाध्यारोपाभावादितरस्य च विपर्ययमुख्यत्वान्नैकमपि प्रति गौणत्वोपपत्तिः । यदा तु द्वावप्यभ्रान्तौ तदोभयोः सादृश्यादिनिमित्तात् तन्निमित्तवस्त्वर्थाध्यवसानादध्यारोपाभावः । यथैव ह्यसदृशानामर्थानां तिक्तमधुरादीनां न कथंचिदपि प्रतीत्यभावात्परस्पराध्यारोपण मेवसदृशानामपि विवेकज्ञानात् नोपपद्यते । न च प्रतीतिविपरीतं ज्ञानं व्यवहाराङ्गं भवति । न च प्रवृत्तिनिमित्तमन्तरेण शब्दो न प्रवर्तते । बुद्धिस्तु विषयमन्तरेणापि प्रवर्तत इति वक्तुमुचितम् । न चार्थरहिता बुद्धि रात्माकारमात्रमनुभविष्यतीति वक्तव्यम् । नीलमिदमित्यादिबुद्धिषु द्रव्यस्य बाह्यत्वेनैवावभासात् । अपि चायं गौणमुख्यव्यवहारः श्रोतॄणामर्थविशेषावधारणे व्याप्रियते । ते च पदश्रवणवेलायामनध्यारोपितस्वार्थवृत्त्यैव गवादिपदमध्यवसाय वाहीकादिपदसामानाधिकरण्यान्यथानुपपत्त्या गौणतां परिकल्पयन्ति । तत्र चैषां स्वयमनध्यारोप्य गोत्वं तत्सादृश्यप्रतीतिर्भवति । सा च किं शब्दादित्यन्विच्छतामन्वयव्यतिरेकाभ्यामर्थादिति निश्चयो जायते । कथ—

सिंहशब्दे ह्यनुक्तेऽपि सिंहार्थसदृशी मतिः। जायते न च बुद्धेऽर्थे सिंहशब्दे श्रुतेऽपि न॥

यदा च श्रोतॄणां स्वयमेवाध्यारोपाभावस्तदा वक्तर्यपि नैवैषामियं कल्पना भवति । यथाकृतमनेन सिंहत्वमध्यारोपितमिति कथं तर्हि सिंहत्वाविनाभूतानेकक्रियागुणसमुदायोऽनेन देवदत्तविवक्षितं च यत्नगौरवभयाच्च स्वैरमिधानैर्ब्रवीति । न चास्य समस्तस्य किञ्चिदेकं वाचकं पदमस्ति । तेनाविनाभावितया कथं नु सिंहत्वप्रतीतिर्भवेदिति तत्तावदभिधीयते । स्थितया

शब्दशक्त्या पुंसां व्यवहारो न तद्वशेन शक्त्यन्तरोपजन इति । किञ्च—

यदध्यासेन वक्तॄणां गौणो वृत्तिः प्रकल्प्यते । वेदे सा न कथंचित्स्यादध्यारोपयितुर्विना ॥

एवं तर्हि सर्वे एते गवादिशब्दा जातिद्रव्यगुणक्रियासमुदायवाचिनः समस्तार्थासंभवे सास्नादिमदादौ प्रयुज्यमाना मुख्या, वाहीकादौ तु कतिपयगुणक्रियायोगात् प्रवर्तमाना गौणतां लभन्ते । तत्राभिधीयते—

समुदायार्थवाचित्वेनैकदेशे भवेद्गतिः । स तु शब्दान्न पत्रांशमुख्यरूपेण गम्यते ॥

भवति तु जातिमात्रे दृष्टे सर्वक्रियागुणप्रत्यस्तमयेऽपि प्रयोगः प्रत्ययस्य मुख्यता, नैव वाहीकादिष्विव गोशब्दादुपचरितः प्रसह्य कार्येऽपि हि कदाचिद्रागेण सिंहा अत्र सिंहा एव जातिवाचिता च गवादिशब्दानां पुरस्तादुक्ता बाध्येत ।

क्रियागुणानां स्वानन्त्या न शक्यं प्रतिव्यक्तिगुणसम्बन्धोऽनुभवितुम् ।

एकस्यामेव च व्यक्तौ बाल्यादिषु गुणक्रियाः ।
अन्याश्चान्याश्च शक्यन्ते नाभिधातुमसङ्गतेः ॥

न चान्यत्सामान्यं शक्यते कल्पयितुम्, जात्यन्तरेऽपि क्वचित्कासांचित्सद्भावात् । न चाभिहितं गोत्वं गुणक्रियाणां व्यवच्छेदकं भवति । अप्रतीतेः अभिहित चेत्तत्प्रत्ययादेवाशेषगुणक्रियावगमादभिधानशक्त्यनवसर इति । अन्ये तु शक्तिप्रमाणादिभिर्न्यूनमगौणत्वमतिशयवन्तं सम्पूर्णमित्याचक्षते । न्यूना हि देवदत्ते शक्तिः सम्पूर्णा सिंहे अल्पं प्रमाणं कूपे महत्समुद्र इति ।

तत्रापरे ब्रुवते । शब्दाभिधेयतया न्यूनमधिकं वा विज्ञायते; न तु शक्तिप्रमाणाद्युपचयापचयेन । यो हि शब्दो येनार्थेनावरुद्धोऽर्थान्तरं नीयते तदुपचितमप्यर्थरूपं तच्छब्दं प्रति । तथा हि, कूपः समुद्रः, पाटलीपुत्रः स्वर्ग इत्यादौ अल्पप्रमाणशक्त्यादावपि स्वार्थे कूपादिशब्दानां मुख्यत्वमेव । अतः स्वार्थे प्रवर्तमानो मुख्योऽर्थान्तरे तु गौण इति न्याय्यम् । तत्र जातिः गवादिशब्दानां प्रवृत्तिनिमित्तं, जातौ हि स्वार्थे प्राप्तस्वरूपाण्यभिधानानि तत्सहचरितांस्तद्द्वारेणैव धर्मान्संस्पृशन्ति । तत्र रूढसंबन्धस्य प्रसिद्धसाहचर्यस्य क्रियागुणादेर्धर्मान्तरस्य दर्शनादतज्जातीयेषु जातिशब्दः प्रयुज्यमानो गौण इत्युच्यते । डित्थादिष्वव्यवनाभिताकृतिषु क्रियागुणनिमित्तायां शब्दप्रवृत्तावर्थान्तरसमुद्भवात् गवादिवदेव गौणमुख्यत्वे ।

अत्राहुः, अजहत्स्वार्थाः सर्वा वृत्तयः पूर्वशक्त्यनुसारसंभवे शक्त्यन्तरकल्पनाप्रमाणाभावात् संभाविष्यति चात्र गोत्वावगतव्यक्त्युपस्थापितजाड्याद्यनेकधर्मप्रत्ययात् वाहीकप्रत्ययः इति पूर्वैव शक्तिर्निमित्तम् । अतो न सहायहेतुत्वेन व्यवहारोच्छेदकारणं प्रसिद्धहानाप्रसिद्धकल्पनमाश्रयणीयम् ।

अपि च यथा गौरिव गौर्वाहीक इति कृतप्रत्ययलोपो गोशब्दो वाहीकार्थान्तरे प्रवर्तमानो गौण इत्युच्यते तथा गर्गस्यापत्यादीनि बहूनि गर्गाः विद्रा इति प्रत्ययलोपात् प्रकृतिशब्दाः प्रत्ययार्थे वर्तमाना अर्थान्तरवचनानां गौणा भवेयुः। तस्मादेक एव शब्दोऽनेकमर्थं यौगपद्येन पर्यायेण वाभिधत्ते, न तु स्वार्थमुत्सृज्यार्थान्तरे प्रवर्तते। प्रसिद्ध्यप्रसिद्धिभ्यां च तस्य मुख्यगौण-व्यपदेशो जायते। तत्र यौगपद्येऽपि यदा प्रसिद्धेनार्थेनावच्छिद्यते शब्दस्तदा मुख्यव्यपदेशं लभते। अप्रसिद्धेन त्वर्थेन प्राप्तावच्छेदस्य गौणव्यपदेशो भवति। पर्यायेणापि यस्मिन्नाश्रये प्रसिद्धार्थः शब्दस्तत्र मुख्योऽन्यत्र तु गौणः। तदाह—

विपर्यासादिवार्थस्य यत्रार्थान्तरतामिव। मन्यते स गवादिस्तु गौण इत्युच्यते क्वचित्॥

तस्माल्लब्धा भवतु सोऽयमिति वा संबन्धः क्रियताम्। सर्वथा यत्रार्थान्तरवाची शब्दः कुतश्चि-न्निमित्तात्परित्यज्यैव स्वार्थमर्थान्तरे वर्तते भेदस्यागाधेयोपभुक्तव्यपेक्ष्यैव व्यवतिष्ठत इति प्रसिद्ध-स्तस्य तथाभूतोऽर्थो गौण इति व्यपदिश्यते, यत्र तु लोकेऽर्थान्तरत्वेन प्रसिद्धिस्तत्र मुख्यत्वमेव। यथैव रूपादेव केचित्पदार्थाः केषुचित्कर्मसु योग्यत्वेनाश्रितशक्तयः साधनत्वेन प्रसिद्धसंबन्धास्ते च दर्शनमात्रादेव विशिष्टविषयास्तत्रतत्राव्यभिचारेण प्रतीयन्ते। तद्यथा— सीरासिमुसलादयः कृषिवधावहननादिषु प्रयोगैकनेत्ररूपत्वमिव प्रतिपन्ना गृह्यन्ते। न चैषां कर्मान्तरेषु शक्तयो न प्रविशन्ति। प्रसिद्ध्यानुरूपपरिकल्पितमेषां नियतक्रियाविषयसाधनत्वं व्यवस्थितं लोके। ते तु कर्मान्तरेषूपानीयमानाः साधयन्तोऽपि तदर्थं न तदङ्गत्वेनार्थव्यपदेशं लभन्ते। तथैवैते गवादयः शब्दाः प्रत्यायकत्वस्य विच्छेदाभावाद्रूपपरिग्रहेण प्रत्यायनशक्तिपरिग्रहेण च केषुचिदर्थेषु लोके प्रसिद्धसंबन्धाः श्रुतिमात्रादेव तद्विषयत्वेनावतिष्ठन्ते। प्रत्यायनशक्तिमात्रं तूपादायान्यत्र प्रयुज्य-मानाः प्रत्याययन्तोऽपि तानर्थान् तत्संबन्धित्वेन लोकव्यवस्थाप्रसिद्धिं न लभन्ते। तस्माच्छ्रुति-शब्दानां येष्वर्थेषु तादर्थ्यमवसीयते तमेषां प्रसिद्धेः मुख्यमर्थमाचक्षते। यत्र तु श्रुतिमात्रविषयम-प्राकृतं यत्नमभिकस्य निमित्तान्तरा प्रतीतिस्तमप्रसिद्धं गौणमित्याहुः। अत्राप्युच्यते, प्रसिद्धिर्नाम प्रज्ञानं न च प्रज्ञाने कश्चिद्विशेषोऽस्ति। तदुक्तम्—

प्रसिद्धिरिति विज्ञाने न चास्योनातिरिक्तता।
तस्मान्न तत्कृतः शक्यो विशेषो वक्तुमञ्जसा॥

अपि च, पुरारात्प्रभृतीनामाख्यातसरूपाणां च प्रसिद्धाप्रसिद्धार्थाभिधायिनां गौणमुख्य-प्रविभागः प्रसज्यते। यथा— पुरा विद्योतते नटेन स्म, पुरा ब्राह्मणा अधीयते, दूराद्वीयो अपसेध शत्रून्, आराच्छत्रुमपबाधस्व रूपं, वायुर्वायुरभ्वोऽभ्वस्तेन तेनेति। किञ्च गवादि-शब्दानामपि वागादिष्वप्रसिद्धेर्गौणताप्रसङ्गः। तस्माच्छ्रोत्रगतप्रसिद्धेर्मूलं तद्व्यवगतं यद्वस्त-

प्रयोगित्वं मुख्यगौणप्रविभागाय प्रकल्पते । यस्य बहुशः प्रयोगः स मुख्योऽल्पशस्तु प्रयुज्यमानो गौण इति । तदपि न सम्यक् । अल्पशोऽपि प्रयुज्यमानो नासति सामर्थ्ये प्रत्याययेदतः सोऽपि शब्दात्प्रतीयत इति मुख्य एव । अत्रापि च प्राग्वदेव गवादीनां वागादिषु गौणताप्रसङ्गो वक्तव्यः । न च बह्वल्पप्रयोगिता मुख्यगौणत्वे हेतुः । तथा हि –

मण्डकैर्बहुशस्तृप्तिः कदाचित्खण्डमोदकैः ।
न तस्य मण्डका मुख्या गौणा वा खण्डमोदकाः ॥

एवं तर्हि केवलादेवशब्दाद्योऽर्थः प्रतीयते स मुख्यो यस्तु सोपपदात् स गौणः । नहि यथा केवलादग्निशब्दात् ज्वलनप्रत्ययो भवत्येवं माणवकप्रत्ययः पदान्तराधीनत्वात् । यत्रापि पदान्तरं न श्रूयते तत्राप्यर्थप्रकरणापेक्षं तदेव व्याप्रियते । तदुक्तम्—

अर्थप्रकरणापेक्षो यो वा शब्दान्तरैस्सह । प्रयुक्तो गमयत्यर्थं स गौण इति गीयते ॥

एतदप्ययुक्तं यस्य हि शब्दस्य यद्रूपं कस्यचिदर्थस्य निमित्तं सोपपदादस्यापि तस्य तत्तदेव न च शक्यं निमित्ते सति नैमित्तिकेन भवितुम् । उपपदं तु विद्यमानमपि द्योतकत्वेनापेक्ष्यते । यथैव चक्षुषः प्रकाशानुग्रहापेक्षित्वे चिरमर्थो, यथा वा, मुक्तसंशयस्य मुख्यस्य वर्णक्रममात्राग्रहणसंस्कारस्मृतिसंबन्धानुभवापेक्षित्वं तथात्रोपलमपि नैव विना सामर्थ्येनापेक्षितुं शक्यते । अपेक्ष्यमाणमपि द्योतकत्वेनेतिकर्तव्यतास्थानीयत्वान्न मुख्यतां विहन्ति । तेन विनाप्युपपदेन स तस्यार्थो भवत्येव कथंचित्तु नाभिव्यज्यते । तद्यथा गवादिशब्दानां पृथिव्यादिः । एवं तर्हि नित्यं माणवकादिशब्दसमुदायादस्यार्थस्य प्रतीतेः कण्ठादिवत्समुदायवाच्यत्वे सत्यग्न्यादेरवयवस्य तत्र गौणत्वमिति । तदपि नास्ति । अन्वयव्यतिरेकाभ्यामर्थभेदप्रतीतेस्तत्र समुदायप्रतीतिर्भवति । यत्रावयवार्थो विरोधाय त्यक्तभेदः समुदायार्थ एव प्रतीयते गम्यते त्वत्राग्निशब्दस्य पैङ्गल्यं माणवकशब्दस्य पिण्डस्वरूपं विविक्तं वाच्यम् । अतः प्रत्यात्मिकयोरुभयोरपि वाच्यवाग्मुखयोरिति । तन्नैतदस्यात् । अनुगतस्वार्थपदद्वयगम्यत्वान्नीलोत्पलवत् वाक्यार्थोऽयम् । अतश्च तस्यावयवापेक्षया गौणत्वमिति । तदपि न । न ह्यत्राग्निपदार्थेऽग्नित्वमस्ति । न चानन्वितपदार्थो वाक्यार्थः संभवति । अस्ति तर्हि स्वरूपशब्दो नित्यं वर्तते । स एवास्यान्तरङ्गो व्यभिचारी शब्दान्तरैश्च असाधारणार्थः । तत्र चानुपदेशा प्रवृत्तिः सर्वेषां स्वरूपं तु शब्दानामर्थेष्वध्यारोप्यते । यो गोशब्दः सोऽयं पिण्डः । तद्यथा– यो वृद्धिशब्दः स आदैच् इति । तत्र स्वरूपेष्वेव श्रुतयो नित्यावरुद्धाः । अर्थस्वरूपयोस्तु रूपविपर्यासमात्रे सर्वलोकव्यवहारः क्रियते । नियतस्वरूपं श्रूयते द्वितीयस्थानापन्नविपर्यासं हि स्वरूपं गौणव्यपदेशे निमित्तत्वं प्रतिपद्यते । तदाह–

तत्र स्वरूपं शब्दानां सर्वार्थेष्वनुपज्यते । अर्थमात्रं विपर्यस्तं स्वरूपे तु श्रुतिः स्थिता ॥

रूढ्या यत्रासदर्थोऽपि लोके शब्दे निवेशितः ।
स मुख्यस्तत्र तत्साम्याद्गौणो ह्यत्र स्खलद्गतिः ॥

अत्रापि पञ्चालस्यापत्यानि पञ्चालाः. तेषां निवासो जनपदः पञ्चालाः. पाणिनिना प्रोक्तो ग्रन्थः पाणिनीयः, तमधीते वेत्ति वा पाणिनीयः शिष्यः इत्यादिषु शब्दस्वरूपस्य द्वितीयस्थानापन्न विपर्यासत्वाद्गौणत्वं प्राप्नोति । एवं तर्ह्यर्थभेदान्नामाख्यातशब्दानामिव श्रुतिरूपसादृश्येऽपि गवादि-शब्दानां भेद एव नित्यो मुख्यः परमार्थेन विज्ञायते । दुर्ज्ञानत्वाच्च भेदस्य स्वरूपाश्रयेणैकत्वेन प्रकृतिशब्दानां प्रत्ययार्थेषु लुबादिव्यवहारमात्रं शास्त्रेण क्रियते । गौरिव गौर्वाहीकः, चञ्चेव चञ्चा देवदत्तः । तत्र यथा स्वमप्यर्थाभिधाने शास्त्रे प्रवृत्त्यपेक्षया मुख्यगौणप्रविभागः स्वतोऽर्थे प्रवर्तमानो मुख्यः, शास्त्रेण तु वियुक्तो गौण इति । ननु च शुक्लादिशब्दानां मतुब्लोपात् तद्वति द्रव्ये वर्तमानानां गौणताप्रसङ्गः । यतो न निमित्तवत्स्वर्थेषु निमित्तं स्वरूपप्रत्ययानिमित्तत्वं, निमित्तानि प्रतिपाद्यमानानि प्रतिलब्धरूपसंप्ररोहाणीव गौणमुख्यव्यापारमवतरन्ति । तेषां हि सत्यप्यास्नाम्नातानां ममत्वे तदात्माश्रय एव प्रसिद्धो लोके । एवमपि गर्गा विदाः पञ्चाला इति । प्रकृतिशब्दानां प्रत्ययार्थे शास्त्रद्वारेण प्रवृत्तेर्गौणताप्रसङ्गः । तस्मान्न कथंचिद्गौणमुख्यप्रविभागः प्रकल्पत इति ।

अत्रोच्यते यः साक्षादेव शब्दात्प्रतीयते सोऽर्थो मुखमिव भवतीति मुख्य इत्युच्यते । तथा हि । शाखादिभ्यो य इत्येवमिवार्थे मुख्य इत्ययं शब्दप्रयोगो भवति । यस्तु खलु प्रतीतार्था वलम्बिगुणसंबन्धव्यवधानेन गम्यते स गुणेभ्य आगत इति गौणो भवति ।

ननु च यद्गिरिशिखरमारुह्य प्रेक्षते तदपि प्रत्यक्षमेवेति न्यायाद्गुणव्यवधानेनापि शब्दतः प्रतीयमानोऽर्थो मुख्य एवेति युज्यते । नहि स्वसामग्रीव्यवधानं कारकाणां कारकार्थं विघ्नन्ति । अश्वेनापि हि ग्रामं गच्छन् गन्तैव भवति । नैवम्, अस्त्यत्रापरोऽपि विशेषः । अनादृत्यैनं माणवकप्रत्ययं ज्वलनमग्निशब्दात्प्रतियन्तो दृश्यन्ते । न त्वनादृत्य ज्वलनप्रत्ययं माणवकं प्रतियन्ति । कुतः पुनरेतत् ? योऽग्निसदृशो विवक्ष्यते । तत्र तत्राग्निशब्दो निपतति । विगतसादृश्याच्चापयन्नुपलक्ष्यते अतोऽग्निसादृश्यमस्य प्रवृत्तौ निमित्तम् । न च ज्वलने प्रतीते तत्सादृश्यं प्रतीयते । तस्माज्ज्वलने अग्निशब्दो मुख्यो माणवके तु गौण इति । तदाहुः—

प्राक्प्रतीतस्य मुख्यत्वं मुखवत्प्रथमोद्गतेः । पश्चाद्गम्यस्य गौणत्वं गुणागमनहेतुकम् ॥

योऽर्थे प्रवर्तमानोऽपि यस्यार्थं या च लम्बते ।
निमित्तं तत्र मुख्यः स्यान्निमित्ती गौण इष्यते ॥

नन्वेवं सति खपुष्पशशविषाणादीनां स्वार्थाविनाभूतगुणाभावात् गौणप्रयोगाभावप्रसङ्गः। तथाहि ; यस्मात्खपुष्पमाला शशविषाणं भवत् सिद्धान्त इति प्रयोगस्तत्र कतरत्त्वयान्यत्खपुष्पादिकमात्मादिव्यतिरिक्तमग्निसिंहगवादिपदधारितं यद्गुणद्वारेणात्मादिषु प्रवर्तमाना खपुष्पादयो गौणा भवेयुः । अतः प्रथमप्रतीतत्वात् खपुष्पादेरात्मादिरर्थो मुख्यत्वादपैति । कथमसतो मुख्यत्वमिति चेत्तुल्यमिदं गौणत्वेऽपि । उच्यते ; खपुष्पशशविषाणादयः शब्दा अत्यन्ताभावाश्रयिषु पदार्थेषु लब्धमुख्यव्यपदेशा नास्तीत्यादिप्रयोगादात्मादिषु प्रयुज्यमाना गौणभावं लभन्ते । सदसती तत्त्वे इति न्यायात्पुष्पमित्युक्ते अस्ति नास्तीति प्रसङ्गः । तत्र यथा लतादिसंबन्धादस्तीति गम्यते तथाऽऽकाशादिसंबन्धान्नास्तीति गम्यते । कथं तर्हि खपुष्पं नास्तीति प्रयोगः ? पूर्वेणैवाभिहितेऽभावे नास्तिशब्दोऽनुवादक इति केचित्, बाधक इति केचित्। यदि वा खस्य पुष्पमित्यवयवार्थौ प्रसिद्धौ समासाच्च राजपुरुषादिवत्सामान्यतो दृष्टेनानुमानेन षष्ठ्यर्थस्मृतिः प्रसक्ता । न च कदाचिदाकाशस्य कुसुमानाश्रयत्वमवधारितपूर्वं तस्येतरसंसर्गानुसन्धानं वार्यते । एतेन नास्ति शशविषाणमित्यपि व्याख्यातम् ।

अथवा शशमूर्धवर्तिनां पृथिव्यवयवानामुपर्युपरि हीयमानदृढदीर्घसन्निवेशरूपेणापरिणताश्रीचैर्वृत्त्या यदवस्थानं सोऽस्य वाक्यस्य विषयः संभवतीत्यविरोधः । न चैतद्वाच्यं अभावो भावशब्दैर्नाभिधीयत इति । यतः—

यां निनीषोः क्रियामाहुर्नयन्तीत्येवमादयः। तिष्ठतीत्यादिभिस्तैस्तु शब्दैः सैवाभिधीयते॥

अतो लब्धमुख्यार्थानां खपुष्पशशविषाणादिशब्दानामन्यत्रापि प्रसिद्धाऽन्यथावस्थाविषये गौणः प्रयोग उपपन्नो भवति ।

ननु च सादृश्येन प्रवर्तमानो गौण इत्यभ्युपगमे प्रकृतिषु मृद्भवकादय इति प्रतिमासु वासुदेवादय इति चित्रेषु पर्वतादय इति शुक्तिकायां रजतमिति रज्जावहिरिति मृगतृष्णायां तोयमिति अलातसम्पाते चक्रमिति पयःपूरत्सूर्यरश्मिषु सुरायुधमिति क्षुपलतादिषु गन्धर्वनगरमिति प्रतिबिम्बे स्तम्बेरम इति कर्णश्वेडायां घोष इति आलोकाभावेऽन्धकार इति च यो व्यपदेशस्तस्यापि गौणत्वं प्राप्नोति । एतेषामपि हि प्रवृत्तौ सादृश्यमेव निमित्तम् । तथा हि । मृगपश्वादयः कस्यचिदेव सदृशस्य धर्मस्य भावादुपमानोपमेयसम्बन्धे सति इवे प्रतिकृतावित्येव प्रकरणविहितानां प्रत्ययानामुत्पत्तौ निमित्तत्वं लभन्ते । युक्तं चैतत् । यतः—

मृगपश्वादिभिर्यावान्मुख्यैरर्थः प्रसाध्यते। न तावान्मृन्मयेष्वस्ति तस्मात्ते विषयाः कुतः॥

एतेन प्रतिमादिषु वासुदेवादयो व्याख्याताः । यथा हि ते मुख्यावरप्रदानदानवोच्छेदादिकर्मसु साधनत्वेन व्यवतिष्ठन्ते न तथा ग्रावमया वा दारुमया वा । तदुक्तम् —

त्रैलोक्यत्राणसामर्थ्यं साक्षाद्विष्णोर्यदुच्यते ।
शिल्पिभिः कल्प्यमानस्य न तदर्चासु दृश्यते ॥

एवं चित्रे पर्वतादिस्वरूपस्य निम्नोन्नतादित्वेन यद्ग्रहणं तदपि तत्सहचरितप्रपातप्रतिघातादेरभावादधः क . . . चावस्थाने निम्नोन्नतवृत्तेर्निवृत्तिदर्शनादयथार्थमेवावस्थाप्यते । तदुक्तम्—

यत्र निम्नोन्नतं चित्रे स्वरूपं पर्वतादिभिः । न तत्र प्रतिघातादिकार्यं तद्वत्प्रवर्तते ॥

शुक्तिकायां तु प्रत्ययाधीनेऽपि रजतरूपावधारणे क्वचित्तद्विषयाणां प्रत्ययानां व्यभिचारेण या प्रवृत्तिः सैवामुख्यभावं व्यवस्थापयति । यदाह—

यद्यपि प्रत्ययाधीनमर्थतत्त्वावधारणम् । न सर्वः प्रत्ययस्तस्मिन्प्रसिद्ध इव जायते ॥

रज्जुद्रव्ये यद्यपि वर्णसंस्थानद्वारेण सर्पबुद्धिः पुनःपुनरुत्पद्यते, तथापि यत्साधारणं कार्ष्ण्यदैर्घ्यादि तद्पास्य श्वासदंशादिभिरसाधारणधर्मैर्मुख्यविषयं परिच्छिद्य गौणत्वमवधार्यते । उक्तं च,

यदसाधारणं कार्यं प्रसिद्धं रज्जुसर्पयोः । तेन भेदः परिच्छेद्यस्तयोः स्वरूपेऽपि दर्शने ॥

मृगतृष्णायां पुनर्यद्यपि सलिलनिर्भासा चक्षुर्द्वारिका तथाभूतैव बुद्धिरुत्पद्यते । तथापि स्पर्शनस्नानपानादीनामभावात्तद्देशप्राप्तौ चादर्शनान्नेदं सलिलमिति प्रत्ययेन बाध्यते । आहुश्च—

दर्शनं सलिले तुल्यं मृगतृष्णादिदर्शनैः । भेदात्तु स्पर्शनादीनां न जलं मृगतृष्णिका ॥

अलातचक्रेऽपि चक्रबुद्धौ चक्षुषा रूपप्रबन्धावग्रहवत् ग्रहस्तेन स्पर्शप्रबन्धोऽवगृह्यते । क्रियाविरामे च तस्य ज्योतिषश्चक्रवदाकारो नोपलभ्यते । अविच्छिन्नाग्निनिपातेनैव हि ज्योतिषा नित्यावरुद्ध इव प्रायेण तत्र रूपग्रहणदेशो रूपग्रहणकालश्च विभाव्यते । तस्मादपार्थं तद्ग्रहणमविषयो मुख्यस्य शब्दस्येति । उक्तं च—

स्पर्शप्रबन्धो हस्तेन यथा चक्रस्य सन्ततः । न तथालातचक्रस्य विच्छिन्नं स्पृश्यते हि तत् ॥

एवमिन्द्रायुधेऽपि तथा रात्रौ प्रदीपदीप्तिसन्निपातान्नीलोत्पलादीनां वर्णभेदो लक्ष्यते । तथा हि—न सूर्यरश्मिसंपर्काद्धनारघट्टादिपयः पृषतामिति मिथ्यात्वाद्गमुख्यत्वम् । तदाह—

प्रसिद्धार्थविपर्यासनिमित्तं यच्च दृश्यते । यत्तस्माल्लक्ष्यते भेदस्तमसत्यं प्रचक्षते ॥

एतेन क्षुपातपादिषु गन्धर्वनगरादयो व्याख्याताः । देशविशेषेषु क्षुपप्रावादौ विप्रकीर्यमाण आतप उपर्यवस्थिताभ्रनिघातात्प्रतिनिवृत्तिः क्षुपादीनामपचितपरिमाणानां परिमाणोपचयमावहत् गृहप्राकारतोरणोपवनसन्निवेशेनावभासमानो गन्धर्वनगरमित्युच्यते । तत्र यथा वप्रादिभिर्मुख्येषु नगरेषु गच्छतां प्रतिघातो दस्युभयरक्षादीनि च कार्याणि च प्रकल्पन्ते न तथा गन्धर्वनगरेषु तद्देशस्थैरेव च तानि न दृश्यन्त इति न तेषां मुख्यशब्दविषयत्वम् । तदाह—

वप्रप्राकारतल्पैश्च स्पर्शनावरणे यथा । नगरेषु तथा नैवं गन्धर्वनगरेषु ते ॥

प्रतिबिम्बं तु हस्त्यादिसरूपमादर्शनादिषु दृश्यमानमपि प्रमाणभेदेनायथार्थमवसीयते । हस्त्यादिप्रमाणेन प्रकृष्टदेशव्यापिना भवितव्यम् । न चादर्शस्यान्तरीयान्देशः संभवति । तदुक्तम्-

महानाव्रियते देशो मुख्यैः स्तम्बेरमादिभिः । अल्पदेशान्तरावस्थं प्रतिबिम्बं तु दृश्यते ॥

कर्णक्ष्वेडायामप्यश्रवणत्वेन घोष इति व्यपदेशो न मुख्यः । तदाह—

कर्णौ पिधाय यः शब्दः श्रूयतेनाहताह्वयः । न तस्य घोष इत्याख्या मुख्यवृत्त्योपपद्यते ॥

एतेनालोकाभावेऽन्धकारव्यपदेशोऽपि गौणार्थविषय एवेत्युक्तं भवति । तदुक्तम्—

यत्र न प्रथते किञ्चित्तत्र तावन्न विभ्रमः । सुषुप्त इव भूच्छाया तमोभावोऽथवेक्ष्यते ॥

अत्रोच्यते । आकृतिवादिनो मते प्रतिकृतिप्रतिमाचित्रादिपुत्तलकादिषु गवादिव्यपदेशा मुख्या एवेति न गौणतां विगाहन्ते । न हि तत्र गौणताहेतुः सादृश्यं परिस्फुरति । शुक्तिकारज्जुमृगतृष्णादिषु विपर्ययज्ञानतो य एते रजतोरगजलादिव्यपदेशास्तेऽपि भ्रान्तिमुख्यत्वेन तत्तद्भावापत्तयो न गौणाः । यतः-

अत्यन्तविपरीतोऽपि यथा योऽर्थोऽवधार्यते । यथा सम्प्रत्ययं शब्दस्तत्र मुख्यः प्रयुज्यते ॥

आचार्याश्च पूर्वेऽपि सर्वत्र तुल्यमेव शब्दस्य प्रवृत्तिनिमित्तं भवितुमर्हतीति मन्यमाना बुद्धिप्रतिभासमात्रेणैव शब्दस्यार्थेषु प्रवृत्तिं मन्यन्ते । तद्यथा—

सन्निहितरजतशकले रजतमतिर्भवति यादृशी सत्या ।
भेदानध्यवसाये शुक्तावपि तादृशी स्फुरति ॥

अलातचक्रादिषु च त्रिषु चक्रमिव चक्रमायुधमिवायुधं नगरमिव नगरमित्यवयवशब्दानां यद्यपि गौणत्व घटते तथापि समुदायशब्दानामेतेष्वेवार्थेषु स्वरूपासङ्गान्मुख्यत्वमेव ।

यथा ह्यग्न्यादयः शब्दा ये स्वरूपपदार्थकाः । संज्ञिभिः संप्रयुज्यन्ते तेषां सर्वत्र मुख्यता ॥

अग्निदत्तस्तु योऽग्निस्स्यात्तत्र स्वार्थोपसर्जनः । शब्दभेदार्थवृत्तित्वाद्गौणत्वं प्रतिपद्यते ॥'

एवं गन्धर्वनगरादयोऽपि यदा दृष्टनष्टादिपदार्थेषु तत्साधर्म्यात्प्रयुज्यन्ते तदा गौणा भवन्ति । प्रतिबिम्बेषु यदादर्शादिप्रतिहतनयनरश्मिना स्वमुखादय एव दृश्यन्ते तथापि न गौणत्वमपि तु देशान्तरावस्थानेन प्रतिभासाद् भ्रान्तिमुख्यत्वमेवार्थान्तरमेव च्छायारूपमुत्पद्यते तस्य प्रतिबिम्बं मुखच्छायेति व्यपदेशो मुख्यत्वं मुखमित्यादौ तु गौणत्वं भवति । कर्णक्ष्वेडायामपि यदा श्रोत्रेन्द्रियस्य अग्निवृत्तिनिरोधाज्जाठराग्निपच्यमानान्नरसादिशब्दः श्रूयते, अनाहताख्यं वा शब्दब्रह्मोन्मिषति तदा तयोः घोषव्यपदेशो मुख्य एव । किं पुनरनाहताख्यं शब्दब्रह्म ?

उच्यते । शब्दब्रह्मणश्चतस्रोऽवस्थाः, वैखरी मध्यमा पश्यन्ती सूक्ष्मेति । तत्र येयं स्थानकरण प्रयत्नक्रमव्यज्यमानगकारादिवर्णसमुदायात्मिका वा सा वैखरी। तत्र विशिष्टं खं सुखमिति दुःखमिति वा राति प्रयच्छतीति विखरो देहेन्द्रियसङ्घातः। तथा च श्रुतिः, 'न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्त्यशरीरं वाव सन्तं न प्रियाप्रिये स्पृशत' इति तत्रभवा वैखरी । या पुनरन्तस्सञ्जल्परूपा क्रमवती श्रोत्रग्राह्यवर्णाभिव्यक्तिरूपा सा मध्यमा। या तु वर्णविभागाभावाद्क्रमा स्वयंप्रकाशा च सा पश्यन्ती । या पुनरनाद्यविद्यावासनोपप्लवमानशब्दार्थभेदरहितावबोधरूपब्रह्मशब्दवाच्या स्वरूपज्योतिरेवात्मनोऽन्तरनपाया प्रकाशते सा सूक्ष्मा । तदुक्तम्—

स्थानेषु विधृते वायौ कृतवर्णपरिग्रहा । वैखरी वा प्रयोक्तॄणां प्राणवृत्तिनिबन्धना ॥
केवला बुद्ध्युपादानक्रमरूपानुपातिनी । प्राणवृत्तिमतिक्रम्य मध्यमा वाक्प्रवर्तते ॥
अविभागा तु पश्यन्ती सर्वतः संहृतक्रमा । स्वरूपज्योतिरेवान्तः सूक्ष्मा वागनपायिनी ॥

श्रुतिरप्याह, चत्वारि वाक्परिमितापदानि । तानि विदुर्ब्राह्मणा ये मनीषिणः । गुहा त्रीणि निहिता नेङ्गयन्ति । तुरीयं वाचो मनुष्या वदन्ति । तत्र गुहाशयेषु त्रिषु यदेतत्सूक्ष्मेति गीयते ते तदनाहतमित्यामनन्ति । एवमालोकाभावेऽन्धकार इति प्रतीतेर्विपर्ययज्ञानत्वाच्छुक्तिकादौ रजतादिबुद्धेरिव भ्रान्तिमुख्यत्वमेव न गौणता ।

ननु चोत्तरकालभाविना सम्यग्ज्ञानेन यस्य बाधस्तदेव विपर्ययज्ञानमन्धकारे तु तदभावात् कथमिवैतद्युज्यते ? तत्र हीदमीदृशमल्पं बहुबहलमच्छं गच्छति तिष्ठत्युत्पद्यते विनश्यत्यर्थक्रियां करोतीति वस्तुधर्मनिबन्धनेन देशकालपुंविशेषेषु सर्वेष्वाबाध्यमानो प्रत्ययव्यपदेशो दृश्यते । तथाहि यस्तदानीं गिरिगुहास्वपि तमः . . अतसीकुसुमश्याममासीत्तदानीमुपवनेष्वप्यञ्जनचयप्रौढं वर्तते सम्प्रत्याच्छादिता दिशः सन्तमसेनेति यादृगेतत्तत्रैकत्र प्रतीतिस्तादृगन्यत्रान्यदापि यादृगेकस्य तादृगन्यस्यापि परिदृश्यते । अलोकोत्पत्तावपि विनष्टं तम इति प्रतीतिर्न पुनर्मिथ्यैतदिति किमस्याः प्रतीतेः कारणमिति चेद्व्यवहिततमःप्रतिभासे विष्फारिते चक्षुषि दर्शनात्तदभावे चादर्शनात्तदेवात्र कारणम् । चक्षुष्मन्तो हि तमसि निलीयन्ते तमःपरिहरन्तोऽन्येन पथा वा गच्छन्ति ।

ननु निमीलिताक्षस्यापि तमःप्रतिपत्तेर्न चक्षुषः कारणत्वम् । अत्रैके वर्णयन्ति निमीलिताक्षस्य बहिर्वृत्तिनिरोधादन्तःसंविलीनेन्द्रियवृत्तिः पक्ष्मणोरेव छायां गृह्णातीति । न च गोलकशौक्ल्यस्यापि ग्रहणमस्ति; सामीप्यात् । अन्यस्यापि च तमःप्रतिपत्तेर्नैतदेवमिति चेत्तन्न जानीमः। त एवात्र प्रष्टव्याः । अन्ये त्वाहुः । यथा विष्फारिताक्षस्येदमियमीदृशं चेति स्पष्टरूपतयावगतिर्नैव निमीलिताक्षस्य तस्य न किञ्चित्पश्यामीति प्रतिपत्तिप्रत्ययस्तमयात् । यद्यपि चात्र प्रतिभासः

तथापि निमित्तपर्यालोचनया तस्य मिथ्यात्वेऽन्यस्य किमायातम्? न हि स्वप्ने रजतज्ञान-मिथ्यात्वेऽन्यदापि रजतज्ञानं मिथ्याभवितुमर्हति । अत एव चोन्मीलिताक्षस्य बाधकं विज्ञान मुत्पद्यते। न पुनस्तमसीति मूर्तद्रव्यच्छाया च तमः पार्थिवं हि द्रव्यं यस्यां दिश्यालोकस्तदन्यतः छायामारभते । सा च सर्वैरपि वस्तुत्वेन प्रतीयते व्यपदिश्यते इयं छाया गम्यतां अस्यां छायायामुपविशाम इछाया मधुरशीतलेति । तदेवमखिलवस्तुनि साधर्म्येणैव चक्षुषोपलक्ष्यमाणे कृष्णरूपे तमसि कथमभिधीयते न तमो नाम किञ्चिद्वस्तुरूपमस्तीति? उच्यते, अस्त्येतत्। किन्तु युक्त्या न संगच्छते। तथा हीदं तम इति साक्षात्कारेण प्रतिभासाल्लिङ्गादन्य एवायं यदि परं प्रत्यक्षमेतद्विज्ञानं स्यात् । तत्तु त्रेधा– आत्मप्रत्यक्षं मनःप्रत्यक्ष मिन्द्रियप्रत्यक्षं चेति । तत्र विनैव ग्राहकान्तरमात्मनो यदपरोक्षलक्षणं विज्ञानं तदात्मप्रत्यक्षम्। तद्यानुभवस्येव स्वप्रकाशतया वास्याद्विषयस्यैवानुभूयमानतया न तावत्प्रकाशतया तमसोऽनुभूयमानत्वेन प्रतिभासात् । नाप्यनुभूयमानतया विनैवेन्द्रियैरयोगिनो विषये ग्रहणायोगात् । केवलमनस्सहायस्यात्मनो यद्विज्ञानं तन्मनःप्रत्यक्षं, तदप्यन्तरनुभूयमानसुखदुःखादिविषयं वा स्यात् । बहिरनुभूतप्रियस्त्व-गादिविषयं वा न तावदान्तरं इदमिति बहुरूपतया तमसः प्रतिपत्तेः । नापि बाह्यम् । इन्द्रियान्तरनिरपेक्षस्य मनसो बहिर्विषयेषु ग्रहणासामर्थ्यात् । इन्द्रियार्थमनस्सन्निकर्षजमात्मन एव यद्विज्ञानं तदिन्द्रियप्रत्यक्षम् । तत्र च चक्षुरेव रूपं गृह्णातीति नियमः । न चैतच्चक्षुषैव गृह्यते। निमीलिताक्षस्यापि कृष्णरूपतमःप्रतिभासात् । निमीलिताक्षस्य न किञ्चित्पश्यामीति प्रतिपत्तिर्भवस्तमप इति चेत्तन्न। किमक्षिणी निमील्यान्धकारं करोमीत्यादिप्रवादानामुपलब्धेः।

ननु च यदि चक्षुरिदं विज्ञानं नानुगच्छति तद्वरमिन्द्रियान्तरकल्पना । न पुनरुपलब्ध स्यापलापः? तन्न । कृष्णरूपग्राहकेन्द्रियान्तरकल्पनायामचक्षुषोऽपि रूपोपलब्धिप्रसङ्गात्। तस्य तमस्येव शक्तिरिति अन्वितप्रतिपत्तिस्तु बाढमभ्युपगम्यते । संहत्यकारित्वाच्च । अपादानाच्चेत् रूपाविशेषे कोऽत्र व्यवस्थाहेतुः? ततश्च दूरस्थिततमोदर्शिनां निमीलिताक्षाणामपि तद्दर्शनप्रसङ्गः। विस्फारिते च चक्षुषि चक्षुषा पश्यामीति प्रतीतेरप्रसङ्गः । न च कचिदपि प्रवादे मनसोऽन्यत् षष्ठमिन्द्रियं दृश्यते । यत्र तन्निमीलिताक्षपक्ष्मच्छायायां गृह्णातीति तदाचष्टामायुष्मान् । कथं छायानामेति? ननूक्तं पार्थिवं द्रव्यं यस्यां दिश्यालोकस्तदन्यतश्छायामारभते । तत्र। तस्या-स्तदारब्धत्वे तद्गुणयोगप्रसङ्गात्। ततश्च रूपमनेकप्रकारं शुक्लादि । रसः षड्विधो मधुरादि। गन्धो द्विविधः सुरभिरसुरभिश्च । स्पर्शोऽनुष्णशीतले सति पाकजः । सर्पिर्जतुमधूच्छिष्टानां पार्थिवानामग्निसंयोग मुपविशामश्छायामधुरशीतलेति च व्यपदेशो भवति । उच्यते, यत्र यत्र धारकद्रव्येण तेजःप्रसरो निरूप्यते तत्र तत्र तेजोद्रव्याभावे छायेति विपर्ययप्रतीतेरुदयः । छाया मधुरशीतलेति तस्यामेवोपचरितो व्यवहारः । यथा– आनन्दो ब्रह्मणो रूपमिति ।

एतेनैतदपि निरस्तम् । तस्य मिथ्यात्वेऽन्यस्य किमायातमिति उक्तन्यायेन द्वयोरपि मिथ्या प्रत्ययत्वात् । यदि ह्यमिथ्यैव तमो नाम वस्तुविशेषः स्यात् तदालोकसद्भावेऽप्यन्यवस्तुवद् गृह्येत । विरोधित्वादालोकस्य तदग्रहणमिति चेत्किमस्य विरोधिनालोकेन क्रियते ? तिरोधानं रूपवस्तुग्रहणे तस्यानुग्राहकत्वादतोऽन्यनीलद्रव्यवदालोके सुतरां तमसोऽपि ग्रहणप्रसङ्गः । यदि च विद्यमानमेव तमस्तिरोधीयते तस्य पदार्थाच्छादकस्वभावत्वात्तमस्यालोकेऽपि न कश्चित्कंचनापि पश्येत् । तमसा हि सर्वे पदार्थाः पिहितास्तमोऽप्यालोकेनेति । न चोपलभ्यमानानामेव तिरोधायकत्वं, शब्दे तिरोधायकेषु स्तिमितेषु वायुषु रूपविधायकेषु पटलादिषु व्यभिचारात् । अथापसारणं तदपि न, प्रदीपार्चिषान्तर्गृहमपसारिते तमसि बहिरत्यन्धकारप्रसङ्गात् । नापि विनाशः, आलोकेन हि विनाशिते तमसि आलोकापसरणसमनन्तरमुत्पत्तिकारणाभावे कुतस्तमसामुपलब्धिः ? न चालोकाभाव एव कारणं, अभावस्य शून्यरूपत्वेनाकारकत्वात् । न चान्यदुत्पादे कारणं पश्यामः ।

नन्वेवमालोकाभावमात्रमेव तम इति योग्यो स्यात् । नैवम्; नह्यालोकाभाव एवात्र गृह्यते । अभावस्याप्रमेयत्वात् । आलोकज्ञानप्रत्यस्तमयमात्रादेव चालोकाभावव्यवहारसिद्धेः । यदि चात्राभावः प्रतिभासत इत्युच्यते । ततो यस्याभावो यत्र चाभावस्तत्पदार्थद्वयपुरस्सरमत्र प्रतिभासेन भवितव्यम् । अनवच्छिन्नस्याभावस्याप्रतिपत्तेः । न च तमसि गृह्यमाणे नियमेनालोकस्मरणमस्पर्यमाणस्य व्यवच्छेदकत्वं प्रतिभासानुगुणं चालम्बनं परिकल्प्यते । न चाभावस्यातद्रूपस्य कृष्णरूपतया विशेषावभासिन्या तमस्तद्भित्यानुगुण्यमस्ति ।

अपि चास्मिन्पक्षे आलोकाभावपर्यायता तमश्शब्दस्य । ततश्च हस्तकरशब्दयोरिव तदर्थप्रतिभासभेदो न स्यात् । तस्मान्न किञ्चिदनुगृह्यते । किन्त्वग्रहण एवायं ग्रहणाभिमानः मिथ्याज्ञानस्य विपर्ययस्वरूपत्वात् । आह च विपर्ययोदाहरणं प्रशस्तपादः व्यपगतघनपटलमचलजलनिधिसदृशवपुरम्बरतलमञ्जनपूर्णपुञ्जश्यामलं शार्वरं तम इति ।

नन्वेवमन्धकारप्रतीतेर्विपर्ययत्वे विपरीतात्मिकायास्तद्भावापत्तेरिदमुदाहरणं युज्यते, न तु प्रवादात्मिकायाः । प्रवादात्मिकायां त्विदमुदाहृतं पुरस्तात् । तद्यथा– गन्धर्वपुरसुरायुधकुरङ्गतृष्णान्धकाररूपाणि असतामसत्यदुर्ग्रहदुरापमलिनानि वृत्तानि । उच्यते–

देशकालेन्द्रियगतैर्भेदैर्यद्दृश्यतेऽन्यथा । यथा प्रसिद्धिर्लोकस्य तथा तदपदिश्यते ॥

तत्र प्रसिद्धार्थविपर्ययहेतुभ्यो मद्यविषपानमरुदेशावस्थानादिभ्यः प्रसिद्धाकारेष्वर्थेषु दर्शनविपर्यासो जायते । निशायां रक्तकम्बलहस्तिवदनादिषु वर्णप्रमाणसंहत्यादिभेदो दृश्यते । तिमिरोपघातकाचकामिलादिभ्यः केशोण्डुकद्विचन्द्रादिष्वयथार्था प्रतीतिरुदयते । अर्धनिमीलिते

चक्षुषि रूपभेदप्रतिपत्तिर्भवति । भ्रमणावस्थाननौयानादिषु च पृथिवीपर्वतादीनामन्यथाक्रिया उपलभ्यते । कारणापगमे च पुनर्यथार्थैव प्रतिपत्तिरुदेति । तत्र सन्देहे सति यदन्यत्समधिगतनिमित्तमन्यथापि विपर्यये दृष्टसामर्थ्यं प्रसिद्धं लोके तस्मान्निर्णयः क्रियते । तदेवंप्रकारेष्वर्थेषु सर्वत्र लोकप्रसिद्धिरनुगन्तव्या । लोको हि सर्वेषां विदुषामविदुषां च व्यवहारव्यवस्थाहेतुरलङ्घनीयः प्रमाणं तमतिक्रामन् सर्वत्र वैरस्यं लभते । लोके च केशौण्डकद्विचन्द्रशुक्तिकारजतादीनामेव विपर्ययत्वेन प्रसिद्धिः न गन्धर्वनगरेन्द्रायुधमृगतृष्णान्धकारादीनां विपर्ययत्वेनापि वा गन्धर्वनगरादिभिः प्रभेदोऽप्यधिकं रूपमेतेषामिति ।

तदेतद्दोषहानं च गुणोपादानमेवच । ज्ञात्वा कुर्वन्कविः काव्यं प्रेत्य चेह च नन्दति ॥
निर्दोषं गुणवद्यस्य सालङ्कारं करम्बितम् । सतां वसति चेतस्सु वचस्स दिवि मोदते ॥

इत्येष दोषपरिवर्जनया गुणानामावर्जनेन च किलोभयथान्तरङ्गः ।
काले यथायथमलङ्कृतियोग उक्तस्तत्रैव बाह्यमथ तं क्रमशोऽभिधास्ये ॥

॥ इति महाराजाधिराज श्री भोजदेवविरचिते शृङ्गारप्रकाशे
दोषहानगुणोपादानप्रकाशो नाम नवमः प्रकाशः ॥



॥ श्रीः ॥

# दशमः उभयालङ्कारप्रवेशप्रकाशः

अथ अपास्तदोषस्य उपात्तगुणस्य च काव्यशरीरस्य चारुत्वोत्कर्षप्रसिद्धये प्राप्तकालः अलङ्कारयोगः उच्यते । यतः –

दीर्घापाङ्गं नयनयुगळं भूषयत्यञ्जनश्रीः तुङ्गाभोगौ प्रभवति कुचावर्चितुं हारयष्टिः ।
मध्यक्षामे वपुषि लभते स्थामकूर्पासलक्ष्मीः श्रोणीबिम्बे गुरुणि रशनादाम शोभां बिभर्ति॥

अलङ्काराश्च त्रिधा– बाह्याः, आभ्यन्तराः, बाह्याभ्यन्तराश्च । तेषु बाह्याः, वस्त्रमाल्यविभूषणादयः । आन्तराः दन्तपरिकर्मनखच्छेदालककल्पनादयः । बाह्याभ्यन्तराः स्नानधूपविलेपनाञ्जनमुखवासताम्बूलोपयोगादयः शरीरे ।

काव्यशरीरेऽपि वस्त्रमाल्यभूषणादिस्थानीयाः जात्यादयः शब्दालङ्काराः । दन्तपरिकर्मादिस्थानीयाः स्वभावाख्यानादयः अर्थालङ्काराः । स्नानधूपविलेपनादिस्थानीयाः उपमादयः उभयालङ्काराः बाह्याभ्यन्तरोभयालङ्कारव्यपदेशं लभन्ते । ये शब्दमेव व्युत्पत्त्यादिना भूषयन्ति ते शब्दालङ्काराः चतुर्विंशतिः – जातिः, गतिः, रीतिः, वृत्तिः, रचना, घटना, मुद्रा, छाया, युक्तिः, भणितिः, श्रव्यत्वं, प्रेक्ष्यत्वं, अभिनेयत्वं, अध्येयत्वं, पाकः, वाक्यं, प्रश्नोत्तरं, प्रहेलिका, गूढं, चित्रं, श्लेषः, यमकं, अनुप्रासः, इति । तेषु संस्कृतप्राकृतादिर्जातिः । सा षोढा– शुद्धा, मिश्रा, सङ्कीर्णा, साधारणी, असाधारणी, अपभ्रष्टा चेति । तत्र शुद्धा यथा–

स एष भुवनत्रयप्रथितसंयमश्शङ्करो बिभर्ति वपुषाधुना विरहकातरः कामिनीम् ।
अनेन किल निर्जिता वयमिति प्रियायाः करं करेण परिताडयन्जयति जातहासः स्मरः ॥

मिश्रा यथा—

इतिरस्तुतगुणः शिवो हरिविरिञ्चिनारायणैः करोतु भवतां विभुर्भवसमुद्रपोतायितम् ।
उमाह उवणे उवो सअणकज्जकल्लाणिणी सिवासिवपरापरं परममङ्गला मङ्गलम् ॥

सङ्कीर्णा यथा—

अकटगुमटी चन्द्रज्योत्स्ना कलं किल कोइलो लवइअ मुहुर्याम्यो वायुर्निवाअर वाइ अ ।
अवि सखि अला रक्ताशोकस्तवापि मनोमुदे नकज नकजं मानेनाद्य प्रियं प्रतिजाहुदा ॥

( अहो मनोज्ञा चन्द्रज्योत्स्ना कलं किल कोकिलो लपति च मुहुर्याम्यो वायुः निर्वेञ्जको वाति च।
अपि सखि हला रक्ताशोकस्तवापि मनोमुदे नार्थो नार्थः मानेनाद्य प्रियं प्रति यामः ॥ )

साधारणी यथा—

क्रीडन्ति प्रसरन्ति मधुकमलप्रणयिनी हन्ति। भ्रमरा मित्रसविभ्रमा मत्ता भूरि सरन्ति॥

असाधारणी यथा—

भीष्मप्रोक्तानि वाक्यानि विद्वद्वक्त्रेषु शेरते। गोसे तिविञ्छिरिच्छोली तल्लतूहे विवल्लिदा॥

अपभ्रंश यथा—

मुद्धे गहणअ गेण्हउ तं धरिमुद्दं णिए हत्थे। णिच्चउ सुन्दरि तुहउवरि सुरअप्पहा अत्थि॥

[ मुग्धे ग्रहणकं (रत्नमूल्यं) गृहाण त्वं धारय मुद्रां निजे हस्ते।
निश्चयः सुन्दरि तवोपरि मम सुरतस्पृहा अस्ति ॥ ]

अस्या अपि ह्यनुकरणे साधुत्वमिष्यते। गद्यपद्यमिश्रादिर्गतिः। सा षोढा— द्रुता, मध्या, विलम्बिता, द्रुतमध्या, द्रुतविलम्बिता, मध्यविलम्बितेति। तत्र पद्ये द्रुता यथा—

अयि विजहीहि दृढोपगूहनं त्यज नवसङ्गमभीरु वल्लभम्।
अरुणकरोद्गम एष वर्तते वरतनु सम्प्रवदन्ति कुक्कुटाः ॥

मध्या यथा—

आसीद्दैत्यो हयग्रीवः सुहृद्वेश्मसु यस्य ताः। प्रथयन्ति बलं बाह्वोः सितच्छत्रस्मिताः श्रियः॥

विलम्बिता यथा—

प्रणम्य हेतुमीश्वरं मुनिं कणादमन्वतः। पदार्थधर्मसंग्रहः प्रवक्ष्यते महोदयः।

द्रुतमध्या यथा—

अथ तुरगसमीपादुत्पतन्तं मयूरं न स रुचिरकलापं बाणलक्ष्यीचकार।
सपदि गतमनस्कश्छिन्नमाल्यानुकीर्णे रतिविगलितबन्धे केशपाशे प्रियायाः॥

द्रुतविलम्बिता यथा—

अवतु वः सवितुस्तुरगावली स्फुरितमध्यगतारुणनायका।
समविलङ्घिततुङ्गपयोधरा मरकतैकलतेव नभःश्रियः॥

मध्यविलम्बिता यथा—

दुन्दुभयो दिवि दध्वनुरुच्चै रुचकराः कपयश्च ववल्गुः।
सिद्धनिकायकराब्जविमुक्तं माल्यमथाङ्गदमूर्ध्नि पपात॥

एवं गद्येऽपि लघुगुरुमिश्रवर्णविन्यासभूयस्त्वेन द्रुतविलम्बितमध्यादिगतयो गवेषणीयाः। विदर्भादीनां वाक्यरचना वर्त्म रीतिः। सा षोढा– वैदर्भी, पाञ्चाली, गौडीया, आवन्तिका, लाटीया, मागधी च। तास्वसमस्तपदा वैदर्भी यथा—

मनीषिताः सन्ति गृहेषु देवताः तपः क्व वत्से क्व च तावकं वपुः।
पदं सहेत भ्रमरस्य पेलवं शिरीषपुष्पं न पुनः पतत्रिणः॥

समस्तपञ्चषपदा पाञ्चाली। यथा—

गात्राभिघातदलिताङ्गदजर्झराणां गण्डस्थलीलुठितकुण्डलताडितानाम्।
क्षोभस्फुटन्मुकुटकोटिविघट्टितानां नादोऽभवज्झणझणामुखरो मणीनाम्॥

यथाशक्ति समस्तपदा गौडीया। यथा—

यस्यावस्कन्दलीलाचलितवलपरिस्पन्दखर्वीकृतोर्वी-
संरम्भस्तम्भनाग्रोन्नमितभरनमत्कन्धरा सन्धिशंसीत्।
शेषो विस्फारफुल्लस्फुटपृथुलफणाफूत्कृताग्निस्फुलिङ्ग-
स्फूर्जत्सन्दोहसन्देहितविकटशिखामण्डलीरत्नखण्डः॥

वैदर्भादीनामन्तरालरीतिरावन्तिका। यथा—

एतानि निस्सहतनोरसमञ्जसानि शून्यं मनः पिशुनयन्ति पदानि तस्याः।
एते च मार्गतरवः प्रथयन्ति ताप मालम्बितोज्झितपरिग्लपितैः प्रवालैः॥

मिश्ररीतिर्लाटीया। यथा—

अयमुदयति मुद्राभञ्जनः पद्मिनीना मुदयगिरिवनालीबालमन्दारपुष्पम्।
विरहविधुरकोकद्वन्द्वबन्धुर्विभिन्द न्कुपितकपिकपोलक्रोडताम्रस्तमांसि॥

खण्डरीतिर्मागधी। यथा—

करिकवलनशिष्टैः शाकशाखाग्रपत्रैररुणसरणयोऽमी सर्वतो भीषयन्ते।
चलितशबरसेनादत्तगोशृङ्गचण्डध्वनिचकितवराहव्याकुला विन्ध्यपादाः॥

विकासविक्षेपविस्तारसङ्कोचेषु चेतसो वर्तयित्री रीतिः। सा षोढा– कैशिकी, आरभटी, भारती, सात्वती, मध्यमारभटी, मध्यमकैशिकी। तासु सुकुमारसन्दर्भार्था कैशिकी यथा—

शशिरुचिषु दलेषु नागवल्ल्या विचकिलदामनि चन्दने च हृद्ये।
कुवलयिनि पुराणसीधुपात्रे तरलदृशामपतन्दृशः प्रिये च॥

प्रौढसन्दर्भार्था, आरभटी । यथा– योयश्शस्त्रं बिभर्ति स्वभुजगुरुमदः पाण्डवीनां चमूनामित्यादि । सुकुमारेऽर्थे नातिप्रौढसन्दर्भा भारती । यथा—

उत्तिष्ठन्त्या रतान्ते भरमुरगपतौ पाणिनैकेन कृत्वा
धृत्वा चान्येन वासो विगलितकबरीभारमंसं वहन्त्याः ।
भूयस्तत्कालकान्तिद्विगुणितसुरतप्रीतिना शौरिणा वः
शय्यामालम्ब्य नीतं वपुरलसलसद्बाहु लक्ष्म्याः पुनातु ॥

प्रौढेऽर्थे नातिसुकुमारसन्दर्भा सात्वती यथा—

वन्द्यौ द्वावपि तावनार्यचरितप्राप्तप्रतिष्ठोदयौ
भीमो भीमपराक्रमः स च मुनिर्भास्वत्कुठारायुधः ।
एकेनामृतवद्विदार्य करजैः पीतान्यसृञ्जि द्विषा-
मन्येनापि हताहितास्रसरसि स्नातं क्रुधः शान्तये ॥

सुकुमारेऽर्थे प्रौढोक्तिर्मध्यमा कैशिकी यथा—

किं द्वारि दैवहतिके सहकारकेण संवर्धितेन विषपादप एष पापः ।
अस्मिन्ननागसि विकासविकारभाजि भीमा भवन्ति मदनज्वरसन्निपाताः ॥

प्रौढोक्ते सुकुमारोक्तिर्मध्यमारभटी यथा—

त्वं नागराज बहुमस्य नितम्बभागं भोगेन गाढमभिवेष्ट्य मन्दराद्रेः ।
सोढा विषह्य वृषवाहनयोगलीलापर्यङ्कबन्धनविधेस्तव कोऽतिभारः ॥

यथावच्छब्दार्थयोर्निवेशो रचना । सा षोढा – शब्दरचना, अर्थरचना, पर्यायरचना, पदरचना, वाक्यरचना, क्रमरचनेति । तासु शब्दरचना यथा—

तवाभिषेके मदनातुराया हस्ताच्च्युतो हेमघटो युवत्याः ।
लुठन्स सोपानपथे करोति टंटं टटंटं टटटं टटंटम् ॥

अर्थरचना यथा—

दिक्कालात्मसमैव यस्य विभुता यस्तत्र विद्योतते
यत्रामुष्य सुधीभवन्ति किरणा राशेः स यासामभूत् ।

यत्तपित्तमुषः स यस्य हविषे यस्तस्य जीवातवे
वोढा यद्गुणमेष मन्मथरिपोस्ताः पान्तु वो मूर्तयः ॥

पर्यायरचना यथा—

कणइल्लि चिअ जाणई कुंतपलस्साइ कीरसंलवई ।
पूसअभासं मुंचसु ण हु रे हं घव्ववाआढी ॥

[शुकेनैव जानाति शुकप्रलपितानि कीरसंलापिनी । कीरभाषां मुञ्च न खलु रेऽहं धृष्टशुकी ॥]

पदरचना यथा—

लोलल्लांगूलवल्लीवलयितवकुलानोकहस्कन्धलोलै-
र्गोलांगूलैर्नदद्भिः प्रतिरसितजरत्कन्दरामन्दिरेषु ।
खण्डेषूद्दण्डपिण्डीतगरतरलनाः प्रापिरे येन वेलां
आलम्ब्योत्तालतल्लस्फुटितपुटकिनी बन्धवो गन्धवाहाः ॥

वाक्यरचना यथा—

पतिश्वशुरता ज्येष्ठे पतिदेवरतानुजे । मध्यमेषु च पाञ्चाल्याः त्रितयं त्रितयं त्रिषु ॥

क्रमरचना यथा—

नीलाब्जानां नयनयुगलद्राघिमा दत्तपत्रः कुम्भाविभौ कुचपरिकरः पूर्वपक्षीचकार ।
भ्रूविभ्रान्तिर्मदनधनुषो विभ्रमानन्ववादीद्वक्त्रज्योत्स्नाशशधररुचं दूषयामास तस्याः ॥

परस्परमुपश्लेषोऽर्थो घटना । सा षोढा– प्रक्रान्तघटना, अप्रक्रान्तघटना, अतिक्रान्तघटना, पदघटना, वाक्यघटना, प्रकीर्णघटना चेति । तासु प्रक्रान्तघटना यथा—

स तथेति प्रतिज्ञाय विसृज्य कथमप्युमाम् । ऋषीञ्ज्योतिर्मयान्सप्त सस्मार स्मरशासनः ॥

अप्रक्रान्तघटना यथा—

अत्राप्युदाहरन्तीममितिहासं पुरातनम् । निषादस्य च संवादमृषेः संवरणस्य च ॥

अतिक्रान्तघटना यथा—

तस्य चक्रुश्चमत्कारं व्यतीतसमया अपि । स्मितार्द्रमुकुलोद्भेदाः कदम्बवनराजयः ॥

पदघटना यथा –

छिन्नेन पतता वह्नौ यन्मुखेन हठात्कृते । स्वेति हेति हरेणोक्तेः स्वाहासीत्सैष रावणः ॥

वाक्यघटना यथा—

हंस प्रयच्छ मे कान्तां गतिस्तस्यास्त्वया हृता । विभावितैकदेशेन स्तेयं यदभियुज्यते ॥

प्रकीर्णघटना यथा—

साटोपमुर्वीमनिशं नदन्तो यैः प्लावयिष्यन्ति समन्ततोऽमी ।
तान्येकदेशान्निभृतं पयोधेः सोऽम्भांसि मेघान्पिबतो ददर्श ॥

साभिप्रायवचनविनिवेशो मुद्रा । सा षोढा— पदमुद्रा, विभक्तिमुद्रा, वचनमुद्रा, वाक्यमुद्रा, समुच्चयमुद्रा, संवृतिमुद्रा चेति । तासु पदमुद्रा यथा—

निर्माल्यं नयनश्रियः कुवलयं वक्त्रस्य दासः शशी
भ्रूयुग्मस्य सनाभि मन्मथधनुर्ज्योत्स्ना स्मितस्याञ्चलः ।
सङ्गीतस्य च मन्दकोकिलरुतान्युच्छिष्टमेणीदृशः
सर्वाङ्गीणमहो विधेः परिणतं विज्ञानचित्रं चिरात् ॥

विभक्तिमुद्रा यथा—

श्रियः प्रसूते विपदो रुणद्धि यशांसि सूते मलिनं प्रमार्ष्टि ।
संस्कारशौचेन परं पुनीते शुद्धा हि बुद्धिः किल कामधेनुः ॥

वचनमुद्रा यथा—

विश्वम्भरा भगवती भवतीमसूत राजा प्रजापतिसमो जनकः पिता ते ।
तेषां वधूस्त्वमसि नन्दिनि पार्थिवानां येषां कुलेषु सविता च गुरुर्वयं च ॥

वाक्यमुद्रा यथा—

यस्त्वच्छे सलिलात्मनि प्रतिफलद्देवे त्रियामापतौ
पीयूषाकृति पर्यवस्यति किल ज्योत्स्नेति तत्त्वान्तरम् ।
तिग्मं धाम चिरं चकास्ति दिवि तत्रास्ति दिव्यः पुमान्
यं विज्ञातवतां त्रुटन्ति निखिला भूयो भवग्रन्थयः ॥

समुच्चयमुद्रा यथा—

जातश्चायं मुखेन्दुस्ते भ्रुकुटीप्रणयी पुनः । गतं च वसुदेवस्य कुलं नामावशेषताम् ॥

संवृतिमुद्रा यथा—

मणिरत्नं प्रसेनस्य तस्यानार्येण विष्णुना । लब्धं येनाद्ययोगेन तेन किं कीर्तितेन वः ॥

अन्योक्तीनामनुकरणं छाया। सा षोढा – लोकोक्तिच्छाया, छेकोक्तिच्छाया, प्रौढोक्तिच्छाया, मुग्धोक्तिच्छाया, स्खलितोक्तिच्छाया, असमञ्जसोक्तिच्छाया चेति। तासु लोकोक्तिच्छाया यथा–

शापान्तो मे भुजगशयनादुत्थिते शार्ङ्गपाणौ
मासानेतान् गमय चतुरो लोचने मीलयित्वा।
पश्चादावां विरहगुणितं तं तमात्माभिलाषं
निर्वेक्ष्यावः परिणतशरच्चन्द्रिकासु क्षपासु॥

छेकोक्तिच्छाया यथा —

यो हि दीर्घासिताक्षस्य विलासवलितभ्रुणः। कान्तामुखस्यावशग स्तस्मै नृपशवे नमः॥

प्रौढोक्तिच्छाया यथा—

तिलकमसहास्मि सोढुं घनसारेणातिभारदोषो मे।
लम्भयति च दौर्बल्यं कुङ्कुमरागो ममाङ्गानि॥

मुग्धोक्तिच्छाया यथा—

किं स स्वर्गतरुः कोऽपि यस्य पुष्पं निशाकरः। ते वृक्षाः कीदृशा मात येषां मुक्ताफलं फलम्॥

स्खलितोक्तिच्छाया यथा—

पिपिप्रिय ससस्वयं मुमुमुखासवं देहि मे तततत्यज दुदुद्रुतं भभभभाजनं काञ्चनम्।
इति स्खलितजल्पितं मदवशात्कुरङ्गीदृशः प्रगे हसितहेतवे सहचरीभिरध्यैयत॥

असमञ्जसोक्तिच्छाया यथा—

दृष्टः कथं सुतनु किं कुरुते किमस्स द्वार्तां स पृच्छति शृणोति निवेद्यमानाम्।
आस्तां किमस्य कथया कथयाशु तावदत्रागमिष्यति न वा खलु सोऽभिमानी॥

शब्दस्यार्थस्य वा परस्परमयुज्यमानस्य योजनं युक्तिः। सा षोढा– पदविषया, पदार्थविषया, वाक्यविषया, वाक्यार्थविषया, प्रकरणविषया, प्रबन्धविषया चेति। तासु योगवृत्तिपरंपरा, अगांगिभावपरंपरापर्यायपरम्परेत्यादि। पदविषया यथा—

जम्भारातीभकुम्भोद्भवमिव दधतः सान्द्रसिन्दूररेणुं
रक्ताः स्निग्धा इवौघैरुदयगिरितटी धातुधाराद्रवस्य।
लक्ष्मीमाक्रष्टुमम्भोरुहकुहरकुटीकोटरक्रोडलीनाम्

तुरङ्गकान्तामुखहव्यवाहज्वालेव भित्वा जलमुल्ललास ॥

जातिक्रियागुणद्रव्याणां युक्तिः पदार्थविषया । यथा—

स्त्रीपुंनपुंसमनयं भवमानतोऽस्मि शैलाधिराजतनया न ययौ न तस्थौ ।
साभ्रेऽह्नीव स्थलकमलिनीं न प्रबुद्धां न सुप्तां पायादेकं मदनविजयद्वेषिणस्तद्वपुर्वः ॥

वाक्यगर्भो वाक्यसमुच्चयः वाक्यसंवृतिरित्यादिर्वाक्यविषया यथा—

दिङ्मातङ्गघटाविभक्तचतुराघाटा मही साध्यते
सिद्धा सापि वदन्त एव हि वयं रोमाञ्चिताः पश्यत ।
विप्राय प्रतिपाद्यते किमपरं रामाय तस्मै नमो
यस्मादाविरभूत्कथाद्भुतमिदं यत्रैव चास्तं गतम् ॥

क्रियासमुच्चयसमभिव्याहाराभ्यासादिभिर्वाक्यार्थविषया यथा—

पुरीमवस्कन्द लुनीहि नन्दनं मुषाण रत्नानि हराऽमराङ्गनाः ।
विगृह्य चक्रे नमुचिद्विषा बली य इत्थमस्वास्थ्यमहर्निशं दिवः ॥

अभ्रङ्कषपर्वतादिवर्णनोत्पत्तिहेतुः प्रकरणविषया यथा—

मुदे मुरारेरमरैःसुमेरोरानीय यस्योपचितस्य शृङ्गैः ।
भवन्ति नोद्दामगिरां कवीनामुच्छ्रायसौन्दर्यगुणा मृषोद्याः ॥

प्रबन्धव्यापिवस्तूपपत्तिहेतुः प्रबन्धविषया यथा—

धूमज्योतिस्सलिलमरुतां सन्निपातः क्व मेघ स्सन्देशार्थाः क्वपटुकरणैः प्राणिभिः प्रापणीयाः ।
इत्यौत्सुक्यादपरिगणयन् गुह्यकस्तं ययाचे कामार्ता हि प्रकृतिकृपणाश्चेतनाचेतनेषु ॥

विधिनिषेधादेरभिधानमुक्तिः । सा षोढा— विधिः, निषेधः, अधिकारः, परिसङ्ख्या, विकल्पः, नियम इति । तेष्वप्राप्तौ प्रापणवचनं विधिः । यथा— 'शुश्रूषस्व गुरून् कुरु प्रियसखीवृत्तिं सपत्नीजने' इत्यादि । प्राप्तौ निवारणं निषेधः । यथा— 'भर्तुर्विप्रकृतापि रोषणतया मास्म प्रतीपं गमः' । विधिनिषेधयोर्न्यताधिकारो यथा— 'भूयिष्ठं भव दक्षिणा परिजने भाग्येष्वनुत्सेकिनी यान्त्येवं गृहिणीपदं युवतयो वामाः कुलस्याधयः ॥'

विधिनिषेधाभ्यां शेषप्रतिषेधाभ्यनुज्ञाने परिसङ्ख्या यथा—

पञ्चपञ्चनखा भक्ष्या वामेनाक्ष्णा न पश्यति । काठिन्यमस्याः कुचयोः किमसद्यन्नरोचते ॥

जातिक्रियागुणद्रव्येषु उभयावलम्बी विकल्पः यथा—

पुत्रेषु दारान्निक्षिप्य वनं गच्छेत्सहैव वा । धर्मार्थकामान्धर्मं वा ब्रह्म वा ब्राह्मणश्चरेत् ॥

अयोगान्ययोगात्यन्तायोगव्यवच्छेदो नियमः यथा—

विवादोऽपार्थ एवायं पार्थ एव धनुर्धरः । यो न केवलमात्मीयैः परैरप्यभिनन्द्यते ॥

उक्तेरेव प्रकारान्तराख्यानं भणितिः । सा षोढा— संभावनाभणितिः, असंभावनाभणितिः, कल्पनाभणितिः, आश्चर्यभणितिः, संवृतिभणितिः, विशेषभणितिरिति । तासु संभावनाभणितिः यथा—

सद्यो द्रावितकेतकोदरदलस्रोतःश्रियं बिभ्रती
येयं मौक्तिकदामगुम्फनविधेर्योग्यच्छविः प्रागभूत् ।
उत्सेक्या कलशीभिरञ्जलिपुटैः पेया मृणालांकुरै-
र्मातव्या च शशिन्यमुग्धविभवे सा वर्तते चन्द्रिका ॥

असंभावनाभणितिर्यथा —

क पेयं ज्योत्स्नाम्भो वदति विसवल्लीसरणिभिर्मृणालीतन्तुभ्यः सिचयरचना कुत्र भवति ।
क वा पारीमेयो बत बकुलदाम्नां परिमलः कथं स्वप्नः साक्षात्कुवलयदृशं कल्पयतु ताम् ॥

कल्पनाभणितिः यथा—

दृश्यं दृशां सहस्रैर्मनसामयुतैर्विभावनीयं च ।
सुकृतशतकोटिभोग्यं किमपि वचः सुभ्रुवः स्वदते ॥

आश्चर्यभणितिर्यथा—

ज्योतिर्ध्वस्तदिदं तमस्समुदितं जातोऽयमद्भ्यश्शिखी-
पीयूषादिदमुत्थितं विषमयं छायातजन्मातपः ।
को नामास्य विधिः प्रशान्तिषु भवेद्गाढं द्रढीयानयं
ग्रन्थिर्यत्प्रियतोऽपि विप्रियमिदं सख्यः कृतं सान्त्वनैः ॥

संवृतिभणितिर्यथा—

आभरणस्याभरणं प्रसाधनविधेः प्रसाधनविशेषः ।
उपमानस्यापि सखे प्रत्युपमानं वपुस्तस्याः ॥

विशेषभणितिर्यथा—

रेवतीवदनोच्छिष्टपरिपूतपुटे दृशौ। वहन्हली मदक्षीबः पानगोष्ठ्यां पुनातु वः॥

काक्वादिना वाक्योच्चारणं पठितिः। सा षोढा। काकुः, स्वरः, विच्छेदः, कान्तिः, अभिनयः, अपदेशः इति। तासु काकुर्यथा—

न्यस्ता न भ्रुकुटि र्न बाष्पसलिलेनाच्छादिते लोचने
　　नीतं नाननमन्यतः सशपथं नाहं स्पृशन्वारितः।
तन्व्यामग्नपयोधरं भयवशादाबद्धमालिङ्गितं
　　भंक्तास्यानियमस्य भीषणमरुन्नायं वयस्यो मम॥

स्वरो यथा—

सुभ्रूस्त्वं कुपितेत्यपास्तमशनं त्यक्ता कथा योषितां
　　दूरादेव मयोज्झिताः सुरभयः स्रग्गन्धधूपादयः।
रागं रागिणि मुञ्च मय्यवनते दृष्टे प्रसीदाधुना
　　सत्यं त्वद्विरहाद्भवन्ति दयिते सर्वा ममान्धा दिशः॥

विच्छेदो यथा—

येन ध्वस्तमनोभवेन बलिजित्कायः पुरास्त्रीकृतो
　　यो गङ्गां च दधेऽन्धकक्षयकरो यो बर्हिपत्रप्रियः।
यस्याहुः शशिमच्छिरो हर इति स्तुत्यं च नामामराः
　　सोऽव्यादिष्टभुजङ्गहारवलय स्त्वां सर्वदोमाधवः॥

कान्तिर्यथा—

यस्यारिजातं नृपतेरपश्यदवलम्बनम्। ययौ निर्झरसंभोगैरपश्यदवलं वनम्॥

अभिनयो यथा—

एद्दहमेत्तत्थणिआ एद्दहमेत्तेहिं अच्छिवत्तेहिम्। एद्दहमेत्तावत्था एद्दहमेत्तेहिं दिअहेहिम्॥

[एतावन्मात्रस्तनी एतावन्मात्राभ्यामक्षिपत्राभ्याम्। एतावन्मात्रावस्था एतावन्मात्रैर्दिवसैः॥]

अपदेशो यथा—

इतः स दैत्यः प्राप्तश्री र्नेतएवार्हति क्षयम्। विषवृक्षोऽपि संवर्ध्य स्वयं छेत्तुमसाम्प्रतम्॥

श्रुतिसुखमात्रजननं श्रव्यम् । तत्षोढा, आशीः, नान्दी, नमस्कृतिः, वस्तुनिर्देशः, ध्रुवा, आक्षिप्तिकेत्यादि । तत्र लिङ्लोड्भ्यामर्थविशेष आशीः । यथा—

भूयाद्वः श्रेयसे देवः पार्वतीदयितो हरः । पातु वः परमं ज्योतिरवाङ्मनसगोचरः ॥

रङ्गमङ्गलान्तःस्वस्त्ययनं नान्दी यथा—

भद्दं भोदु सरस्सईअ कइणो णन्दन्तु वासाइणो
अण्णाणं पि परं पअट्टदु वरा वाणी छइल्लप्पिआ ।
वच्छोमी तह माअही फुरदु णो सा किं अ पञ्चालिआ
रीदीयो विलिहन्तु कव्वकुसला जोह्लं चओरा विअ ॥

[ भद्रं भवतु सरस्वत्याः कवयो नन्दन्तु व्यासादयः, अन्येषामपि परं प्रवर्ततां वरा वाणी विदग्धप्रिया । वैदर्भी तथा मागधी स्फुरतु नः सा किं च पाञ्चालिका रीतिका विलिहन्तु काव्यकुशला ज्योत्स्नां चकोरा इव ॥ ]

स्तुतिर्नमोवाक्यं वा नमस्क्रिया यथा—

जयति ब्रह्मभूःशम्भुर्वन्देमहि महेश्वरम् । इदं गुरुभ्यःपूर्वेभ्यो नमोवाकं प्रशास्महे ॥

कथाशरीरव्यापिनो नायकादेरभिधानं वस्तुनिर्देशः यथा—

अस्त्युद्दामजटाभारभ्रान्तगङ्गाम्बुशेखरः । आदिदेवो हरो नाम सृष्टिसंहारकारणम् ॥

पात्रप्रवेशादिसूचकं वाक्यं ध्रुवा यथा—

मअवहणिमित्तणिग्गअमइन्दसुण्णं गुहं णिएऊण ।
लद्धावसरो गहिउण मोत्तिआइं गओ वाहो ॥

[मृगवधनिमित्तनिर्गतमृगेन्द्रशून्यां गुहां निरूप्य । लब्धावसरो गृहीत्वा मौक्तिकानि गतो व्याधः ॥]

अभिधित्सितरागविशेषप्रयोगमात्रफलं वचनमाक्षिप्तिका । यथा—

पअपीडिअमहिसासुरदेहेहिं भुअणभअलुआवअसिलेहिं ।
सुरसुहदेत्तवलिअधवलच्छिहिं जअइ सहासं वअणु महलच्छिहिं ॥

[ पदपीडितमहिषासुरदेहैर्भुवनभयलावकशशिलेखैः ।
सुरसुखदातृवलितधवलाक्षैर्जयति सहासं वदनं महालक्ष्म्याः ॥ ]

प्रेक्षानिमित्तं वाचिकाद्यभिनयरहितमाङ्गिकैकनिर्वर्त्यं प्रस्थानडोम्बलिकादिवाक्यं प्रेक्ष्यम् । तत्षोढा– लास्यं, ताण्डवं, छलिकं, शम्या, हल्लीसकं, रासकं इति । तेषु शृङ्गाररसप्रधानं लास्यं यथा—

उच्चिउ वालीयिअ पन्थहिं जन्तउ । पेक्खमि हत्थं होइ जइ लोअणवन्तउ ॥

[ उच्चा पालिः प्रियः पथा याति । प्रेक्षे हस्तं भवति यदि लोचनवान् ॥ ]

रौद्रवीरप्रधानं ताण्डवं यथा—

सुअवहवइअरणिसुणिअ दारुणुरोसविसट्ठपहाररुहिरारुणु ।

जलिउ ज़ाणइ णरु रिउसन्तावणु अणलसरिच्छ जइ होइ महारणु ॥

[ सुतवधव्यतिकरं निशम्य दारुणरोषविसृष्टप्रहाररुधिरारुणः ।

ज्वलितो जायते नरो रिपुसंतापनोऽनलसदृशो यदि भवति महारणः ॥ ]

उभयात्मकं छलिकम् । यथा—

णिसुणिउ पच्छा त्तुरअरउ भुण्डि हिंसि हसन्ति ।

णिअकन्तं डाढजुअलेहिं पुणु पुणु णअण बलन्ति ॥

[ निशम्य पश्चात्सुरगरवं शूकरी हिंसार्थं हसति । निजकान्तं दंष्ट्रायुगलेन पुनःपुन नं च ददाति ॥ ]

लास्यमेव देवकिन्नरविषयं शम्या यथा—

वीहेसि हरिमुहि अवि होहि मं गले लेहि सइ । कन्दइ रिट्ठासुरमारिउ कण्ठवलिउ ण पइ ॥

[बिभेषि हरिमुखि अपि भव मां च गले गृहाण सदा। क्रन्दति रिष्टासुरमारितः कण्ठवलितो न पतिः ॥]

मण्डलेन हि यत्स्त्रीणां गीतं हल्लीसकं तु तत्। तत्र नेता भवेदेको गोपस्त्रीणां हरिर्यथा ॥

हल्लीसकं यथा—

चन्दणधूसरअं आहुलिअलोअणअं हासपरम्मुहअं णीसासकिलालिअम् ।

दुम्मणदुम्मणअं सङ्कामिअमण्डणअं माणिणिआणअं किंतुह्म करट्ठिअअम् ॥

[ चन्दनधूसरमाकुलितलोचनं हासपराङ्मुखं निश्वासक्लेशितम् ।

दुर्मनसां दुर्मनस्कं संक्रामितमण्डनं मानिन्याननं किं तव करस्थितम् ॥ ]

तदेव तालबन्धविशेषयुक्तं रासः । यथा—

अइ दुम्मण दुम्मणआ अज्ज किणो पुच्छामि तुमम् ।

जेण जिविज्जइ जेण विलासो परिहिज्जइ कीस जणो ॥

[ अयि दुर्मनस्क अद्य किं नो पृच्छामि त्वाम् । येन जीव्यते येन विलासः परिह्रियते किमिति जनः ॥ ]

दशरूपकाविशेषमेव अभिनेयम् । अभिनयस्तु षोढा— आङ्गिकः, वाचिकः, आहार्यः, सात्विकः, सामान्यः, चित्रः इति । तत्र आङ्गिकः यथा—

दोर्दण्डाः क धृताङ्गदाः क नु शिरानद्धौ भुजौ द्वाविमौ
वक्त्राणि क नु कान्तिमन्ति वलिमत्केदं ममैकं मुखम् ।
वाचस्ताः क जितार्णवध्वनिघनाः क्वायं वचस्संयमो
हेलाकम्पितभूधरः क चरणन्यासः क मन्दा गतिः ॥

वाचिको यथा—

दुर्वारां मदनशरव्यथां वहन्त्या तन्वङ्ग्या यदभिहितं पुरः सखीनाम् ।
तद्भूयः शिशुशुकशारिकाभिरुक्तं धन्यानां श्रवणपथातिथित्वमेति ॥

आहार्यो यथा —

चूडाचुम्बितकङ्कपत्रमभितस्तूणीद्वयं पृष्ठतो
भस्मस्तोकपवित्रलाञ्छनमुरो धत्ते त्वचं रौरवीम् ।
मौर्व्या मेखलया नियन्त्रितमधो वासश्च माञ्जिष्ठकं
पाणौ कार्मुकमक्षसूत्रवलये दण्डोऽपरः पैप्पलः ॥

सात्त्विको यथा—

वारंवारं तिरयति दृशोरुद्गमं बाष्पपूरस्तत्संकल्पोपहितजडिम स्तम्भमभ्येति गात्रम् ।
सद्यः स्विद्यन्नयमविरतोत्कम्पलोलांगुलीकःपाणिर्लेखाविधिषु नितरां वर्तते किं करोमि ॥

उक्तानां चतुर्णामपि प्रयोगे सामान्यः यथा—

राहोश्चन्द्रकलामिवाननचरीं दैवात्समासाद्य मे
दस्योरस्य कृपाणपातविषयादाच्छिन्दतः प्रेयसीम् ।
आतङ्काद्विकलं द्रुतं करुणया विक्षोभितं विस्मया-
त्क्रोधेन ज्वलितं मुदा विकसितं चेतः कथं वर्तताम् ॥

हस्ताध्यायपदाध्याययोः कथिताऽऽभिनयविशेष मिश्रः यथा —

व्यतिकर इव भीमस्तामसो वैद्युतश्च क्षणमुपहतचक्षुर्वृत्तिरुद्भूय शान्तः ।
कथमिह न वयस्यस्तत्किमेतत्किमन्यत्प्रभवति हि महिम्ना स्वेन योगेश्वरीयम् ॥

विधिनिषेधव्युत्पत्तिहेतुरध्येयं तु षोढा— काव्यं, शास्त्रं, इतिहासः, काव्यशास्त्रं, काव्येतिहासः, शास्त्रेतिहासः इति । तेषूक्तिप्रधानं काव्यं यथा—

यदि स्मरामि तां तन्वीं जीविताशा कुतो मम । अथ विस्मृत्य जीवामि जीवितव्यसनेन किम्॥

विधायकादिशब्दप्रधानं शास्त्रं यथा—

स्निग्धोन्नताग्रतनुताम्रनखौ कुमार्याः पादौ समोपचितचारुनिगूढगुल्फौ ।
श्लिष्टांगुली कमलकान्तितलौ च यस्यास्तामुद्वहेद्यदि भुवोऽधिपतित्वमिच्छेत् ॥

अर्थप्रधान इतिहासः यथा—

हिरण्यकशिपुर्दैत्यो यांयां स्मित्वाप्युदैक्षत । भयभ्रान्तैस्सुरैश्चक्रे तस्यै तस्यै दिशे नमः ॥

शास्त्रे काव्यविनिवेशः काव्यशास्त्रं यथा—

नान्दीपदानि रतनाटकविघ्नशान्तावाज्ञाक्षराणि परमाण्यथवा स्मरस्य ।
दष्टेऽधरे प्रणयिना विधुताग्रपाणिसीत्कारशुष्करुदितानि जयन्ति नार्याः ॥

इतिहासे काव्यविनिवेशः काव्येतिहासः यथा—

स सञ्चरिष्णुर्भुवनान्तरेषु यां यदृच्छयाशिश्रियदाश्रयः श्रियाम् ।
अकारि तस्यै मुकुटोपलस्खलत्करैस्त्रिसन्ध्यं त्रिदशैर्दिशे नमः ॥

इतिहासे शास्त्रार्थविनिवेशनं शास्त्रेतिहासः यथा—

धर्मे चार्थे च कामे च मोक्षे च भरतर्षभ । यदिहास्ति तदन्यत्र यन्नेहास्ति न तत्क्वचित् ॥

उक्तिप्रत्युक्ति वाकोवाक्यम् । सा षोढा— ऋजूक्तिः, वक्रोक्तिः, वैयात्योक्तिः, गूढोक्तिः, प्रश्नोत्तरोक्तिः, चित्रोक्तिः । तासु ऋजूक्तिर्यथा—

बाले नाथ विमुञ्च मानिनि रुषं रोषान्मया किं कृतं
खेदोऽस्मासु न मेऽपराध्यति भवान् सर्वेऽपराधा मयि ।
तत्किं रोदिषि गद्गदेन वचसा कस्याग्रतो रुद्यते
नन्वेतन्मम का तवास्मि दयिता नास्मीत्यतो रुद्यते ॥

वक्रोक्तिर्यथा—

केयं मूर्ध्न्यन्धकारे तिमिरमिह कुतः सुभ्रु कान्तेन्दुयुक्ते
कान्ताप्यत्रैव कामिन्ननु भवति मया पृष्टमेतावदेव ।
नाहं द्वन्द्वं करोमि व्यपनय शिरसस्तूर्णमेनामिदानी-
मेवं प्रोक्तो भवान्या प्रतिवचनजडः पातु वो मन्मथारिः ॥

वैयात्योक्तिर्यथा—

कुशलं राधे सुखितोऽसि कंस कंस क्व नु सा राधा ।
इति पारीप्रतिवचनैर्विलक्षहासो हरिर्जयति ॥

गूढोक्तिर्यथा—

केशव यमुनातीरे व्याहतवानुषसि हंसिकां कोऽद्य ।
कान्ताविरहभयातुरहृदयः प्रायः प्रियेऽहंसः ॥

प्रश्नोत्तरोक्तिर्यथा—

क्व प्रस्थितासि करभोरु घने निशीथे प्राणेश्वरो वसति यत्र मनःप्रियो मे ।
एकाकिनी वद कथं न बिभेषि बाले नन्वस्ति पुंखितशरो मदनः सहायः ॥

चित्रोक्तिर्यथा—

कोऽयं भामिनि भूषणं कितव ते शोणः कथं कुङ्कुमा-
त्कूर्पासान्तरितः प्रिये विनिमयः पश्यापरं क्वास्ति मे ।
पश्यामीत्यभिधाय सान्द्रपुलको मृद्नन्मृडान्याः स्तनौ
हस्तेन प्रतिनिर्जितेन्दुरवतात् द्यूते हसन्वो हरः ॥

विदग्धगोष्ठीविनोदहेतुः पर्यनुयोगनिर्भेदः प्रश्नोत्तरम् । तत्षोढा– बहिःप्रश्नं, अन्तःप्रश्नं, बहिरन्तःप्रश्नं, जातिप्रश्नं, पृष्टप्रश्नं, उत्तरप्रश्नमिति । तेषु बहिःप्रश्नं यथा— (मज्जन्मकरः)

भद्र माणवकाख्याहि कीदृशः खलु ते पिता । वेलान्दोलितकल्लोलः कीदृशश्च महोदधिः॥

अन्तःप्रश्नं यथा— (ककारथकारमुक्तं दर्यसीति भवति)

काहमस्मि गुहा वक्ति प्रश्नेऽमुष्मिन्किमुत्तरम् । कथमुक्तं न जानासि कदर्थयसि यत्सखे ॥

बहिरन्तःप्रश्नं यथा— (वायुतः नरो हि वायुको वानरो भवति ।)

सुभद्रां क उपायंस्त प्रश्नेमुष्मिन्य उत्तरः । स कीदृक्कपिमाचष्टे व्योम्नि पूर्णस्थितिः कुतः ॥

जातिप्रश्नं यथा— (हैमवार करञ्जिना.)

कीदृशा भूमिभागेन राजा स्नातोऽनुमीयते । प्राङ्गणं कुरुतेत्युक्ताः किमाहुस्तदनिच्छवः ॥

सेयं गतप्रत्यागतजातिपृष्टप्रश्नं यथा —

को सो जोअणवाओ को दण्डाणं दुवे सहस्साइं ।
का काली का मधुरा किं शुकपृथुकाननच्छायम् ॥

[ कः स योजनपादः ? कः स यो दण्डानां द्वे सहस्रे ? कोशो योजनपादः, कोदण्डानां द्वे सहस्रे. ]

उत्तरप्रश्नं यथा—

किं वसन्तसमये वनभक्षः पृष्टवान्स पृथुलोमविलेखः ।
उत्तरं च किमवापतुरेतौ काननादतिमिरादपि कालम् ॥

प्रश्न एवानुत्तरः प्रहेलिका । सा षोढा— च्युताक्षरा, दत्ताक्षरा, च्युतदत्ताक्षरा, अक्षरमुष्टिः, बिन्दुमती, अर्थप्रहेलिका च । तासु च्युताक्षरा यथा— (विहङ्गिका हारेण)

पयोधरभराक्रान्ता संनमन्ती पदे पदे । पदमेकं न का याति यदि हारेण वर्जिता ॥

दत्ताक्षरा यथा— (शम्बरः.)

प्ररूढयौवनः कोऽयं कान्तयानुगतः सुखी । वने प्रयाति निश्शङ्कं शबरः सत्त्वसंकुले ॥

च्युतदत्ताक्षरा यथा— (घटः.)

विदग्धः सरसो रागी नितम्बोपरि संस्थितः । तन्वङ्ग्यालिङ्गितः कण्ठे कलं कूजति को विटः ॥

श्लोकादेरक्षरव्यत्यासेन कथनमक्षरमुष्टिः । यथा— अतिः अतिः अम्म अलं मीच रच जध फध मेलामेला मेलं मेलं फसफसफसफसः ।

अद्य मे सफला प्रीतिरद्य मे सफला रतिः । अद्य मे सफलं जन्म अद्य मे सफलं फलम् ॥

यथास्थितस्वरानुस्वारविसर्गसंयोगस्योकार्थस्य च श्लोकादेकादिवर्णस्थाने बिन्दुविनिवेशो बिन्दुमती । तद्यथा—

तवापवादः प्रत्यब्धि पताका प्रतिसङ्गरम् । फलं प्रत्यद्भुतोपायं यशांसि नतु न क्वचित् ॥

अथार्थे, ठुठठा ठुठठा ठाठा ठुंठुठे ठुंठुठे ठठा । ठाठठे ठाठठे ठिठिं ठंठं ठिठठिठी ठठः ॥ निर्भेदः,

उदधावुदधावाज्ञा संयुगे संयुगे जयः । साहसे साहसे सिद्धिः सर्वत्र तव कीर्तयः ॥

अर्थप्रहेलिका यथा— (पक्वाम्रफलम्)

उत्तप्तकाञ्चनाभासं संदष्टदशनच्छदम् । सरसं चुम्ब्यते हृष्टैर्वृद्धैरपि किमुज्ज्वलम् ॥

गुप्तक्रियापदादिप्रयोगो गूढम् । तत्षोढा— क्रियागूढं, कारकगूढं, संबन्धगूढं, वस्तुगूढं, पादगूढं, अभिप्रायगूढं चेति । तेषु क्रियागूढं यथा— (नस्य.)

स्तनजघनभराभिराममन्दं गमनमिदं मदिरारुणेक्षणायाः ।
कथमिव सहसा विलोकयन्तो मदनशरज्वरजर्जरा युवानः ॥

कारकगूढं यथा— (शरौ)

पिबन्तस्ते शरावेण वारि कह्लारशीतलम् । केनेमौ दुर्विदग्धेन हृदये विनिवेशितौ ॥

सम्बन्धगूढं यथा— (न मे.)

न मयागोरसाभिज्ञं चेतः कस्मात्प्रकुप्यसि। अस्थानरुदितैरेभिरलमालोहितेक्षणे ॥

वस्तुगूढं यथा— (दासी.)

पानीयं पातुमिच्छामि त्वत्तःकमललोचने। यदि दास्यसि नेच्छामि नदास्यसि पिबाम्यहम् ॥

पादगूढं यथा—

द्युवियद्गामिनीतारसंरावविहतश्रुतिः। हैमीषु माला शुशुभे विद्युतामिव संहतिः ॥

अभिप्रायगूढं यथा—

जइ देवरेण भणिआ खग्गं घेत्तूण राउलं वच्च।
ता किं सेवअवहुए हसिऊण वलोइअं सअणम् ॥

[यदि देवरेण भणिता खड्गं गृहीत्वा राजकुलं व्रज। तत्किं सेवकवध्वा हसित्वावलोकितं शयनम् ॥]

निरीक्षितमनेनेह पुरुषायितलक्ष्म च। पादलाक्षादिकं तेन नियुंक्ते मां न कर्मणि ॥ इति।

स्वरस्थानवर्णगतिबन्धाकारनियमश्चित्रम्। तत्षोढा, स्वरादिनियमभेदात्। तेषु चतुस्स्वरं यथा—

आम्नायानामाहान्त्या वाग्गीतीरीतीः प्रीतीभीतीः।
भोगो रोगो मोहो मोदो ध्येये वेच्छेत्क्षेमे देशे ॥

त्रिस्थानं यथा—

अलिनीलालकलतं कं न हन्ति घनस्तनि। आननं नलिनच्छायं नयनं शशिकान्ति ते ॥

द्विवर्णं यथा—

भूरिभिर्भारिभिर्भीराभूभारैरभिरेभिरे। भेरीरेभिभिरभ्राभैरभीरुभिरिभैरिभाः ॥

गतिचित्रं यथा—

वारणागगभीरा सा साराभीगगणारवा। कारितारिवधा सेना नासेधावरितारिका ॥

गतप्रत्यागतार्धं बन्धचित्रम्। यथा— (मुरजबन्धः.)

सा सेना गमनारम्भे रसेनासीदनारता। तारनादजना मत्तधीरनागमनामया ॥

आकारचित्रं यथा— (पद्मम्.)

या श्रिता पावनतया या तनुच्छेदिनी च या।
याचनीया धिया माया या माया संश्रिता श्रिया ॥

द्वयोस्तन्त्रेणाभिधानं श्लेषः । स षोढा— प्रकृतिश्लेषः, प्रत्ययश्लेषः, विभक्तिश्लेषः, वचनश्लेषः, पदश्लेषः, भाषाश्लेष इति । तेषु प्रकृतिश्लेषो यथा—

त्वमेव धातुःपूर्वोऽसि त्वमेव प्रत्ययःपरः । अनाख्यातं न ते किञ्चिन्नाथ केनोपमीयसे ॥

प्रत्ययश्लेषो यथा—

तस्या विनापि हारेण निसर्गादेव हारिणौ । जनयामासतुः कस्य विस्मयं न पयोधरौ ॥

विभक्तिश्लेषो यथा—

विषं निजगले येन बभ्रे च भुजगप्रभुः । देहे येनाङ्गजो दध्रे जाया च स जयत्यजः ॥

वचनश्लेषो यथा—

तनुत्वरमणीयस्य मध्यस्य च भुजस्य च । अभवन्नितरां तस्या वलयः कान्तिवृद्धये ॥

पदश्लेषो यथा—

अरिभेदः पलाशश्च बाहुः कल्पद्रुमश्च ते । बालेवोद्यानमालेयं सालकाननशोभिनी ॥

भाषाश्लेषो यथा—

धीरागच्छदुमेहनदुदुद्धवारिसदस्सु । अभ्रमदप्रसराभरणरविकिरणातेजस्सु ॥

भिन्नार्थैकरूपा च वर्णसङ्घाता वृत्तिर्यमकम् । तत्षोढा— स्थानयमकं, अस्थानयमकं, व्यपेतं, अव्यपेतं, समुद्गकः, पादयमकमिति । तत्र पादानामादिमध्यान्ताः स्थानम्, तेषु शब्दसङ्घातावृत्ति स्थानयमकं यथा—

सालं सालम्बकलिका सालंसालं न वीक्षितुम् । नालीनालीनबकुलानालीनालीकिनीरपि ॥

अस्थानयमकं यथा—

कमलिनीमलिनीदयितं विना न सहते सहते न विपेविताम् ।
तमधुना मधुना निहितं हृदि स्मरति सा रतिसारमहर्निशम् ॥

व्यवहितं व्यपेतयमकं यथा—

कमलेसमकेशं ते कमलेर्ष्याकरं मुखम् । कमलेख्यं करोषि त्वं कमलेवोन्मदिष्णुषु ॥

अव्यवहितमव्यपेतयमकं यथा—

रमणी रमणीया मे पाटलापाटलांशुका । वारुणीवारुणीभूतसौरभाः सौरभास्पदम् ॥

समुद्गको यथा—

कान्तारतरुतलासितमृगयुवरचितान्तरहरति वनान्तकान्तारतः ॥

पादयमकं यथा—

कमलमलिरमुञ्चदुत्पलकलिकातरलोलमुत्पलाशकान्ते ।
कान्ते स चञ्चुरलिकुलकलिकातरलोलमुत्पलाशकान्ते ॥

वर्णानामनतिदूरान्तरमावृत्तिरनुप्रासः । सा षोढा— वर्णानुप्रासः, स्थानानुप्रासः, पदानुप्रासः, नामानुप्रासः, पादानुप्रासः, व्यवहितानुप्रास इति । तत्र वर्णानुप्रासो यथा—

शिञ्जानमञ्जुमञ्जीराश्चारुकाञ्चनकाञ्चयः । कङ्कणाङ्कभुजा भान्ति जितानङ्ग तवाङ्गनाः ॥

स्थानानुप्रासो यथा—

एष राजा यदा लक्ष्मीं प्राप्तवान्ब्राह्मणप्रियः । तदाप्रभृति धर्मस्य लोकेऽस्मिन्नुत्सवोऽभवत् ॥

पदानुप्रासो यथा—

अमृतममृतं चन्द्रश्चन्द्रस्तथाम्बुजमम्बुजं रतिरपि रतिः कामःकामो मधूनिमधून्यपि ।
इति न भजते वस्तु प्रायः परस्परसंकरं तदियमबला कान्ति धत्ते कुतः सकलात्मिकाम् ॥

नामानुप्रासो यथा—

कृत्वा कृत्वा कलकलं मारुतेन चलाचलः । मातर्गुलुगुलायन्ते गजा इव घनाघनाः ॥

पादानुप्रासो यथा—

रागद्वेषौ यदि स्यातां तपसा किं प्रयोजनम् । तावुभौ यदि न स्यातां तपसा किंप्रयोजनम् ॥

व्यवहितानुप्रासो यथा—

प्रकाशो यशसा देवः प्रकाशो महसा रविः । दुरसहो द्विषतां स्वामी दुरसहस्तमसां च सः ॥
चतुर्विंशतिरित्युक्ताः शब्दालङ्कारजातयः । जात्यादिभेदतः पद्ये गद्येऽप्यास्तामयं क्रमः ॥
इह शिष्टानुशिष्टानां शिष्टानामपि सर्वथा । वाचामेव प्रसादेन लोकयात्रा प्रवर्तते ॥
इदमन्धंतमःकृत्स्नं जायेत भुवनत्रयम् । यदि शब्दाह्वयं ज्योतिरासंसारं न दीप्यते ॥
गतयस्तस्य यास्तिस्रो द्रुतमध्यविलम्बिताः । लयान्पदगतेः प्राहुस्तान्गीते गीतवादिनः ॥
रीतयो वाङ्मयप्राणा हृदयं तस्य वृत्तयः । रचनादिरियं मूर्तिरनुप्रासस्तु जीवितम् ॥
उक्तयो दैवतं छाया मुद्राभणितयो वृतिः । पठितिः श्रव्यतापेक्षाभिनयोऽध्ययनं धृतिः ॥
श्लेषः पुष्णाति सर्वासु प्रायोवक्रोक्तिषु श्रियम् । वाकोवाक्येन हृष्यन्ति मनांसि कृपतामपि ॥
विनयेनविना काश्रीः कानिशा शशिनाविना । विना यमकचित्राभ्यां कीदृशीवाग्विदग्धता ॥

गूढं गूढचतुर्थादिवादिनां दर्पशान्तये । प्रश्नोत्तरं नु नाम्नापि विदग्धमुखमण्डनम् ॥
क्रीडागोष्ठीविनोदेषु तज्ज्ञैराकीर्णमन्त्रणे । परव्यामोहने चापि सोपयोगाः प्रहेलिकाः ॥
यथामति यथायुक्ति यथौचित्यं यथारुचि । कवेः पात्रस्य चैतासां प्रयोग उपपद्यते ॥
यादृग्गद्यविधौ बाणः पद्यबन्धेन तादृशः । प्रतिमार्गमियं देवी विचित्रा हि सरस्वती ॥
संस्कृतेनैव कोऽप्यर्थः प्राकृतेनैव चापरः । शक्यो रचयितुं कश्चिदपभ्रंशेन जायते ॥
पैशाच्या शौरसेन्यान्यो मागध्यान्यो निबध्यते ।
द्वित्राभिः कोऽपि भाषाभिः सर्वाभिरपि कश्चन ॥
कश्चिद्द्वयेन पद्येन कश्चिन्मिश्रेण शक्यते । निबद्धुं कश्चन द्वाभ्यां कश्चित्तु पथिभिस्त्रिभिः ॥
संस्कृतेनैव केऽप्याहुः प्राकृतेनैव केचन । साधारण्यादिभि. केचित्केचन म्लेच्छभाषया ॥
न म्लेच्छितव्यं यज्ञादौ स्त्रीषु नाप्राकृतं वदेत् । सङ्कीर्णं नाभिजातेषु नाप्रबुद्धेषु संस्कृतम् ॥
वदन्ति संस्कृतं देवा प्राकृतं किन्नरादयः । पैशाचाद्यं पिशाचाद्या मागधं हीनजातयः ॥
केऽभूवन्नाढ्यराजस्य राज्ये प्राकृतभाषिणः । काले श्रीसाहसाङ्कस्य के न संस्कृतवेदिनः ॥
नात्यन्तं संस्कृतेनैव नात्यन्तं देशभाषया । कथागोष्ठीषु कथयन्लोके बहुमतो भवेत् ॥
शृण्वन्ति लटहं लाटाः प्राकृत संस्कृतद्विषः । अपभ्रंशेन तुष्यन्ति स्वेन नान्येन घूर्जराः ॥
ब्रह्मन्विज्ञापयामि त्वां स्वाधिकारजिहासया । गौडस्त्यजतु वा गाथामन्या वास्तु सरस्वती ॥

द्विधा प्रयुक्तेन च वाङ्मयेन सरस्वती तन्मिथुनं नुनाव ।
संस्कारपूतेन वरा वरेण्यं वधूं सुखग्राह्यनिबन्धनेन ॥

एतद्ग्राह्यं सुरभिकुसुमं ग्राह्यमेतन्निधेयं
धत्ते शोभां विरचितमिदं स्थानमेवैतदस्य ।
मालाकारो रचयति यथा साधु विज्ञाय माला
योज्यं काव्ये व्यवहितधिया तद्वदेवाभिधानम् ॥

गिरः श्रव्या दिव्याः प्रकृतिमधुराः प्राकृतधुराः
सुभव्योऽपभ्रंशः सरसरचनं भूतवचनम् ।
विदग्धानामिष्टे मगधमथुरावासिभणिति-
र्निबद्धा यस्तेषां स खलु कविराजो विजयते ॥

अर्थमेव ये व्युत्पत्त्यादिना भूषयन्ति तेऽर्थालङ्काराश्चतुर्विंशतिः । तद्यथा– जातिः, सूक्ष्मः, सारः, समाहितं, भावः, विभावना, हेतुः, अहेतुसंभवः, विरोधः, दृष्टान्तः, व्यतिरेकः, अन्योन्यं, परिवृत्तिः, मीलितं, वितर्कः, स्मरणं, भ्रान्तिः, उपमान, अनुमानं, वक्रः, अर्थापत्तिः, अभावः, आगमः, प्रत्यक्षमिति । तत्र,

नानावस्थानि जायन्ते यानि रूपाणि वस्तुनः ।
स्वेभ्यः स्वेभ्यो निसर्गेभ्यस्तानि जातिं प्रचक्षते ॥

अर्थव्यक्तेरियं भेदमियता प्रतिपद्यते । जायमानमियं वक्ति रूपं सा सार्वकालिकम् ॥
स्वरूपमाश्रयो हेतुरिति तद्भेदहेतवः । ते संस्थानादयस्तेषु सा विशेषेण शोभते ॥

तत्र संस्थानमवस्थानं वेषो व्यापार इत्यादयः स्वरूपं मुग्धाङ्गनाः शिशवः तिर्यञ्चः हीनपात्राणीत्याश्रयः देशः कालः शक्तिः साधनमित्यादयो हेतुः । तेषु संस्थानं यथा–

स दक्षिणापाङ्गनिविष्टमुष्टिं नतांसमाकुञ्चितसव्यपादम् ।
ददर्श चक्रीकृतचारुचापं प्रहर्तुमभ्युद्यतमात्मयोनिम् ॥

अवस्थानं यथा—

पादावष्टम्भनम्रीकृतमहिषतनोरुल्लसद्बाहुमूलं
शूलं प्रोल्लासयन्त्याः सरलितवपुषो मध्यभागस्य देव्याः ।
विश्लिष्टस्पष्टदृष्टोन्नतविरलवलिव्यक्तगौरान्तराला-
स्तिस्रो वः पान्तु लेखाः क्रमवशविकसत्कञ्चुकप्रान्तमुक्ताः ॥

वेषो यथा—

छंणपिट्ठधूसरत्थणि महुमअअम्बच्छि कुवलआहरणे ।
कस्स कअ चूअमञ्जरि पुत्ति तुए मण्डिओ गामो ॥

[ क्षणपिष्टधूसरस्तनि मधुमदताम्राक्षि कुवलयाभरणे ।
कस्यकृते चूतमञ्जरि पुत्रि त्वया मण्डितो ग्रामः ॥ ]

व्यापारो यथा—

अग्रे गतेन वसतिं परिगृह्य रम्यामापात्य सैनिकनिराकरणाकुलेन ।
यान्तोऽन्यतः प्लुतकृतस्वरमाशु दूरादुद्बाहुना जुहुविरे मुहुरात्मवर्ग्याः ॥

मुग्धाङ्गना, यथा —

सहिआहि भम्ममाणा थणए लग्गं कुसुम्भपुप्फं ति ।
मुद्धवहुआ हसिज्जइ पफोडन्ती णहवआइम् ॥

[ सखीभिर्भण्यमाना स्तनयोर्लग्नं कुसुम्भपुष्पं ते । मुग्धवधूर्हस्यते प्रोञ्छन्ती नखव्रणानि ]

शिशुर्यथा—

आक्रोश न्नाह्वय न्नन्यानाधावन्मण्डलं रुदन् ।
गाः कालयति दण्डेन डिम्भः सस्यावतारिणीः ॥

तिर्यग्यथा —

लीढव्यस्तविपाण्डुराग्रनखयोराकर्णदीर्णं मुखं
विन्यस्याग्रिमयोर्युगे चरणयोः सद्यो विभिन्नद्विपः ।
एतस्मिन्मदगन्धवासितवटः सावज्ञतिर्यग्वल-
त्वक्कान्ताहतिधूतलोलमधुपः कुञ्जेषु शेते हरिः ॥

हीनपात्रं यथा—

भद्रं ते सदृशं यदध्वगशतैः कीर्तिस्तवोद्घुष्यते
स्थाने रूपमनुत्तमं सुकृतिना दानेन कर्णो जितः ।
इत्यालोच्य चिरं दृशा करुणया शीतातुरेण स्तुतः
पान्थेनैकपलालमुष्टिरुचिना गर्वायते हालिकः ॥

देशो यथा—

इमास्ता विन्ध्याद्रेः शुकहरितवंशीवनघना भुवः क्रीडालोलद्विरदरदनारुग्णतरवः ।
लताकुञ्जे यासामुपनदि रतिक्लान्तशबरीकपोलस्वेदाम्भःपरिचयनुदो वान्ति मरुतः ॥

कालो यथा—

कम्पन्ते कपयो भृशं जडकृशं गोऽजाविकं ग्लायति
श्वा चुल्लीकुहरोदरं क्षणमपि क्षिप्तोऽपि नैवोज्झति ।
शीतार्तिव्यसनातुरः पुनरयं दीनो जनः कूर्मव-
त्स्वान्यङ्गानि शरीर एव हि निजे निह्नोतुमाकांक्षति ॥

शक्तिर्यथा–

बध्नन्नङ्गेषु रोमाञ्चं कुर्वन्मनसि निर्वृतिम्। नेत्रे निमीलयन्नेष प्रियास्पर्शः प्रवर्तते ॥

साधनं यथा–

उपनिहितहलेशासार्गलद्वारमारात्परिचकितपुरन्ध्रीसारिताभ्यर्णभाण्डम् ।
पवनरयतिरश्ची वारिधाराः प्रतीच्छ न्निशति वलितशृङ्गः पामरागारमुक्षा ॥

इङ्गिताकारलक्ष्योऽर्थः सूक्ष्मः सूक्ष्मगुणान्वितः। सूक्ष्मात्प्रत्यक्षतो सूक्ष्मोऽप्रत्यक्ष इति भिद्यते॥

स द्विधा, अभिधीयमानः प्रतीयमानश्च। तत्राभिधीयमान इङ्गितलक्ष्यो यथा–

तां प्रत्यभिव्यक्तमनोरथानां महीपतीनां प्रणयाग्रदूत्यः।
प्रवालशोभा इव पादपानां शृङ्गारचेष्टा विविधा बभूवुः ॥

स एवाकारलक्ष्यो यथा–

सा यूनि तस्मिन्नभिलाषबन्धं शशाक शालीनतया न वक्तुम्।
रोमाञ्चलक्ष्येण स गात्रयष्टिं भित्त्वा निराक्रामदरालकेश्याः ॥

स एवोभयलक्ष्यो यथा–

त्वदर्पितदृशस्तस्या गीतगोष्ठ्यामवर्धत। उद्दामरागपिशुना छाया कापि मुखाम्बुजे ॥

प्रतीयमान इङ्गितलक्ष्यो यथा–

वाहित्ता पडिवअणं ण देइ रूसेइ एक्कमेक्कम्मि। अज्जा कज्जेण विणा पइप्पमाणे णईकच्छे ॥

[व्याहृता प्रतिवचनं न ददाति रूष्यत्येकैकस्मिन्। आर्या कार्येण विना प्रदीप्यमाने नदीकच्छे ॥]

स एव आकारलक्ष्यो यथा–

सामाइ सामलीए अद्धच्छिपलोअमुहसोहा।
जम्बूदलकअकण्णावअंसे भमिरे हलिअउत्ते ॥

[श्यामायाः श्यामलतया अर्धाक्षिप्रलोकनमुखशोभा। जम्बूदलकृतकर्णावतंसे भ्रमति हलिकपुत्रे ॥]

स एव उभयलक्ष्यो यथा–

प्रयच्छतोच्चैः कुसुमानि मानिनी विपक्षगोत्रं दयितेन लम्भिता।
न किञ्चिदूचे चरणेन केवलं लिलेख बाष्पाकुललोचना भुवम् ॥

फल्गुनिरासेन अफल्गुनिर्धारणं सारः। स द्विधा–धर्मरूपो धर्मिरूपश्च। तयोर्धर्मरूपो यथा–

दानं वित्ताद्दृतं वाचः कीर्तिधर्मौ तथायुषः। परोपकरणं कायादसारात्सारमुद्धरेत् ॥

यथा वा—

पोढमहिलाण जं जं सुसिक्खिअन्तं रए सुहावेइ। जं जं असिक्खिअं णववहूणं तं तं रइं देइ॥

[प्रौढमहिलानां यद्यत्सुशिक्षित तद्रतौ सुखयति। यद्यदशिक्षितं नववधूनां तत्तद्रतिं ददाति॥]

धर्मरूपो यथा—

राज्ये सारं वसुधा वसुधायां पत्तनं पुरे सौधम्। सौधे तल्पं तल्पे वराङ्गनानङ्गसर्वस्वम्॥

यथा वा—

मधुविकचसितोत्पलावतंसं शशिकरपल्लवित हर्म्यपृष्ठम्।

मदनजनितविभ्रमा च कान्ता सुखमिदमर्थवतां विभूतयोऽन्याः॥

कार्यारम्भे सहकारिकारणावाप्तिः समाहितम्। सा द्विधा— आकस्मिकी, बुद्धिपूर्वा च। तयोराकस्मिकी यथा—

मानमस्या निराकर्तुं पादयोर्मे पतिष्यतः। उपकाराय दिष्ट्येदमुदीर्णं घनगर्जितम्॥

यथा वा—

अनुशासतमित्यनाकुलं, नयवर्त्माकुलमर्जुनाग्रजम्।

स्वयमर्थ इवाभिवाञ्छितस्तमभीयाय पराशरात्मजः॥

बुद्धिपूर्विका यथा—

कल्पान्ते शमितत्रिविक्रममहाकङ्कालदण्डस्फुर-

च्छेषस्यूतनृसिंहवक्त्रनखरप्रोतादिकोलामिषः।

विश्वैकार्णवताविशेषमुदितौ तौ मत्स्यकूर्माविभौ

कर्षन्धीवरता गतः स्यतु जगन्मोहं महाभैरवः॥

यथा वा—

मुक्ते नव नवश्रुत्यमिति स्वक्सन्निवेशैः शिरःपुष्पैरन्यतमावलोकनमितैरुच्छोणितैरर्चिते।

हस्तार्पणेशेन मूर्ध्नि दशम मूर्धानमारोपयन् शम्भोरद्भुतसाहसैकरसिकः कैर्न श्रुतो रावणः॥

अभिप्रायानुकूलः प्रवृत्तिविशेषो भाव। स द्विधा— सोद्भेदो निरुद्भेदश्च। तयोः सोद्भेदो यथा—

सालोए च्चिअ सूरे घरिणी घरसामिअस्स घेत्तूण।

णेच्छन्तस्सवि पाए धुअइ हसन्ती हसन्तस्स॥

[सालोक एव सूर्ये गृहिणी गृहस्वामिनो गृहीत्वा। अनिच्छतोऽपि पादौ धावयति हसन्ती हसतः॥]

यथा वा—

गेह्ल पलोएह इमं विअसिअणअणा पिअस्स अप्पेइ ।
घरणी सुअस्स पढमुब्भिण्णदन्तजुअलंकिअं बोरम् ॥

[ गृहाण पर्यालोकयेमं विकसितनयना प्रियायार्पयति ।
गृहिणी सुतस्य प्रथमोद्भिन्नदन्तयुगलाङ्कितं बदरम् ॥ ]

निरुद्वेदो यथा—

गोलाअडट्ठिअं पेच्छिऊण गइवइसुअं हलिअसोह्णा ।
आढत्ता उत्तरिउं दुक्खुत्ताराइ पअवीए ॥

[ गोदातटस्थितं प्रेक्ष्य गृहपतिसुतं हालिकस्नुषा । आरब्धा उत्तर्तुं दुःखोत्तरया पदव्या ॥ ]

यथा वा—

सालिवणगोविआए उड्डीवन्तीअ पूसविन्दाइम् ।
सव्वङ्गसुन्दरी एवि पहिआ अच्छीइ पेच्छन्ति ॥

(शालिवनगोपिकाया उड्डाययन्त्याः शुकवृन्दानि । सर्वाङ्गसुन्दर्या अपि पथिका अक्षिणी एव प्रेक्षन्ते ॥

इद्यं सूक्ष्मं च भाव एव । तयोर्हृद्यं यथा—

हिअए रोसुब्भिण्णं पाअप्पहरं सिरेण पत्थन्तो ।
णह उदओ माणंसिणीए अ थोरं सुअं रुण्णम् ॥

[ हृदये रोषोद्घूर्णपादप्रहारं यदयं शिरसा प्रार्थितवान् यच्च तयासौ न ताडितस्तत्र हृदये वल्लभा वसतीति भावः । ] सूक्ष्मो यथा—

कदा नौ संगमो भावीत्याकीर्णे वक्तुमक्षमम् । अवेत्य कान्तमबला लीलापद्मं न्यमीलयत् ॥

प्रसिद्धहेतुत्यागेन हेत्वन्तरविभावनम् । यत्र स्वाभाविकत्वं वा विभाव्यं सा विभावना ॥

तयोराद्या यथा—

असंभृतं मण्डनमङ्गयष्टेरनासवाख्यं करणं मदस्य ।
कामस्य पुष्पव्यतिरिक्तमस्त्रं बाल्यात्परं साथ वयः प्रपेदे ॥

यथा वा—

अपीतक्षीबकादम्बमसंसृष्टामलाम्बरम् । अप्रसादितसूक्ष्माम्बु जगदासीन्मनोहरम् ॥

द्वितीया यथा—

णमह अवट्ठिअतुङ्गं अविसारिअ वित्थअअणोणअं गहिरम् ।
अप्पलहुअपरिसह्लं अणाअपरमत्थपाअडं महुमहणम् ॥

( नमत अवस्थिततुङ्गमविसारितावितततमनवनतगभीरम् ।
अप्रलघुमपरिश्लक्ष्णमज्ञातपरमार्थपारदं मधुमथनम् ॥ )

यथा वा—

वनेचराणां वनितासखानां दरीगृहोत्सङ्गनिषक्तभासः ।
भवन्ति यत्रौषधयो रजन्यामतैलपूराः सुरतप्रदीपाः ॥

प्रवृत्तिनिवृत्त्योर्निबन्धनं हेतुः । स षोढा— प्रवर्तकः, निवर्तकः, प्रयोजकः, ज्ञापकः, अभावहेतुश्चित्रहेतुश्च । तत्र प्रवर्तको यथा—

जितेन्द्रियत्वं विनयस्य कारणं गुणप्रकर्षो विनयादवाप्यते ।
गुणाधिके पुंसि जनोऽनुरज्यते जनानुरागप्रभवाश्च संपदः ॥

निवर्तको यथा—

प्रजागरात्खिलीभूतस्तस्याः स्वप्नसमागमः । बाष्पस्तु न ददात्येनां द्रष्टुं चित्रगतामपि ॥

प्रयोजको यथा—

मानयोग्यां करोमीति प्रियस्थानस्थितां सखीम् । बाला भ्रूभङ्गजिह्माक्षी पश्यति स्फुरिताधरा ॥

ज्ञापको यथा—

गज्जंते खे मेहा फुल्ला णीवा पणच्चिआ मोरा । णट्ठो चन्दुज्जोओ वासीरत्तो हला पत्तो ॥
[ गर्जन्ति खे मेघाः फुल्ला नीपाः प्रनर्तिता मयूराः । नष्टचन्द्रोद्योतो वर्षर्तुः सखि प्राप्तः ॥ ]

अभावहेतुर्यथा—

अनभ्यासेन विद्यानामसंसर्गेण धीमताम् । अनिग्रहेण चाक्षाणां व्यसनं जायते नृणाम् ॥

चित्रहेतुर्यथा—

सा बाला वयमप्रगल्भवचसः सा स्त्री वयं कातराः
सा पीनोन्नतिमत्पयोधरयुगं धत्ते सखेदा वयम् ।
साक्रान्ता जघनस्थलेन गुरुणा गन्तुं न शक्ता वयं
दोषैरन्यजनाश्रितैरपटवो जाताः स्म इत्यद्भुतम् ॥

सत्यपि सामर्थ्येऽनुत्पादितस्वकार्यो व्याहतश्च हेतुरहेतुः । तयोरनुत्पादितस्वकार्यो यथा—

न विरचिता ललाटतटलास्यकरी भ्रुकुटिर्न परुषहुंकृतेन मधुरस्मितमन्तरितम् ।
न तव निशुम्भसंभ्रमवशादपि दारुणया भगवति चेष्टया कलुषितं वदनाम्बुरुहम् ॥

यथा वा—

अनुरागवती सन्ध्या दिवसस्तत्पुरस्सरः । अहो दैवगतिश्चित्रा तथापि न समागमः ॥

व्याहतो यथा—

नीवीबन्धोच्छ्वसनशिथिलं यत्र यक्षाङ्गनानां क्षौमं रागादनिभृतकरेष्वाक्षिपत्सु प्रियेषु ।
अर्चिस्तुङ्गानभिमुखगतान्प्राप्य रत्नप्रदीपान्ह्रीमूढानां भवति विफलप्रेरणाचूर्णमुष्टिः ॥

यथा वा—

शंभोरुद्धतनृत्यकर्मणि करे कङ्कालमाद्यं हरेः
संघट्टस्फुटितेन्दुमण्डलगलत्पीयूषसंजीवितम् ।
तत्कालप्रणते मुरद्विषि नवे दृष्ट्वा विलासं श्रियः
कुर्वत्कोपकषायितेन मनसा मिथ्योत्स्तुतीः पातु वः ॥

प्रबलकारणकलापदर्शनादिदमेवं भवेदिति ज्ञानं संभवः । स चतुर्धा– विधिरूपो निषेधरूप उभयरूपोऽनुभयरूपश्च । तेषु विधिरूपो यथा—

त्वय्यादातुं जलमवनते शार्ङ्गिणो वर्णचौरे तस्याः सिन्धोः पृथुमपि तनुं दूरभावात्प्रवाहम् ।
प्रेक्षिष्यन्ते गगनगतयो नूनमावर्ज्य दृष्टी रेकं मुक्तागुणमिव भुवः स्थूलमध्येन्द्रनीलम् ॥

निषेधरूपो यथा—

परस्य भूयान् विवरेऽभियोगः प्रसह्य संरक्षणमात्मरन्ध्रे ।
भीष्मेऽप्यसंभाव्यमिदं गुरौ वा न संभवत्येव वनेचरेषु ॥

उभयरूपो यथा—

उत्पश्यामि द्रुतमपि सखे मत्प्रियार्थं यियासोः कालक्षेपं ककुभसुरभौ पर्वते पर्वते ते ।
मुक्तापाङ्गैः सजलनयनैः स्वागतीकृत्य केकाः प्रत्युद्यातः कथमपि भवान्गन्तुमाशु व्यवस्येत् ॥

अनुभयरूपो यथा—

तस्याः पातुं सुरगज इव व्योम्नि पूर्वार्धलम्बी त्वंचेदच्छस्फटिकविशदं तर्कयेस्तिर्यगम्भः ।
संसर्पन्त्याः सदसि भवतः स्रोतसि च्छायया सा स्यादस्थानोपगतयमुना संगमेनाभिरामा ॥

पदार्थानां परस्परासंगतिर्विरोधः । यथा—

क युवतिमार्दवं क च महाहवदारुणता क च वलयी करः क करिदन्तजमुष्टिरसिः ।
क च नवयौवन क कुसुमायुधनिस्पृहता तव ललनाविचेष्टितविरुद्धमहो चरितम् ॥

यथा वा—

दिग्वासा यदि तत्किमस्य धनुषा शस्त्रस्य किं भस्मना
भस्माथास्य किमङ्गना यदि च सा कामं परिद्वेष्टि किम् ।
इत्यन्योन्यविरुद्धचेष्टितमिदं पश्यन्निजस्वामिनो
भृङ्गी सान्द्रशिरावनद्धपरुषं धत्तेऽस्थिशेषं वपुः ॥

विषममसङ्गतिः प्रत्यनीकमधिकं च विरोध एव । तेषु विषमं यथा—

दिशामलीकालकभङ्गतां गत स्त्रयीवधूकर्णतमालपल्लवः ।
चकार यस्याध्वरधूमसंचयो मलीमसः शुक्लतरं भवद्यशः ॥

असङ्गतिर्यथा—

सा उप्पडी गोट्ठउहि णोक्खी कावि विसगण्ठि ।
भिडिय पचेल्लिउ सो मरइ ज्जस्स ण लग्गइ कण्ठि ॥

[ सा उत्पन्ना गोष्ठभुवि नवीनैव कापि विषग्रन्थिः । भिद्यते प्रत्युत स म्रियते यस्य न लगति कण्ठे ॥]

प्रत्यनीकं यथा—

उत्कण्ठा सन्तापो रणरणको जागरस्तनोस्तनुता ।
फलमिदमहो मयाप्तं सुखाय मृगलोचनां दृष्ट्वा ॥

अधिकं यथा—

एको दाशरथिः कामं यातुधानाः सहस्रशः । ते तु यावन्त एवाजौ तावद्वा ददृशे स तैः ॥

उक्तार्थप्रसिद्धये प्रसिद्धतुल्यार्थप्रदर्शनं दृष्टान्तः । स चतुर्धा— पूर्वः, उत्तरः, समः, विपरीतश्च । तेषु पूर्वो यथा—

ण उण वरकोअण्डदण्डए पुत्तिमाणुसेवि एमेअ ।
गुणवज्जिएण जाअइ वंसुप्पण्णे विटङ्कारो ॥

[ न पुनर्वरकोदण्डदण्डके पुत्रि मानुषेऽप्येवमेव । गुणवर्जितेन जायते वंशोत्पन्नेऽपि टङ्कारः ॥ ]

उत्तरो यथा—

हिअअ तिरच्छीयइ संमुहपच्छा गहिअकडक्खास ।
पहिअ एक्केज्जे गोरडी णं चउहट्ट उवच्छ ॥

(हृदये तिरश्चीना प्राप्ता संमुखं पश्चाद्गृहीतकटाक्षास्य । पथिकस्यैकैव गौरतरा ननु चतुष्पथे व्रजति ॥)

समो यथा—

याति चन्द्रांशुभिः स्पृष्टा ध्वान्तराजी पराभवम्। सद्यो राजविरुद्धानां दर्शयन्ती दुरन्तताम्॥

विपरीतो यथा—

उपरि घनं घनपटलं दूरे दयिता किमेतदापतितम्।
हिमवति दिव्यौषधयः कोपाविष्टः फणी शिरसि॥

सदृशयोर्भेदकथनं व्यतिरेकः। स षोढा— एकव्यतिरेकः, उभयव्यतिरेकः, सदृशव्यतिरेकः, असदृशव्यतिरेकः, स्वजातिव्यतिरेकः, स्वव्यक्तिव्यतिरेक इति। तत्रैकव्यतिरेको यथा—

सकलङ्केन जडेन च साम्यं दोषाकरेण ते कीदृक्।
अभुजङ्गः समनयनः कथमुपमेयो हरेणासि॥

उभयव्यतिरेको यथा—

अभिन्नवेलौ गम्भीरावम्बुराशिर्भवानपि। असावञ्जनसंकाशस्त्वं च चामीकरद्युतिः॥

सदृशव्यतिरेको यथा—

चन्द्रोऽयमम्बरोत्तंसो हंसोऽयं तोयभूषणम्। नभो नक्षत्रमालीद मिदमुत्कुमुदं पयः॥

असदृशव्यतिरेको यथा—

अभ्रूविलासमस्पृष्टमदरागं मृगेक्षणम्। इदं तु नयनद्वन्द्वं तव तद्गुणभूषितम्॥

स्वजातिव्यतिरेको यथा—

अरत्नालोकसंहार्यमवार्यं सूर्यरश्मिभिः। दृष्टिरोधकरं यूनां यौवनप्रभवं तमः॥

स्वव्यक्तिव्यतिरेको यथा—

अण्णोण्णोहि सुचरिअ सअहि अणुदिण वड्ढिइअ माणु।
अप्पणवि णहु महुपि अह अप्पाणेण समाणु॥

(अन्योन्यैः सुचरितशतैरनुदिनं वर्धते मानः। अस्यापि न खलु महानपि अथात्मना समानः॥)

परस्परमुपकार्योपकारकादिभावोऽन्योन्यम्। तत्त्रिधा— अभिधीयमानं, प्रतीयमानं, उभयरूपं च। तेष्वभिधीयमानं यथा—

कण्ठस्य तस्य स्तनबन्धुरस्य मुक्ताकलापस्य च निस्तलस्य।
अन्योन्यशोभाजननाद्बभूव साधारणो भूषणभूष्यभावः॥

प्रतीयमानं यथा—

उद्धच्छो पिअइ जलं जह जह विरलंगुली चिरं पहिओ ।
पाआवलिआवि तह तह धारं तणुअम्पि तणुएई ॥

( उद्धर्वः पिबति जलं यथा यथा विरलाङ्गुलिश्चिरं पथिकः ।
प्रपापालिकापि तथा तथा धारां तनुमपि तनूकरोति ॥ )

उभयरूपं यथा—

गोलाविसमोआरच्छलेण अप्पा उरम्मि से मुक्को ।
अणुअम्पाणिद्दोसं तेणवि सा गाढमुअऊढा ॥

(गोदाविषमावतारच्छलेन आत्मा उरसि अस्य मुक्तः । अनुकम्पानिर्दोषं तेनापि सा गाढमुपगूढा ॥ )

अन्योन्यचूलिका अन्योन्यभ्रान्तिरन्योन्यैकता चान्योन्यमेव । तत्रान्योन्यचूलिका यथा—

शशिना च निशा निशया च शशी शशिना निशया च यथा गगनम् ।
भवता च सभा सभया च भवान् सभया भवता च तथा भुवनम् ॥

अन्योन्यभ्रान्तिर्यथा—

जम्बूनां कुसुमोत्करे नवमधुन्यारब्धपानोत्सवाः
कीराः पक्कपलाशया मधुकरीश्चुम्बन्ति मुञ्चन्ति च ।
एतेषामपि नीलकिंशुकदलैरेभिः समानत्विषां
पुष्पभ्रान्तिभिरापतन्ति सहसा चञ्चूषु भृङ्गाङ्गनाः ॥

अन्योन्यैकता यथा—

प्रफुल्लतापिञ्छनिभैरभीशुभिः शुभैश्च सप्तच्छदपांसुपाण्डुभिः ।
परस्परेण च्छुरितामलच्छवी तदेकवर्णाविव तौ बभूवतुः ॥

गुणद्रव्याणां व्यत्ययविनिमयो परिवृत्तिः । सा त्रिधा— व्यत्ययवती, विनिमयवती, उभयवती च । तेषु व्यत्ययवती यथा—

जो तीअ अहरराउ रत्तिं उव्वासिओ पिअअमेण ।
सोच्चिअ दीसइ गोसे सवत्तिणअणेसु सङ्कन्तो ॥

[यस्तस्या अधररागो रात्रावुद्वासितः प्रियतमेन । स एव दृश्यते प्रातः सपत्नीनयनेषु संक्रान्तः ॥]

यथा वा—

कुमुदवनमपश्रि श्रीमदम्भोजखण्डं त्यजति मुदमुलूकः प्रीतिमांश्चक्रवाकः ।
उदयमहिमरश्मिर्याति शीतांशुरस्तं हतविधिलसितानां ह्रा विचित्रो विपाकः ॥

विनिमयवती यथा—

प्रश्च्योतन्मदसुरभीणि निम्नगायाः क्रीडन्तो गजपतयः पयांसि कृत्वा।
किञ्जल्कव्यवहितताम्रदानलेखैरुत्तेरुः सरसिजगन्धिभिः कपोलैः ॥

यथा वा—

तस्य च प्रवयसो जटायुषः स्वर्गिणः किमिह शोच्यतेऽधुना।
येन जर्जरकलेबरव्ययात्क्रीतमिन्दुकिरणोज्ज्वलं यशः ॥

उभयवती यथा—

लोचनाधरकृताहृतरागा वासिताननविशेषितगन्धा।
वारुणी परगुणात्मगुणानां व्यत्ययं विनिमयं च वितेने ॥

यथा वा—

किं चित्रं यदि देवेन भूभृतः करदीकृताः। देवोऽपि दापितः किं तैर्न पुनः पृष्ठतः करम् ॥

वस्तुना वस्त्वन्तरतिरस्कारो मीलितम्। यथा—

एन्तोवि ण सच्चविओ गोसे पसरन्तपल्लवारुणच्छाओ।
मज्जणतंबेसु मओ तह मअतंबेसु लोअणेसु अमरिसो ॥

[ आगच्छन्नपि न दृष्टः प्रातः प्रसरत्पल्लवारुणच्छायः।
मज्जनताम्रयोर्मदस्तथामदताम्रयोर्लोचनयोरमर्षः ॥ ]

यथा वा—

पिअदंसणेण सुहरसमुउलिअ जइसे ण होन्ति णअणाइम्।
ता केण कण्णरइअं लक्खिज्जइ कुवलअं तिस्सा ॥

[प्रियदर्शनेन सुखरसमुकुलिते यदस्या न भवेतां नयने। तत्केन कर्णरचितं लक्ष्येत कुवलयं तस्याः ॥]

पिहितमपिहितं तद्गुणोतद्गुण इतीमान्यपि मीलितान्येव। तेषु पिहितं यथा—

पअडिअसणेहसंभावविब्भमन्तिअ जह तुमं दिट्ठो।
संवरणवावडाए अण्णो वि जणो तह च्चेअ ॥

[ प्रकटितस्नेहसद्भावविभ्रमतया यथा त्वं दृष्टः। संवरणव्यापृतया अन्योऽपि जनस्तथा चैव ॥ ]

अपिहितं यथा—

दिट्ठाइ जण्ण दिट्ठो आलविआएवि जण्ण आलविओ।
उवआरो जण्ण कओ तात्ति अ कलिअं छइल्लेहिम् ॥

[ दृष्टयापि यन्न दृष्ट आलपितयापि यन्नालपितः। उपचारो यन्न कृतस्तेन च कलितं छेकैः ॥ ]

तद्गुणो यथा—

गोरङ्गउ तरुणीअणो जोह्लाइं अहिसरइ सिअणेवच्छ पडिच्छेओ वल्लहवद्धरइ।
तच्छाआहिं पुण चलिअउ सामलगत्तो तह मअणु मन्तिअहिम् ॥

[ गौराङ्गस्तरुणीजनो ज्योत्स्नायामभिसरति सितनेपथ्यपरिच्छन्नो वल्लभबद्धरतिः।
तच्छायासु पुनश्चलितः श्यामलाङ्गस्तत्र मदनो मन्त्र्यभूत् ॥ ]

अतद्गुणो यथा—

कर्कन्धूफलमुच्चिनोति शबरी मुक्ताफलाकाङ्क्षिणी
क्रुद्धोलूककदम्बकस्य पुरतः काकोऽपि हंसायते।
कीर्त्या ते धवलीकृते त्रिभुवने क्ष्मापाल लक्ष्मीः पुरः
कृष्णं वीक्ष्य बलोऽयमित्युपहितव्रीडं शनैर्जल्पति ॥

सन्देहनिर्णयान्तरालवर्त्यूहो वितर्कः। स द्विधा— निर्णयान्तोऽनिर्णयान्तश्च। तयोर्निर्णयान्तस्त्रिधा — तत्त्वानुपाती, अतत्त्वानुपाती, उभयात्मकश्च। अनिर्णयान्तोऽपि त्रिधा— मिथ्यारूपः, अमिथ्यारूपः, उभयात्मकश्च। तेषु निर्णयान्तस्तत्त्वानुपाती यथा—

मैनाकः किमयं रुणद्धि गगने मन्मार्गमव्याहतं
शक्तिस्तस्य कुत स्स वज्रपतनाद्भीतो महेन्द्रादपि।
तार्क्ष्यः सोऽपि समं निजेन विभुना जानाति मां रावणं
आः ज्ञातं स जटायुरेष जरसा क्लिष्टो वधं वाञ्छति ॥

अतत्त्वानुपाती यथा—

अस्याः सर्गविधौ प्रजापतिरभूच्चन्द्रो नु कान्तिप्रदः
शृङ्गारैकनिधिः स्वयं नु मदनो मासो नु पुष्पाकरः।
वेदाभ्यासजडः कथं नु विषयव्यावृत्तकौतूहलो
निर्मातुं प्रभवेन्मनोरममिदं रूपं पुराणो मुनिः ॥

उभयात्मकं यथा—

चित्रे निवेश्य परिकल्पितसत्त्वयोगाद्रूपोच्चयेन रचिता मनसा कृता नु।
स्त्रीरत्नसृष्टिरपरा प्रतिभाति सा मे धातुर्विभुत्वमनुचिन्त्य वपुश्च तस्याः ॥

अनिर्णयान्तमिथ्यारूपो यथा—

अद्रेः शृङ्गं हरति पवनः किंस्विदित्युन्मुखीभिर्दृष्टोच्छ्रायश्चकितचकितं मुग्धसिद्धाङ्गनाभिः।
स्थानादस्मात्सरसनिचुलादुत्पतोदङ्मुखः खं दिङ्नागानां पथि परिहरन्स्थूलहस्तावलेपान्॥

अमिथ्यारूपो यथा—

अयमसौ भगवानुत पाण्डवः स्थितमवाङ्मुनिना शशिमौलिना।
समधिरूढमजेन नु जिष्णुना स्विदिति वेगवशान्मुमुहे गणैः॥

उभयात्मको यथा—

माया स्विदेषा मतिविभ्रमो वा ध्वस्तं नु मे वीर्यमुताहमन्यः।
गाण्डीवमुक्ता हि यथा पुरा मे पराक्रमन्ते न शराः किराते॥

सदृशाद्दृष्टचिन्तादेरनुभूतपदार्थज्ञानोत्पत्तिः स्मरणम्। तत्सदृशाद्यथा—

अदृश्यन्त पुरस्तेन खेलत्खञ्जनपंक्तयः। अस्मर्यन्त विनिःश्वस्य प्रियानयनविभ्रमाः॥

अदृष्टाद्यथा—

मुनिसुताप्रणयस्मृतिरोधिना मम वियुक्तमिदं तमसा मनः।
मनसिजेन सखे प्रहरिष्यता धनुषि चूतशरश्च निवेशितः॥

चिन्तायां यथा—

पुरा यत्र स्रोतः पुलिनमधुना तत्र सरितां विपर्यासं यातो घनविरलभावः क्षितिरुहाम्।
बहोर्दृष्टं कालादपरमिव जातं वनमिदं निवेशः शैलानां तदिदमिति बुद्धिं द्रढयति॥

आदिग्रहणात्परप्रयत्नतो यथा—

दर्शनपथमायाता साक्षादिव तन्मयेन हृदयेन।
स्मृतिकारिणा त्वया मे पुनरपि चित्रीकृता कान्ता॥

स्वप्नस्मृतिः प्रत्यभिज्ञानं च स्मरणमेव। तयोः स्वप्नस्मृतिर्यथा—

जाने स्वप्नविधौ ममाद्य चुलुकोत्सेक्यं पुरस्तादभू-
त्प्रत्यूषे परिवेषमण्डलमिव ज्योत्स्नाप्रसन्नं महः।
तस्यान्तर्नखनिस्तुषीकृतशरच्चन्द्रप्रभैरङ्गकै-
र्दृष्टा काप्यबला बलात्कृतवती सा मन्मथं मन्मथम्॥

प्रत्यभिज्ञानं यथा–

गृहीतो यः पूर्वं परिणयविधौ कङ्कणधरः सुधामूर्तेः पादैरमृतशिशिरैर्यः परिचितः ।
स एवायं तस्यास्तदितरकरौपम्यसुभगो मया लब्धः पाणिर्ललितलवलीकन्दलनिभः ॥

विपर्ययज्ञानं भ्रान्तिः । सा द्विविधा– अतत्त्वे तत्त्वरूपा, तत्त्वे अतत्त्वरूपा च । अतत्त्वे तत्त्वरूपा त्रिधा– अबाधिता, बाधिता, कारणबाधिता च । तास्वबाधिता यथा—

मोहविरमे सरोसं थोरत्थणमण्डले सुरवहूणम् । जेण करिकुम्भसम्भावणाइ दिट्ठी परिट्ठविआ ॥
[ मोहविरमे सरोषं स्थूलस्तनमण्डले सुरवधूनाम् । येन करिकुम्भसम्भावनया दृष्टिः परिस्थापिता ॥ ]

बाधिता यथा—

हसिअं सहत्थतालं सुक्खवडं उवगएहि पहिएहि । पत्थप्फलसारिच्छे उड्डीणे पूसवंदम्मि ॥
[ हसितं सहस्ततालं शुष्कवटमुपगतैः पथिकैः । पत्रफलसदृशे उड्डीने शुकवृन्देऽस्मिन् ॥ ]

कारणबाधिता यथा—

कनककलशस्वच्छे राधापयोधरमण्डले नवजलधरश्यामामात्मद्युतिं प्रतिबिम्बिताम् ।
असितसिचयप्रान्तभ्रान्त्या मुहुर्मुहुरुत्क्षिपञ्जयति जनितव्रीडाहासः प्रियाहसिते हरिः ॥

तत्त्वे अतत्त्वरूपापि त्रिविधा, हानहेतुः, उपादानहेतुः, उपेक्षाहेतुश्च । तासु हानहेतुर्यथा–

सो मुद्धमओ मअतह्णिआहिन्तह दूमि तुह आसाहिम् ।
जह संभावमई णवि णईण परंमुहो जाओ ॥
(स मुग्धमृगो मृगतृष्णिकाभिस्तथा दूनस्त्वदाशाभिः ।
यथा सद्भावमयीष्वपि नदीषु पराङ्मुखो जातः ॥)

उपादानहेतुर्यथा—

समर्थये यत्प्रथमं प्रियां प्रति क्षणेन तन्मे परिवर्ततेऽन्यथा ।
अतो विनिद्रे सहसा विलोचने करोमि न स्पर्शविभावितप्रिय. ॥

उपेक्षाहेतुर्यथा—

चिक्रंसया कृत्रिमपत्रिपंक्तेः कपोतपालीषु निकेतनानाम् ।
मार्जारमप्यायतनिश्चलाङ्गं यस्यां जनः कृत्रिममेव मेने ॥

भ्रान्तिमान्, भ्रान्तिमाला, उपमाभ्रान्तिः, भ्रान्त्यतिशयश्च भ्रान्तिरेव । तेषु भ्रान्तिमान्यथा–

कपोले मार्जारी पय इति करॉल्लेढि शशिनस्तरुच्छिद्रप्रोतान्बिसमिति करी संकलयति ।
रतान्ते तल्पस्थान्हरति दयिताप्यंशुकमिति प्रभामत्तश्चन्द्रो जगदिदमहो विभ्रमयति ॥

भ्रान्तिमाला यथा—

नीलेन्दीवरशङ्कया नयनयोर्बन्धूकबुद्ध्याधरे
पाणौ पद्मधिया मधूककुसुमभ्रान्त्या तथा गण्डयोः ।
लीयन्ते कबरीषु बान्धवजनव्यामोहजातस्पृहा
दुर्वारा मधुपाः कियन्ति तरुणि स्थानानि रक्षिष्यसि ॥

उपमाभ्रान्तिर्यथा—

हृतोष्ठरागैर्नयनोदबिन्दुभिर्निमग्ननाभेर्निपतद्भिरङ्कितम् ।
च्युतं रुषा भिन्नगतेरसंशयं शुकोदरश्याममिदं स्तनांशुकम् ॥

भ्रान्त्यतिशयो यथा—

दिश्याद्धूर्जटिजूटकोटिसरिति ज्योत्स्नालवोद्भासिनी
शाशाङ्की कलिका जलभ्रमिवशाद्भ्राम्यन्त्यनघा मुदम् ।
यां चञ्चच्छफरीभ्रमेण मुकुलीकुर्वन्फणालीं मुहु-
र्मुहुर्लक्ष्यमहिर्जिघृक्षतितमामाकुञ्चनप्राञ्चनैः ॥

अनध्यवसायोऽपि भ्रान्तिरेव । यथा—

उभौ रम्भास्तम्भावुपरि विपरीतौ कमलयोस्तदूर्ध्वं रत्नाश्मस्थलमथ दुरूहं किमपि यत् ।
ततः कुम्भौ पश्चाद्बिसकिसलये कन्दलमये तदन्विन्दाविन्दीवरमधुकराः किं पुनरिदम् ॥

यथा वा—

विरहिणिहिअअकअन्तहिं णिण्णाअइ तक्खणि छाइज्जइ अलिणिवहेहिं चैत्तेण चूअवणी ।
अह तासुवि मअरन्देहिं संदाणिअइ जह ण कलम्ब ण अम्ब ण जम्बू जाणिअइ ॥
[ विरहिणीहृदयकृतान्तैर्निर्णीयते तत्क्षणे छाद्यतेऽलिनिवहैश्चैत्रेण चूतवनी ।
अथ तास्वपि मकरन्दैर्बध्यते यथा न कदम्बो नाम्रो न जम्बूर्ज्ञायते ॥ ]

सदृशात्सदृशप्रतिपत्तिरुपमानम् । यथा—

तां रोहिणीं विजानीहि ज्योतिषामत्र मण्डले । समूहस्तारकाणां यः शकटाकारमाश्रितः ॥

यथा वा—

सर्वप्राणप्रवणमघवन्मुक्तमाहत्य वक्षस्तत्संघट्टाद्विघटितबृहत्खण्डमुच्चण्डरोचिः ।
एवं वेगात्कुलिशमकरोद्व्योम विद्युत्सहस्रैर्भर्तुर्वज्रज्वलनकपिशास्ते च रोषाट्टहासाः ॥

अभिनयोऽप्युपमानमेव । यथा—

वइविवरणिग्गअदलो एरण्डो साहइव्व तरुणाणम् ।
एत्थ घरे हलिअवहू एद्दहमेतत्थणी वसइ ॥

(वृतिविवरनिर्गतदल एरण्डः साधयतीव तरुणेभ्यः। अत्र गृहे हलिकवधूरेतावन्मात्रस्तनी वसति॥)

एतेन प्रतिबिम्बमुद्रालेख्यादयो व्याख्याताः । तेषु प्रतिबिम्बं यथा—

दर्पणे च परिभोगदर्शिनी पृष्ठतः प्रणयिनो निषेदुषः ।
वीक्ष्य बिम्बमनुबिम्बमात्मनः कानि कान्यपि चकार लज्जया ॥

मुद्रा यथा—

सचकितमिव विस्मयाकुलाभिः शुचिसिकतास्वतिमानुषाणि ताभिः ।
क्षितिषु ददृशिरे पदानि जिष्णोरुपहितकेतुरथाङ्गलाञ्छनानि ॥

आलेख्यं यथा—

तवालेख्ये कौतूहलतरलतन्वीविरचिते विधायैका चक्रं रचयति सुपर्णासुतमधः ।
अथ स्विद्यत्पाणिस्त्वरितमपमृज्यैतदपरा करे पौष्पं चापं मकरमुपरिष्टाच्च लिखति ॥

अथास्योपमाभेदः । को भेदः ? पदार्थयोर्गुणलेशेन सादृश्यप्रतिपत्तिरुपमा । यदाह—

यथाकथंचित्सादृश्यं यत्रोद्भूतं प्रतीयते । उपमा नाम तामाहुर्यथेन्दुरिव ते मुखम् ॥
उपमैव तिरोभूतभेदा रूपकमिष्यते । यथा बाहुलता पाणिपद्मं चरणपल्लवम् ॥
यदप्रसिद्धौ सादृश्यमुक्तिभङ्गेन केनचित्। तत्सादृश्यं प्रकाराणामस्य संख्या न विद्यते॥

तद्यथा—

दातारो यदि कल्पशाखिभिरलं यद्यर्थिनः किं तृणैः
सन्तश्चेदमृतेन किं यदि खलास्तत्कालकूटेन किम् ।
किं कर्पूरशलाकया यदि दृशोः पन्थानमेति प्रिया
संसारेऽपि सतीन्द्रजालमपरं यद्यस्ति तेनापि किम् ॥

यथा वा—

स्थितः स्थितामुच्चलितः प्रयातां निषेदुषीमासनबन्धधीरः ।
जलाभिलाषी जलमाददानां छायेव तां भूपतिरन्वगच्छत् ॥

एवमन्येऽप्यन्योन्यत्सादयो वक्तव्याः। ते चोभयालङ्कारविशेषेणाग्रतो वक्ष्यन्ते। तेपूभयोः सादृश्यमिवादयः प्रतिपादयन्ति। इह तु सदृशेन सदृशः प्रतीयत इत्यस्ति भेदः। लिङ्गदर्शनाल्लिङ्गिज्ञानमनुमानम्। यथा—

सावज्ञमागमिष्यन्नूनं पतितोऽसि पादयोस्तस्याः।
कथमन्यथा ललाटे यावकरसतिलकपंक्तिरियम्॥

यथा वा—

प्रविरलनिलोलजलदः कुटजार्जुननीपसुरभिवनवातः।
अयमायातः कालो हन्त हताः पथिकगेहिन्यः॥

कोऽस्य ज्ञापकाद्भेदः इति चेदुच्यते– जानन्तं प्रयुङ्क्ते इति ज्ञापकं; अनु पश्चान्मीयते अनेनेत्यनुमानम्। नन्विदमपि ज्ञापयति, सत्यम्। किंत्विदमजिज्ञास्यमपि ज्ञापयति, स तु जिज्ञास्यमेव। यथा—

दीसइण चूअमउलं अत्ता ण अ वाइ मलअगन्धवहो।
एत्तं वसन्तमासं सहि जं उत्कण्ठिअं चेअम्॥

(दृश्यते न चूतमुकुलमद्य न च वाति मलयगन्धवहः। एति वसन्तमासः सखि यदुत्कण्ठितं चेतः॥)

अथवा प्रमितिरूपं फलमनुमानम्। यथा–

अइ सहि वकुल्लाविरि च्छुहिहिसि गोचरस मत्थए छारम्।
अच्छन्तदत्तदिट्ठेण सामि वलिएण हसिएण॥

(अयि सखि वक्रालापैश्छादयिष्यसि गोत्रस्य मस्तके भस्म। अत्यन्तदत्तदृष्टेन सामि वलितेन हसितेन॥)

प्रमाणरूपो हेतुर्ज्ञापकः। यथा—

अबाध्यैरिन्दुपादाना मसाध्यैश्चन्दनाम्भसाम्। देहोष्मभिः सुबोधन्ते सखि कामातुरं मनः॥

यदि वा उपात्तव्यापारोऽनुमानहेतुः। यथा—

एतानि निरसहतनोरसमञ्जसानि शून्यं मनः पिशुनयन्ति पदानि तस्याः।
एते च मार्गतरवः प्रथयन्ति तापमालम्बितोज्झितपरिग्लपितैः प्रवालैः॥

अनुपात्तव्यापारो ज्ञापकः। स त्रिधा— त्रिकालार्थविषयभेदात्। तेषु भूतार्थविषयो यथा–

कण्ठेकालः करस्थेन कपालेनेन्दुशेखरः। जटाभिः स्निग्धताम्राभिराविरासीद्वृषध्वजः॥

यथा वा—

स बाल आसीद्वपुषा चतुर्भुजो मुखेन पूर्णेन्दुनिभस्त्रिलोचनः।
युवा कराक्रान्तमहीभृदुच्चैरसंशयं संप्रति तेजसा रविः॥

वर्तमानार्थविषयो यथा—

पर्वग्रन्थिषु वीरुधां सुमनसो मध्येऽङ्कुरं पल्लवा वाञ्छामात्रपरिग्रहः पिकवधूकण्ठोदरे पञ्चमः।
किञ्च त्रीणि जगन्ति जिष्णुदिवसैर्द्वित्रैर्मनोजन्मनो देवस्यापि चिरोज्झितं यदि भवेदभ्यासवश्यं धनुः ॥

यथा वा—

मौलौ धारय पुण्डरीकममितं तन्वात्मनो विक्रमं
चक्राङ्कं वह पादयुग्ममवनीं दोष्णा समभ्युद्धर ।
लक्ष्मीं भ्रूनिकटे निवेशय भव ज्यायान्दिवौकस्पते-
र्विश्वान्तःकरणैकचौर तदपि ज्ञातं हरिः खल्वसि ॥

भविष्यदर्थविषयो यथा—

वाताय कपिला विद्यु दातपायातिलोहिनी । पीता वर्षाय विज्ञेया दुर्भिक्षाय भवेत्सिता ॥

यथा वा—

गोनासाय नियोजितागदरजाः सर्पाय बद्धौषधिः
कण्ठस्थाय विषाय वीर्यमहते पाणौ मणीन्बिभ्रती ।
भर्तुर्भूतगणाय गोत्रजरतीनिर्दिष्टमन्त्राक्षरा
रक्षत्वद्रिसुता विवाहसमये प्रीता च भीता च वः ॥

प्रत्यक्षाद्यधिगतोऽर्थस्तथानुपपद्यमानोऽर्थान्तरं गमयतीत्यर्थापत्तिः । यथा—

निर्णेतु शक्यमस्तीति मध्यं तव नितम्बिनि । अन्यथानुपपत्त्यैव पयोधरभरस्थितेः ॥

यथा वा—

एतदालक्ष्य लोलाक्षि रूपमप्रतिमं तव । कल्पयामः कलातत्त्वगुरुतामादिवेधसः ॥

पदार्थानामविद्यमानता अभावः । यथा—

सग्गं अपारिजाअं कोत्थुहलच्छीविरहिअं महुमहअस्स उरम् ।
सुमरामि महणपुरओ अमुद्धचन्दं च हरअडापब्भारम् ॥
( स्वर्गमपारिजातं कौस्तुभलक्ष्मीविरहितं मधुमथनस्योरः ।
स्मरामि मथनपुरतोऽमुग्धचन्द्रं च हरजटाप्राग्भारम् ॥ )

यथा—

धृतिरस्तमिता गतिश्च्युता विगतं गेय मृतुर्निरुत्सवः ।
गतमाभरणप्रयोजनं परिशून्यं शयनीयमद्य मे ॥

आप्तवचनमागमः । यथा—

न कश्चिदवमन्येत सर्वस्य शृणुयान्मतम् । बालस्याप्यर्थवद्वाक्यमुपयुञ्जीत पण्डितः ॥

यथा वा—

निवार्यतामालि किमप्ययं वटुः पुनर्विवक्षुः स्फुरितोत्तराधरः ।
न केवलं यो महतां विभाषते शृणोति तस्मादपि यः स पापभाक् ॥

ऐन्द्रियिकं मानसं वा ज्ञानप्रत्यक्षं यथा—

कान्तकान्तवदनप्रतिबिम्बे भग्नबालसहकारसुगन्धौ ।
स्वादुनि प्रणदितालिनि शीते निर्ववार मधुनीन्द्रियवर्गः ॥

यथा वा—

पश्यामि ता मतइतश्च पुरश्चपश्चा दन्तर्बहिः परित एव च वर्तमानाम् ।
उद्बुध्यमुग्धकनकाब्जनिभं वहन्ती मासक्तितिर्यगुपवर्तितदृष्टिवक्त्राम् ॥

इमाश्चतुर्विंशतिरर्थसंश्रयाः पृथग्विभक्ताः कविभिः स्वलंक्रियाः ।
श्रुतीतिहासप्रभवान् विशेषतो महाप्रबन्धानुपकर्तुमीशते ॥
अनेकधाऽयं कविभिश्चिरन्तनैः प्रपञ्चितो भामह वामनादिभिः ।
यतोऽत्र जात्यादिरलंक्रियागणोऽभिधेयतस्तेन कृतो न विस्तरः ॥
अथोभयालंकृतयो मनोहराः प्रपञ्चिता यद्यपि पूर्वसूरिभिः ।
तथापि तेभ्यः सविशेषमुच्यते स्वरूपमासामिह तन्निशम्यताम् ॥

शब्दविशेषद्वारकोऽर्थविशेषो येषु प्रतीयते ते उभयालङ्काराः । तेऽपि चतुर्विंशतिरेव । तद्यथा— उपमा, रूपकं, साम्यं, संशयः, समाधिः, समासोक्तिः, सहोक्तिः, समुच्चयः, तुल्ययोगिता, लेशः, अपह्नुतिः, अप्रस्तुतप्रशंसा, उत्प्रेक्षा, अर्थान्तरन्यासः, दीपकं, परिकरः, क्रमः, पर्यायः, अतिशयः, आक्षेपः, विरोधः, श्लेषः, भाविकः, संसृष्टिरिति । तत्र प्रसिद्ध्यनुरोधेनार्थयोर्मिथः प्रतीयमानाभिधीयमानभूयोऽवयवसामान्ययोग उपमा । सा त्रिधा— पदोपमा, वाक्योपमा, प्रपञ्चोपमा च । तासु पदोपमा द्विधा - समासोपमा, प्रत्ययोपमा च । तयोः

समासोपमा चतुर्धा- अन्तर्भूतेवार्था, अन्तर्भूतसामान्या, अन्तर्भूतोभयार्था, सर्वसामान्या चेति। तासु प्रथया यथा—

मुखमिन्दुसुन्दरं ते बिसकिसलयकोमले भुजालतिके ।
जघनस्थली च सुन्दरि तव शैलशिलाविशालेयम् ॥

द्वितीया यथा—

चन्द्रसरिसं मुहं से अमअसरिच्छो अ मुहरसो तिस्सा ।
सकअग्गहभरसुज्जल चुम्बनअं कस्स सरिसं से ॥
[ चन्द्रसदृशं मुखं तस्या अमृतसदृक्षश्च मुखरसस्तस्याः ।
सकचग्रहरभसोज्ज्वलचुम्बनकं कस्य सदृशं तस्याः ॥ ]

तृतीया यथा—

कमलकरा रम्भोरूः कुवलअणअणा मिअङ्कवअणा सा ।
कहणु णवचम्पअङ्गी मुणालबाहू पिआ तवइ ॥
[कमलकरा रम्भोरूः कुवलयनयना मृगाङ्कवदना सा। कथं नु नवचम्पकाङ्गी मृणालबाहुः प्रिया तपति॥]

चतुर्थी यथा—

शरदिन्दुसुन्दरमुखी कुवलयदलदीर्घलोचना सा मे ।
दहति मनः कथमनिशं रम्भागर्भाभिरामोरूः ॥

प्रत्ययोपमापि चतुर्धैव । प्रत्ययो हि कश्चिदुपमेये, कश्चिदुपमाने, कश्चित्सामान्ये, कश्चिदिवार्थे विधीयते । तत्रोपमेये यथा—

हंसो ध्वाङ्क्षविरावी स्या दुष्टक्रोशी च कोकिलः। स्वरनादी मयूरोऽपि त्वं चेद्वदसि भामिनि॥

उपमाने यथा—

पूर्णेन्दुकल्पवदना मृणालीदेश्यदोर्लता । चक्रदेशीयजघना सा स्वर्गेऽपि न दृश्यते ॥

सामान्ये यथा—

सूर्यीयति सुधारश्मि र्मन्मथोऽतिमृतायते। मृतस्य कान्ताविरहे स्वर्गोऽपि नरकीयति ॥

इवार्थे यथा—

एक एव हि भूतात्मा भूते भूते व्यवस्थितः। एकधा बहुधा चैव दृश्यते जलचन्द्रवत् ॥

वाक्योपमापि द्विधा- पदार्थयोर्वाक्यार्थयोश्च । तत्र पदार्थयोश्चतुर्धा, पूर्णा, लुप्ता,

लुप्तपूर्णा, पूर्णलुप्ता चेति । तत्रोपमानोपमेयसामान्यधर्मद्योतकानां चतुर्णामपि प्रयोगे पूर्णा । यथा–

कमलमिव चारुवदनं मृणालमिव कोमलं भुजायुगलम् ।
अलिमालेव सुनीला तथैव मदिरेक्षणे कवरी ॥

सामान्यधर्मद्योतकलोपे लुप्ता । यथा–

न पद्मं मुखमेवेदं न भृङ्गौ चक्षुषी इमे । न केसराणि कान्ताया इमास्ता दन्तपंक्तयः ॥

सामान्यधर्मलोपे लुप्तपूर्णा यथा–

राजीवमिव ते वक्त्रं नेत्रे नीलोत्पले इव । रम्भास्तम्भाविवोरू च करिकुम्भाविव स्तनौ ॥

द्योतकलोपे पूर्णलुप्ता । यथा–

त्वन्मुखं पुण्डरीकं च फुल्ले सुरभिगन्धिनी । कोमलापाटलौ तन्वि पल्लवश्चाधरश्च ते ॥

वाक्यार्थयोरपि चतुर्धैव । एकैवादिशब्दा, अनेकैवादिशब्दा, अनिवादिशब्दा, असादृश्या च । तत्रैकेवादिशब्दा यथा–

पाण्ड्योऽयमंसार्पितलम्बहारः क्लृप्ताङ्गरागो हरिचन्दनेन ।
आभाति बालातपरक्तसानुः सनिर्झरोद्गार इवाद्रिराजः ॥

अनेकेवशब्दा यथा–

नलिन्या इव तन्वङ्ग्यास्तस्याः पद्ममिवाननम् । मया मधुव्रतेनेव पायंपायमरम्यत ॥

अनिवादिशब्दा यथा–

दिवो जागर्ति रक्षायै पुलोमारिर्भुवो भवान् । असुरास्तेन हन्यन्ते सावलेपा नृपास्त्वया ॥

असादृश्या यथा–

प्रहितः प्रधनाय माधवानहमाकारयितुं महीभृता ।
न परेषु महौजसश्छलादपकुर्वन्ति मलिम्लुचा इव ॥

वाक्योपमाया एव प्रकारः प्रपञ्चोपमा । सापि द्विधा– प्रकृतरूपा, विकृतरूपा च । तत्र प्रकृतरूपा चतुर्धा– समस्तोपमा, एकदेशोपमा, मालोपमा, रशनोपमा च । तासु समस्तोपमा यथा–

अलिवलयैरलकैरिव कुसुमस्तवकैः स्तनैरिव वसन्ते ।
भान्ति लता ललना इव पाणिभिरिव किसलयैरधिकम् ॥

एकदेशोपमा यथा–

कमलदलैरधरैरिव दशनैरिव केसरैर्विराजन्ते । अलिवलयैरलकैरिव कमलैर्वदनैरिव नलिन्यः ॥

मालोपमा यथा—

सोहव्व लक्खणमुहं वणमालव्व विअडं हरिवइस्स उरम् ।
कित्तिव्व पवनतणअं आणव्व बलाइं से विलग्गइ दिट्ठी ॥
( शोभेव लक्ष्मणमुखं वनमालेव विकटं हरिपतेरुरः ।
कीर्तिरिव पवनतनयमाज्ञेव बलान्यस्य विलगति दृष्टिः ॥ )

रशनोपमा यथा–

चन्द्रायते शुक्लरुचाथ हंसो हंसायते चारुगतेन कान्ता ।
कान्तायते स्पर्शसुखेन वारि वारीयते स्वच्छतया विहायः ॥

विकृतरूपाणि चतुर्धैव, विपर्यासोपमा, उभयोपमा, उत्पाद्योपमा, अनन्वयोपमा च । तासु विपर्यासोपमा यथा—

यत्त्वन्नेत्रसमानकान्ति सलिले मग्नं तदिन्दीवरं
मेघैरन्तरितः प्रिये तव मुखच्छायानुकारी शशी ।
येऽपि त्वद्गमनानुसारिगतयस्ते राजहंसा गता-
स्त्वत्सादृश्यविनोदमात्रमपि मे दैवेन न क्षम्यते ॥

उभयोपमा यथा—

तवाननमिवाम्भोजमम्भोजमिव ते मुखम् । निलीनां नलिनीखण्डे कथं नु त्वां लभेमहि ॥

उत्पाद्योपमा यथा —

उभौ यदि व्योम्नि पृथक्प्रवाहावाकाशगङ्गापयसः पतेताम् ।
तदोपमीयेत तमालनीलमामुक्तमुक्तालतमस्य वक्षः ॥

अनन्वयोपमा यथा—

त्वन्मुखं त्वन्मुखमिव त्वद्दृशौ त्वद्दृशाविव। त्वन्मूर्तिरिव मूर्तिस्ते त्वमिव त्वं कृशोदरि ॥

उपमैवोत्पन्नसादृश्यातिरोभूतभेदा रूपकम् । तत् षोढा– शब्दप्रधानं, अर्थप्रधानं, उभयप्रधानं, सावयवं, निरवयवं, सङ्कीर्णं च । तेषु शब्दप्रधानं चतुर्विधम्– समस्तं, असमस्तं, समस्तव्यस्तं, रूपकरूपकं च । तत्र समस्तं यथा–

पाणिपद्मानि भूपानां संकोचयितुमीशते । त्वत्पादनखचन्द्राणामर्चिषः कुन्दनिर्मलाः ॥

असमस्तं यथा—

अंगुल्यः पल्लवान्यासन्कुसुमानि नखार्चिषः । बाहू लते वसन्तश्रीस्त्वं नः प्रत्यक्षचारिणी ॥

समस्तव्यस्तं यथा—

स्मितं मुखेन्दौ ज्योत्स्ना ते प्रभाम्बु कुचकुम्भयोः। दोर्लता पल्लवे पाणौ पुष्पं सखि नखार्चिषः॥

रूपकरूपकं यथा—

मुखपङ्कजरङ्गेऽस्मिन्भ्रूलता नर्तकी तव। लीलानाट्यामृतं दृष्टौ सखि यूनां निषिञ्चति॥

अर्थप्रधानं चतुर्धा– समस्तविषयं, एकदेशविषयं, युक्तिमत्, अयुक्तं च। तत्र समस्तविषयं यथा—

ताम्रांगुलिदलश्रेणिनखदीधितिकेसरम्। ध्रियते मूर्ध्नि भूपालैर्भवच्चरणपङ्कजम्॥

एकदेशविषयं यथा—

अकस्मादेव ते चण्डि स्फुरिताधरपल्लवम्। मुखं मुक्तारुचो धत्ते घर्माम्भःकणमञ्जरीः॥

युक्तिमद्यथा—

स्मितपुष्पोज्ज्वलं लोलनेत्रभृङ्गमिदं मुखम्। न कस्य नन्दनं सुभ्रु सुरभिश्वसितानलम्॥

अयुक्तं यथा–

इदमार्द्रस्मितज्योत्स्नं स्निग्धनेत्रोत्पलं मुखम्। जगन्नेत्रेन्दुरस्माकं कथं तापाय कल्पते॥

उभयप्रधानं चतुर्धा,– शुद्धं, सविशेषणं, रशना, माला च। तत्र शुद्धं यथा—

वेल्लितभ्रु गलद्धर्मजलमालोहितेक्षणम्। विवृणोति मदावस्थामिदं वदनपङ्कजम्॥

सविशेषणं यथा–

हरिपादः शिरोलग्नजह्नुकन्याजलांशुकः। जयत्यसुरनिःशङ्कसुरानन्दोत्सवध्वजः॥

रशना यथा—

किसलयकरैर्लतानां करकमलैर्मृगदृशां जगज्जयति।
नलिनीनां कमलमुखैर्मुखेन्दुभिर्योषितां मदनः॥

माला यथा—

इयं गेहे लक्ष्मीरियममृतवर्तिर्नयनयोरसावस्याः स्पर्शो वपुषि बहलश्चन्दनरसः।
अयं बाहुः कण्ठे शिशिरमसृणो मौक्तिकसरः किमस्या न प्रेयो यदि परमसह्यस्तु विरहः॥

सावयवं चतुर्धा–सहजावयवं, आहार्यावयवं, उभयावयवं, विषमं च। सहजावयवं यथा–

पप्फुरिअउट्ठदलअं तक्खणविगलिअरुहिरमहुविच्छड्डम्।
अक्खडिदअप्ठनालं पडिअं फुडदसणकेसरं मुहकमलम्॥

[ प्रस्फुरितोष्ठदलं तत्क्षणविगलितरुधिरमधुविच्छर्दम्।
उत्खण्डितकण्ठनालं पतितं स्फुटदशनकेसरं मुखकमलम्॥ ]

आहार्यावयवं यथा—

...तो कुंभअण्णपडिव अणदण्डपडिघट्टिआमरिसघोरविसो ।
गलिअंसुअणिंमोओ जाओ भीसणअरो दसाणणभुअओ ॥
[ ततः कुम्भकर्णप्रतिवचनदण्डपरिघटितामर्षघोरविषः ।
गलितांशुकनिर्मोको जातो भीषणतरो दशाननभुजगः ॥ ]

उभयावयवं यथा—

यस्या बीजमहंकृतिर्गुरुतरो मूलं ममेतिग्रहो
नित्यत्वस्मृतिरंकुरः सुतसुहृद्भृत्यादयः पल्लवाः ।
स्कन्धो दारपरिग्रहः परिभवः पुष्पं फलं दुर्गतिः
सा मे त्वच्चरणार्हणापरशुना तृष्णालता लूयताम् ॥

विषमं यथा—

मदरक्तकपोलेन मन्मथस्त्वन्मुखेन्दुना । नर्तितभ्रूलतेनालं मर्दितुं भुवनत्रयम् ॥

निरवयवं चतुर्धा— साधारं, निराधारं, परम्परितं, व्यतिरेकवच्च । साधारं यथा—

सोहइ विसुद्धकिरणो गअणसमुद्दम्मि रअणिवेलालग्गो ।
तारामुत्तावअरो फुडविहडिअमेहसिप्पिसम्पुडविमुक्को ॥
[ शोभते विशुद्धकिरणो गगनसमुद्रे रजनीवेलालग्नः ।
तारामुक्ताप्रकरः स्फुटविघटितमेघशुक्तिसंपुटविमुक्तः ॥ ]

निराधारं यथा—

वणराइकेसहत्था कुसुमाउहसुरहिसंचरन्तधअवडा ।
ससिअरमुहुत्तमेहा तमपडिहत्था विणेति धूमुप्पीडा ॥
[ वनराजिकेशहस्ताः कुसुमायुधसुरभिसंचरद्ध्वजपटाः ।
शशिकरमुहूर्तमेघास्तमःप्रतिहस्ता विज्ञायन्ते धूमोत्पीडाः ॥ ]

परम्परितं यथा—

वेल्लितभ्रु गलद्धर्मजलमालोहितेक्षणम् । विवृणोति मदावस्थामिदं वदनपङ्कजम् ॥

व्यतिरेकवद्यथा—

अनाघ्रातं पुष्पं किसलयमलूनं कररुहैरनाविद्धं (मुक्तं) रत्नं मधु नवमनास्वादितरसम् ।
अखण्डं पुण्यानां फलमिव च तद्रूपमनघं न जाने भोक्तारं कमिह समुपस्थास्यति विधिः ॥

सङ्कीर्णं चतुर्धा– सावयवसङ्कीर्णं, निरवयवसङ्कीर्णं, उभयसङ्कीर्णं, श्लेषान्वितं च । सावयवसङ्कीर्णं यथा—

रइअरकेसरणिवहं सोहइ धवलब्भदलसहस्सपरिगअम् ।
महुमहदंसणजोग्गं पिआमहुप्पत्तिपङ्कअं व णहअलम् ॥
[ रविकरकेसरनिवहं शोभते धवलाभ्रदलसहस्रपरिगतम् ।
मधुमथदर्शनयोग्यं पितामहोत्पत्तिपङ्कजमिव नभःस्थलम् ॥ ]

निरवयवसङ्कीर्णं यथा—

दीहो दिअहभुअंगो रइबिम्बफणामणिप्पहं विअसन्तो ।
अवरसमुद्दमुवगओ मुञ्चन्तो कंचुअंव घम्मअणिवहम् ॥
[ दीर्घो दिवसभुजङ्गो रविबिम्बफणामणिप्रभ(भां) विकसमानः (विकासयन्) ।
अपरसमुद्रमुपगतो मुञ्चन्कञ्चुकमिव घर्मनिवहम् ॥ ]

उभयसङ्कीर्णं यथा—

धुअमेहमहुअराओ घणसमआअड्ढिओणअविमुक्काओ ।
णहपाअवसाहाओ णिअट्ठाणं व पडिगआओ दिसाओ ॥
[धुतमेघमधुकरा घनसमयाकृष्टावनतविमुक्ताः। नभःपादपशाखा निजकस्थानमिव प्रतिगता दिशः॥]

श्लेषान्वितं यथा—

पीणपओहरलग्गं दिसाणं पवसन्तजलअसमअविइण्णम् ।
सोहग्गपढमइण्हं पम्माअइ सरसणहवअं इन्दधणुम् ॥
( पीनपयोधरलग्नं दिशां प्रवसज्जलदसमयवितीर्णम् ।
सौभाग्यप्रथमचिह्नं प्रम्लायति सरसनखपदमिन्द्रधनुः ॥ )

प्रसिद्धसाधर्म्याभावे द्योतकाभावे उभयाभावे वा उक्तिचातुर्यादौपम्यप्रतीतिः साम्यम् । सा त्रिधा— प्रसिद्धसाधर्म्याभावः, द्योतकाभावः, उभयाभावश्च । तत्र प्रसिद्धसाधर्म्याभावे यथा—

संचारिणी दीपशिखेव रात्रौ यं यं व्यतीयाय पतिंवरा सा ।
नरेन्द्रमार्गाट्ट इव प्रपेदे विवर्णभावं स स भूमिपालः ॥

द्योतकाभावे यथा—

नैकोऽपि त्वादृशोऽद्यापि जायमानेषु राजसु । ननु द्वितीयो नास्त्येव पारिजातस्य पादपः ॥

उभयाभावे यथा—

न मर्त्यलोकस्त्रिदिवात्प्रतीयते म्रियेत नाग्र यदि वल्लभो जनः ।
निवृत्तमेव त्रिदिवप्रयोजनं मृतः स चेज्जीवत एव जीवति ॥

अस्य च साम्योत्कर्षादिभिरनन्त उक्तिप्रपञ्चः । साम्येन यथा—

शुद्धान्तदुर्लभमिदं वपुराश्रमवासिनो यदि जनस्य ।
दूरीकृताः खलु गुणैरुद्यानलता वनलताभिः ॥

उत्कर्षेण यथा—

तद्वक्त्रं यदि मुद्रिता शशिकथा तच्चेत्स्मितं का सुधा
तच्चक्षुर्यदि हारितं कुवलयैः स्ताश्चेद्गिरो धिङ्मधु ।
धिक् कन्दर्पधनुर्भ्रुवौ च यदि ते किं वा बहु ब्रूमहे
तत्सत्यं पुनरुक्तवस्तुविरसः सर्गक्रमो वेधसः ॥

साम्योत्कर्षाभ्यां यथा—

तरङ्गय दृशोऽङ्गने पततु चित्रमिन्दीवरं स्फुटीकुरु रदच्छदं व्रजतु विद्रुमः श्वेतताम् ।
क्षणं वपुरपावृणु स्पृशतु काञ्चनं कालिकामुदञ्चय मुखं मनाग्भवतु च द्विचन्द्रं नभः ॥

उपमेयापकर्षो यथा—

गर्वमसंवाह्यमिमं लोचनयुगलेन वहसि किं मुग्धे ।
सन्तीदृशानि दिशि दिशि सरःसु ननु नीलनलिनानि ॥

उपमानापकर्षो यथा—

अन्यतो नय मुहूर्तमाननं चन्द्र एष सरले कलामयः ।
*मा कदाचन कपोलयोर्मलं संक्रमय्य समतां नयिष्यति ॥*

उभयापकर्षो यथा—

घरिणीए महाणसकम्मलग्गमसिमलिइएण हत्थेण ।
छित्तं मुहं हसिज्जइ चन्दावत्थं गअं पइणा ॥

(गृहिण्या महानसकर्मलग्नमसीमलिनितेन (मलिनेन) हस्तेन । स्पृष्टं मुखं हस्यते चन्द्रावस्थां गतं पत्या ॥)

अनुत्कर्षापकर्षे यथा—

मृगं मृगाङ्कः सकलं सदाङ्के बिभर्ति तस्यास्तु मुखं कदाचित् ।
कपोलदेशे मृगनाभिपत्रमियान्सखे तस्य ततोऽपकर्षः ॥

एवमन्यदपि यथा—

किं मरणं दारिद्र्यं को व्याधिर्जीवितं दरिद्रस्य। कस्स्वर्गः सन्मित्रं सुकलत्रं सुप्रभुः सुसुतः॥

उपमानोपमेययोः अत्यन्तसादृश्यात् सन्देहः संशयः। यथा—

वाली भंभुरभोली उल्लसिअणिअंसिणी गहणं सुणिअ त्रिनिक्कन्ता णिद्दाए भेम्भली।
राहुवि तीअ मुहु जोहई पुणु जोहई गअणु भुल्लेओ ण हु आणई दोण्हवि चन्दुकं वणु॥

(बाला मूर्खचेस्युल्लसितनिवसना ग्रहणं श्रुत्वा विनिष्क्रान्ता निद्रया जडा।
राहुरपि तस्या मुखं पश्यति पुनः पश्यति गगने भ्रान्तिमान् न खलु जानाति द्वयोश्चन्द्रः कः॥)

यथा वा—

मुहे मअखलिउल्लावे ण्हाणोल्लुए चिउरे वेणीअंसणसारे समोत्तिअहारे उरे।
कालान्तरे तरलच्छिहुमअणु समुल्लसइ माहदु पुणुत्थणगुडरे ण मुणइ कहिं वसइ॥

(मुखे मदस्खलितोल्लापे स्नानोत्प्लुते चिकुरे वेणीनिवसनसारे समौक्तिकहारे उरसि।
कालान्तरे तरलाक्षणोर्मदनः समुल्लसति माघे पुनः स्तनगृहे न ज्ञायते कुत्र वसति॥)

अन्यधर्माणामन्यत्रारोपणं समाधिः। यथा—

अवऊहिअपुव्वदिसे समअं जोण्हाए सेविअपओसमुहे।
माइ ण झिज्जउ रअणी वरदिसाइतपच्छिअम्मि मिअङ्के॥

[अवगूहितपूर्वदिशे समकं ज्योत्स्नया सेवितप्रदोषमुखे।
मातर्न क्षीयते रजनी अपरदिशाभिमुखप्रस्थिते मृगाङ्के॥]

यथा वा—

वल्लहे लहु वोलन्तइ एत्तइ पुणु वहु वलि किज्जमि तामरसिणि तुज्झ रोसहु थिरहु।
जेण णिरग्गलु जम्पइ किम्पिण जाव जणु ताव हिमेण त्रिसिप्ति झत्थि पुलुट्ठतनु॥

[वल्लभे लघु व्यपक्रामत्यागच्छति पुनर्बहु बलिः क्रिये तामरसिनि तव रोषस्य स्थिरस्य।
येन निरर्गलं जल्पति किमपि न यावज्जनस्तावद्धिमेन विशीर्णो झटिति प्लुष्टतनुः॥]

मेलितमपि समाधिरेव। यथा—

देहो व्व पडइ दिअहो कण्ठच्छेओ व्व लोहिओ होइ रई।
गलइ रुहिरं व्व संज्ञा घोलइ केसकसणं सिरम्मिअ तिमिरम्॥

[देह इव पतति दिवसः कण्ठच्छेद इव लोहितो भवति रविः।
गलति रुधिरमिव सन्ध्या घूर्णते केशकृष्णं शिर इव तिमिरम्॥

यथा च–

पल्लविअं विअ करपल्लवेहिं पप्फुल्लिअं विअ णअणेहिं ।
फलिअं विअ पीणपओहरेहि अज्जाए लावण्णम् ॥
(पल्लवितमिव करपल्लवाभ्यां प्रफुल्लितमिव नयनाभ्याम् ।
फलितमिव पीनपयोधराभ्यां आर्याया लावण्यम् ॥)

उपमानोपमेययोरत्यन्तप्रसिद्धेरुपमानेनैव संक्षेपतोऽभिधानं समासोक्तिः। सा द्विधा-अभिधीयमानसादृश्या, प्रतीयमानसादृश्या च । तयोरभिधीयमानसादृश्या यथा—

नालस्य प्रसरो जलेष्वपि कृतावासस्य कोशे रुचि-
र्दण्डे कर्कशता मुखे च मृदुता मित्रे महान्प्रश्रयः।
आमूलं गुणसंग्रहव्यसनिता द्वेषश्च दोषाकरे
यस्यैषा स्थितिरम्बुजस्य वसतिर्युक्तैव तत्र श्रियः॥

यथा च—

इन्दुर्लिप्त इवाञ्जनेन जडिता दृष्टिर्मृगीणामिव
प्रम्लानारुणिमेव विद्रुमलता श्यामेव हेमप्रभा ।
पारुष्यं कलया च कोकिलवधूकण्ठेष्विव प्रस्तुतं
सीतायाः पुरतश्च हन्त शिखिनां बर्हाः सगर्हा इव ॥

प्रतीयमानसादृश्या यथा—

उत्तुङ्गे कृतसंश्रयस्य शिखरिण्युच्चावचग्रावणि
न्यग्रोधस्य किमङ्ग तस्य वचसा श्लाघासु पर्याप्यते ।
अन्वर्था स पुराकृतः किमथवा सत्कर्मणां संचयो
मार्गे रूक्षविपन्नशाखिनि जनो यं प्राप्य विश्राम्यति ॥

यथा च—

किं जातोऽसि चतुष्पथे यदि घनच्छायोऽसि किं छायया
संपन्नः फलितोऽसि किं यदि फलैः पूर्णोऽसि किं संनतः ।
हे सद्वृक्ष सहस्व संप्रति शिखाशाखाशताकर्षण-
क्षोभोन्मोटनभञ्जनानि जनतः स्वैरेव दुश्चेष्टितैः ॥

द्रव्यक्रियागुणादीनां सहाभिधानं सहोक्तिः। सा द्विधा– सादृश्यवती, असादृश्यवती च। तयोराद्या यथा—

धीरं व जलसमूहं तिमिणिवहं मिव सपक्खपव्वअलोअम्।
णइसोत्तेव तरङ्गे रअणाइँ व गरुअगुणसआइँ वहन्तम्॥

[धैर्यमिव जलसमूहं तिमिनिवहमिव सपक्षपर्वतलोकम्।
नदिस्रोतांसीव तरङ्गान् रत्नानीव गुरुकगुणशतानि वहन्तम्॥]

द्वितीया यथा—

धीरेण समं जामा हिअएण समं अणिट्ठिआ उवएसा।
उच्छाहेण सह भुआ बाहेण समं गलन्ति उल्लावा॥

(धैर्येण समं यामा हृदयेन सममनिष्ठिता उपदेशाः।
उत्साहेन सह भुजौ बाष्पेण समं गलन्त्यस्योल्लापाः॥

द्रव्यगुणक्रियाणामेकत्र बहूनामारोपणं समुच्चयोक्तिः। सा चतुर्धा– एकद्योतका, अनेकद्योतका, एकानेकद्योतका, अद्योतका च। तत्रैकद्योतका यथा–

कलाः प्रलापा गतयो मदालसा विशुद्धविस्रम्भरसाः समागमाः।
तदाङ्गनानां रमणीयतां ययु र्विसर्पिलज्जाविभवाश्च विभ्रमाः॥

अनेकद्योतका यथा—

अप्राकृतस्तु कथमस्तु न विस्मयाय यस्मिन्नुवास करुणा च कृतज्ञता च।
लक्ष्मीश्च सात्त्विकगुणज्वलितं च तेजो धर्मश्च मानविजयौ च पराक्रमश्च॥

एकानेकद्योतको यथा—

विचिन्त्यमानं मनसाऽपि देहिना मिदं हि लोकेषु चकास्ति दुर्लभम्।
निशा सचन्द्रा मदिरा च सोत्पला प्रियानुरागोऽभिनवं च यौवनम्॥

अद्योतका यथा—

पुरं त्रिकूटं परिधाय यो निधिः प्रभुर्दशास्यः सुभटा निशाचराः।
नरोऽभियोक्ता रिपवः प्लवङ्गमाः किमत्र वो हास्यपदे महद्भयम्॥

विवक्षितगुणोत्कर्षैः स्तुतिनिन्दार्थं सहाभिधानं तुल्ययोगिता। सा स्तुत्यर्था यथा–
शेषो हिमगिरिस्त्वं च महान्तो गुरवः स्थिराः। इमां लङ्घितमर्यादां चलन्तीं बिभृथ क्षितिम्॥

निन्दार्था यथा–

सङ्गतानि मृगाक्षीणां तटिद्विलसितानि च। क्षणद्वयं न तिष्ठन्ति घनारब्धान्यपि स्वयम्॥

दोषस्य गुणीभावो गुणस्य च दोषीभावो लेशः। तत्र दोषस्य गुणीभावो यथा–

चपलो निर्दयश्चासौ जनः किं तेन मे सखि। आगःप्रमार्जनायैव चाटवो येन शिक्षिताः॥

गुणस्य दोषीभावो यथा—

युवैव गुणवान्राजा योग्यस्ते पतिरूर्जितः। रणोत्सवे मनःसक्तं यस्य कामोत्सवादपि॥

व्याजस्तुतिरपि लेश एव। यथा—

पुंसः पुराणादाच्छिद्य श्रीस्त्वया परिभुज्यते। राजन्निक्ष्वाकुवंशस्य किमिदं तव युज्यते॥

यथा च—

इन्दोर्लक्ष्म स्मरति जयिनः कण्ठमूलं मुरारि र्दिङ्नागानां घनमदमषीभाञ्जि गण्डस्थलानि।
अद्याप्युर्वीवलयतिलकश्यामलिम्नानुलिप्तान्याभासन्ते वद धवलितं किं त्वदीयैर्यशोभिः॥

पदार्थापलापोऽपह्नुतिः। सा द्विधा, औपम्यवती, अनौपम्या च। औपम्यवती यथा–

गिम्हे दवग्गिमसिमइलिआइं दीसन्ति विंझसिहराइं।
आससु पउत्थवइए ण होन्ति णवपाउसब्भाइं॥
(ग्रीष्मे दावाग्निमसीमलिनानि दृश्यन्ते विन्ध्यशिखराणि।
आश्वसिहि प्रोषितपतिके न भवन्ति नवप्रावृडभ्राणि॥)

यथा च—

न केतकीनां विलसन्ति सूचयः प्रवासिनो हन्त हसत्ययं विधिः।
तडिल्लतेऽयं न चकास्ति चञ्चला पुरः स्मरज्योतिरिदं विजृम्भते॥

अनौपम्या यथा—

राजकन्यानुरक्तं मां रोमोद्भेदेन रक्षकाः। अवगच्छेयु राज्ञातमहो शीतानिलं वनम्॥

यथा च—

आनन्दाश्रु प्रवृत्तं मे कथं दृष्ट्वैव कन्यकाम्। अक्षि मे पुष्परजसा वातोद्धूतेन पूरितम्॥

अस्तोतव्यस्ताभिनन्दनमप्रस्तुतप्रशंसा। यथा–

कामं वनेषु हरिणा स्तृणानि खादन्त्ययत्नसुलभानि।
विदधति धनिषु न दैन्यं ते किल पशवो वयं सुधियः॥

यथा वा—

पङ्गो वन्द्यस्त्वमसि न गृहं यासि योऽर्थी परेषां धन्योऽन्ध त्वं धनमदवतां नेक्षसे यन्मुखानि।
श्लाघ्यो मूक त्वमपि कृपणं स्तौषि नार्थाशया यः स्तोतव्यस्त्वं बधिर न गिरं यःखलानां
शृणोषि ॥

अन्यथावस्थितस्यान्यथोत्प्रेक्षणं उत्प्रेक्षा । सा त्रिधा, द्रव्यविषया, गुणविषया, क्रियाविषया च । तत्र द्रव्यविषया यथा—

देहस्था दर्पणे यस्य पश्यति प्रतिमामुमा । अन्यार्धार्धमिवोत्पन्नमर्धनारीश्वरान्तरम् ॥

गुणविषया यथा—

पल्लविअं विअ करपल्लवेहिं पप्फुल्लिअं विअ णअणेहिं ।
फलिअं विअ पीणपओहरेहि अज्जाए लावण्णम् ॥
(पल्लवितमिव करपल्लवाभ्यां प्रफुल्लितमिव नयनाभ्याम् ।
फलितमिव पीनपयोधराभ्यां मार्याया लावण्यम् ॥ )

क्रियाविषया यथा—

सेनागजाः स्वकरपल्लवलेखनीभि र्गण्डस्थलान्मदमषीं मुहुराददानाः ।
मन्ये धरेन्द्र तव तोयधितीरतालीपत्रोदरेषु विजयस्तुतिमालिखन्ति ॥

मतमुत्प्रेक्षोपमोत्प्रेक्षावयवश्च उत्प्रेक्षैव । तेषु मतं यथा—

यदेतच्चन्द्रान्तर्जलदलवलीलां वितनुते तदाचष्टे लोकः शशक इति नो मां प्रति तथा ।
अहं त्विन्दुं मन्ये त्वदरिविरहाक्रान्ततरुणीकटाक्षोल्कापातव्रणकिणकलङ्काङ्कितननुम् ॥

उत्प्रेक्षोपमा यथा—

किंशुकव्यपदेशेन तरुमारुह्य सर्वतः । दग्धादग्धामरण्यानीं पश्यतीव विभावसुः ॥

उत्प्रेक्षावयवो यथा—

अंगुलीभिरिव केशसञ्चयं संनिगृह्य तिमिरं मरीचिभिः ।
कुड्मलीकृतसरोजलोचनं चुम्बतीव रजनीमुखं शशी ॥

वस्तुपन्यस्य तत्साधनसमर्थस्य वस्तुनोऽन्यस्य न्यसनमर्थान्तरन्यासः । स त्रिधा— साधर्म्येण, वैधर्म्येण, विपर्ययेण च । साधर्म्येण यथा—

पयोमुचः परीतापं हरन्त्येते शरीरिणाम् । नन्वात्मलाभो महतां परदुःखोपशान्तये ॥

वैधर्म्येण यथा—

प्रियेण संग्रथ्य विपक्षसंनिधावुपाहितां वक्षसि पीवरस्तने ।
स्रजं न काचिद्विजहौ जलाविलां वसन्ति हि प्रेम्णि गुणा न वस्तुनि ॥

विपर्ययेण यथा—

जोजस्स हिअअदइओ दुक्खं देन्तो वि सो सुहं देइ ।
दइअणअदूमिआणं वि वड्ढीइ त्थणआणं रोमञ्चो ॥

[यो यस्य हृदयदयितो दुःखं ददद्पि स सुखं ददाति । दयितनखदूनयोरपि वर्धते स्तनयो रोमाञ्चः ॥]

उभयन्यासः प्रत्यनीकन्यासः प्रतीकन्यासोऽपि चार्थान्तरन्यास एव । तत्रोभयन्यासो यथा—

ते विरला सप्पुरिसा जे अभणन्ता घडन्ति कज्जालावे ।
थोअच्चिअ ते वि दुमा जे अमुणिअकुसुमणिग्गमा देन्ति फलम् ॥

[ते विरलाः सत्पुरुषा येऽभणन्ता घटयन्ति कार्यालापान् ।
स्तोका एव तेऽपि द्रुमा येऽज्ञातकुसुमनिर्गमा ददति फलम् ॥]

प्रत्यनीकन्यासो यथा—

विरला उवआरिच्चिअ णिरवेक्खा जलहरव्व वच्चन्ति ।
झिज्जन्ति ताण विरहे विरलच्चिअ सरिप्पवाहव्व ॥

(विरला उपकर्त्रैव निरपेक्षा जलधरवत् वर्तन्ते । क्षीयन्ते तेषां विरहे विरला एव सरित्प्रवाहा इव ॥)

प्रतीकन्यासो यथा—

का कथा बाणसन्धाने ज्याशब्देनैव दूरतः । हुंकारेणेव धनुषः स हि विघ्नानपोहति ॥

जात्यादिवाचिना पदेन सर्ववाक्योपकारो दीपकम् । तत्त्रिधा— क्रियादीपकं, कारकदीपकं, मालादीपकं च । तत्र क्रियादीपकं यथा—

त्वया कर्णोत्पलं कर्णे स्मरेणास्त्रं शरासने । मया च मरणे चेतस्त्रयमेतत्समं कृतम् ॥

कारकदीपकं यथा—

पवनो दक्षिणः पर्णं जीर्णं हरति वीरुधाम् । स एव च नताङ्गीनां मानभङ्गाय कल्पते ॥

मालादीपकं यथा—

इमिणा सरएण ससी ससिणा वि णिसा णिसाइ कुमुअवणम् ।
कुमुअवणेण अ पुलिणं पुलिणेण अ सोहए हंसउलम् ॥

(अनया शरदा शशी शशिनापि निशा निशया कुमुदवनम् ।
कुमुदवनेन च पुलिनं पुलिनेन च शोभते हंसकुलम् ॥)

आवृत्तिरपि दीपकमेव । स त्रिधा— शब्दावृत्तिरर्थावृत्तिरुभयावृत्तिश्च । शब्दावृत्तिर्यथा–

उत्कण्ठयति मेघानां माला वृन्दं कलापिनाम् । यूनामुत्कण्ठयत्यद्य मानसं मकरध्वजः ॥

अर्थावृत्तिर्यथा–

हृष्यति चूतेषु चिरं तुष्यति बकुलेषु मोदते मरुति ।
इह हि मधौ कलकूजिषु पिकेषु च प्रीयते कामी ॥

उभयावृत्तिर्यथा–

जय देव भुवनभावन जय भगवन्निखिलवरदनिगमनिधे ।
जय रुचिरचन्द्रशेखर जय मदनान्तक जयादिगुरो ॥

क्रियापदादीनामुपस्कारः परिकरः । स त्रिधा– क्रियापरिकरः, कारकपरिकरः, वस्तुपरिकरश्च । क्रियापरिकरो यथा—

ववसिअणिवेइअत्थो सो मारुइलद्धपच्चआगअहरिसम् ।
सुग्गीवेण उरत्थलवणमालामलिअमहुअरं उवऊढो ॥

(व्यवसितनिवेदितार्थः स मारुतिलब्धप्रत्ययागतहर्षम् । सुग्रीवेणोरःस्थलवनमालामृदित-मधुकरमुपगूढः ॥)

कारकपरिकरो यथा—

पडिआ अ हत्थसिढिलिअणिरोहपण्डरसमूससन्तकवोला ।
पेल्लिअवामपओहरविसमुण्णअदाहिणत्थणी जणअसुआ ॥

(पतिता च हस्तशिथिलितनिरोधपाण्डुरसमुच्छ्वसत्कपोला ।
प्रेरितवामपयोधरविषमोन्नतदक्षिणस्तनी जनकसुता ॥)

वस्तुपरिकरो यथा—

देवी पुत्रमसूत नृत्यत गणाः किं तिष्ठतेत्युद्भुजे हर्षाद्भृङ्गिरिटावुदाहृतगिरा चामुण्डयालिङ्गिते ।
पायाद्वो जितदेवदुन्दुभिघनध्वानः प्रवृत्तस्तयोरन्योन्याङ्गनिपातजर्जरजरत्स्थूलास्थि-जन्मा रवः ॥

एकावल्यपि परिकरविशेष एव । सा त्रिधा– शब्दैकावली, अर्थैकावली, उभयैकावली च ।

शब्दैकावली यथा—

पर्वतभेदि पवित्रं जैत्रं नरकस्य बहुमतङ्गहनम् ।
हरिमिव हरिमिव हरिमिव वहति पयः पश्यत पयोष्णी ॥

अर्थैकावली यथा—

शुक्लः श्वेतार्चिषो वृद्धौ पक्षः पञ्चशरस्य सः। स च रागस्य रागोऽपि यूनां रत्युत्सवश्रियः॥

उभयैकावली यथा—

अम्बा कुप्यति न मया न तया सापि कुप्यति नाम्बया न मया।
अहमपि कुप्ये न तया न तया वद राजन् कस्य दोषोऽयम्॥

शब्दार्थोभयानां परिपाटिः क्रमः। तेषु शब्दपरिपाटिर्यथा—

तस्याः प्रवृद्धलीलाभिरालापस्मितदृष्टिभिः। जीयन्ते वल्लकीकुन्दस्रगिन्दीवरसम्पदः॥

अर्थपरिपाटिर्यथा—

पायाद्वो रचितत्रिविक्रमतनुर्देवः स दैत्यान्तको
यस्याकस्मिकवर्धमानवपुषस्तिग्मद्युतेर्मण्डलम्।
मौलौ रत्नरुचि श्रुतौ परिलसत्ताटङ्ककान्ति क्रमा-
ज्जातं वक्षसि कौस्तुभाभमुदरे नाभीसरोजोपमम्॥

उभयपरिपाटिर्यथा—

पङ्कअ पङ्कि वहेल्लिअ कुवलअ खित्तउ दहहिं
वालिहिं बिम्ब विविल्लिओ घत्तिओ चन्दु णहहि।
करणअणाहरवअणहिं तहिं लीलावइहिं णिअसिट्ठि वि उच्चिट्ठीणा इं पआवइहिं॥

(पङ्कजं पङ्केऽवहेल्य कुवलयं क्षिप्त्वा ह्रदे वृन्ते बिम्बं विप्रकीर्णं निरस्तश्चन्द्रो नभसि।
करनयनाधरवदनैस्तत्र लीलावत्यां निजसृष्टिरप्युत्सृष्टा किं प्रजापतिना॥)

मितमुक्तिप्रकारोऽवसरश्च इति पर्यायस्त्रिधा। तत्र मितं यथा—

ददात्यसौ परभृतः सहकारस्य मञ्जरीम्। तमहं वारयिष्यामि युवाभ्यां स्वैरमास्यताम्॥

युक्तिप्रकारो यथा—

राजन् राजसुता न पाठयति मां देव्योऽपि तूष्णीं स्थिताः
कुब्जे भोजय मां कुमार कुशलं नाद्यापि किं भुज्यते।
इत्थं नाथ शुकस्तवारिभवने मुक्तोध्वगैः पञ्जरा-
च्चित्रस्थानवलोक्य वेश्मवलभीष्वेकैकमाभाषते॥

अवसरो यथा—

अथ तैः परिदेविताक्षरैर्हृदये दिग्धशरैरिवार्दितः।
रतिमभ्युपपत्तुमातुरां मधुरात्मानमदर्शयत्पुरः॥

विशेषविवक्षया लोकवृत्तानतिक्रमेणात्युकेरभिधानमतिशयो यथा—

अहो विशालं भूपाल भुवनत्रितयोदरम्। माति मातुमशक्योऽपि यशोराशिर्यदत्र ते ॥

यथा वा—

स्तनयोर्जघनस्यापि मध्ये मध्यं प्रिये तव। अस्ति नास्तीति सन्देहो न मेऽद्यापि निवर्तते ॥

विधिनिषेधाभ्यां प्रतिषेधोक्तिराक्षेपः। स द्विधा- शुद्धमिश्रभेदात्। तत्र विध्याक्षेपः शुद्धो यथा—

गच्छ गच्छसि चेत्कान्त पन्थानः सन्तु ते शिवाः।
ममापि जन्म तत्रैव भूयाद्यत्र गतो भवान् ॥

मिश्रो यथा—

अलं विवादेन यथा श्रुतं त्वया तथाविधस्तावदशेषमस्तु सः।
ममात्र भावैकरसं मनः स्थितं न कामवृत्तिर्वचनीयमीक्षते ॥

निषेधाक्षेपः शुद्धो यथा—

कुतः कुवलयं कर्णे करोषि कलभाषिणि। किमपाङ्गमपर्याप्तमस्मिन्कर्मणि मन्यसे ॥

मिश्रो यथा—

सच्चं गुरुओ गिरिणो को भणइ जलासआ ण गम्भीरा।
धीरेहिं उवमाउँ तह वि खु मह णत्थि उच्छाहो ॥

[सत्यं गुरवो गिरयः को भणति जलाशया न गम्भीराः। धीरैरुपमातुं तथापि खलु मम (नास्त्युत्साहः ॥]

शेषीभूतः रोषोऽपि निषेधाक्षेप एव। यथा—

किं जम्पिएण दहमुह जम्पिअसरिसं अणिव्वहन्तस्स भरम्।
एत्तिअ जम्पिअसारं णिहणं अण्णे वि वज्जधारासु वआ ॥

[किं जल्पितेन दशमुख जल्पितसदृशमनिर्वहतो भरम्।
एतावद् जल्पितसारं निधनमन्येऽपि वज्रधारासु गताः ॥]

यथा च—

पउरजुआणो गामो महुमासो जोव्वणं पई ठेरो।
जुण्णसुरा साहीणा असई मा होउ किं मरउ ॥

[प्रचुरयुवा ग्रामो मधुमासो यौवनं पतिः स्थविरः। जीर्णसुरा स्वाधीना असती मा भवतु किं म्रियताम् ॥]

आधिक्येन न्यूनतया वोत्कर्षविवक्षा विशेषोक्तिः। तत्राधिक्येन यथा—

अयं तया रथक्षोभा दंसेनांसो निपीडितः। एकः कृती शरीरेऽस्मिञ्शेषमङ्गं भुवो भरः॥

न्यूनतया यथा—

न कठोरं न वा तीक्ष्ण मायुधं पुष्पधन्वनः। तथापि जितमेवाभू दमुना भुवनत्रयम्॥

एकपदेनानेकार्थाभिधानं श्लेषः। स षोढा— अभिन्नपदो भिन्नपदश्च, अभिन्नक्रियो भिन्नक्रियश्च, अभिन्नकारको भिन्नकारकश्चेति। तेष्वभिन्नपदो यथा—

असावुदयमारूढः कान्तिमान् रक्तमण्डलः। राजा हरति लोकस्य हृदयं मृदुभिः करैः॥

भिन्नपदो यथा—

दोषाकरेण संबध्नन्नक्षत्रपथवर्तिना। राज्ञा प्रदोषो मामित्थमप्रियं किं न बाधते॥

अभिन्नक्रियो यथा—

स्वभावमधुराः स्निग्धाः शंसन्त्यो रागमुल्बणम्।
दृशो दूत्यश्च कर्षन्ति कान्ताभिः प्रेषिताः प्रियान्॥

भिन्नक्रियो यथा—

मधुरा रागवर्धिन्यः कोमलाः कोकिलागिरः। आकर्ण्यन्ते मदकलाः श्लिष्यन्ते चासितेक्षणाः॥

अभिन्नकारको यथा—

कृष्णार्जुनानुरक्तापि दृष्टिः कर्णावलम्बिनी। याति विश्वसनीयत्वं कस्य ते कलभाषिणि॥

भिन्नकारको यथा—

गतिर्वेणी च नागेन वपुरूरू च रम्भया। ओष्ठौ पाणी प्रवालैश्च तस्यास्तुल्यत्वमाययुः॥

स्वाभिप्रायकथनमन्यापदेशोऽन्यभावना च भाविकम्। तेषु स्वाभिप्रायकथनं यथा—

णावज्झइ दुग्गेज्झिआ दिट्ठम्मि जम्मि भिउडिआ
जत्थ ण अव्वाहारओ घिप्पइ आहा सत्तए।
विच्छुहइ अहिणितए जत्थ ण सो वअंसिआ
त मे कहउ माणअं जइ मे इच्छदु जीअअम्॥

[नावध्यते दुर्गृहीता दृष्टे यस्मिन् भृकुटिका यत्र नाव्याहारो गृह्यते आमाषमाणे। विक्षुभ्यतेऽभिनिन्द्यते यत्र न स वयस्यया त मे कथय मानं यदि मे इच्छसि जीवनम्॥]

अन्यापदेशो यथा—

आसाइअमणाएण जेत्तिअं तेत्तिअं चिअ विहीण।
ओरमसु वसह एह्लि रक्खिज्जइ गहवइच्छेत्तम्॥

(आस्वादितमज्ञातेन यावत्तावदेव व्रीहीणाम् । उपरम वृषभेदानीं रक्ष्यते गृहपतिक्षेत्रम् ॥)

अन्यभावना यथा—

दंसणवलिअं दढकं विबन्धणं दीहरं सुपरिणाहम् ।
होइ घरे साहीणं मुसलं धण्णाण महिलाणम् ॥

(दंशनवलितं दढकं विबन्धनं दीर्घं सुपरिणाहम् । भवति गृहे स्वाधीनं मुसलं धन्यानां महिलानाम् ॥)

उद्भेदोऽपि भाविकमेव । स त्रिधा– अव्यक्तो व्यक्त उभयात्मकश्च । अव्यक्तो यथा—

निःशेषच्युतचन्दनं स्तनतटं निर्मृष्टरागोऽधरो नेत्रे दूरमनञ्जने पुलकिता तन्वी तवेयं तनुः ।
मिथ्यावादिनि दूति बान्धवजनस्याज्ञातपीडागमे वापीं स्नातुमितो गतासि
न पुनस्तस्याधमस्यान्तिकम् ॥

व्यक्तो यथा—

अतिकोमलमेकतोऽन्यतः सरसाम्भोरुहनालकर्कशम् ।
वहति स्फुटमेतदेव ते वचनं शाकपलाशदेश्यताम् ॥

उभयरूपो यथा—

अम्लानोत्पलकोमले सखि दृशौ नीलाञ्जनेनाञ्चिते
कर्पूरच्छुरणाच्च गण्डफलके संवेल्लितः पाण्डिमा ।
श्वासाः सन्तु च कन्दुकभ्रमिभुवः किन्तु प्रभावाहिना-
मङ्गानां कृशिमानमुत्कटममुं को नाम नोत्प्रेक्षते ॥

नानालङ्कारसङ्करः संसृष्टिः । सा त्रिधा– व्यक्तरूपा, अव्यक्तरूपा, व्यक्ताव्यक्तरूपा च ।
तासु व्यक्तरूपा तिलतण्डुलवत् छायादर्शवच्च । तयोराद्या यथा—

पिनष्टीव तरङ्गाग्रै रुदधिः फेनचन्दनम् । तदादाय करैरिन्दु र्लिम्पतीव दिगङ्गनाः ॥

अत्रोत्प्रेक्षाद्वयं रूपकद्वयं च तिलतण्डुलवत्सङ्कीर्णा । द्वितीया यथा—

निर्मलेन्दु नभो रेजे विकचाब्जं बभौ सरः । परं पर्यश्रुनयनौ मम्लतुर्भ्रातरावुभौ ॥

अत्रादर्शच्छायेव हेत्वलङ्कारे रामलक्ष्मणमुखयोरिन्दुपद्मौपम्यं दृश्यते । अव्यक्तरूपा क्षीरजलवत्पांसूदकवच्च । तयोराद्या यथा—

क्षीरक्षालितचन्द्रेव नीलीधौताम्बरेव च । टङ्कोल्लिखितसूर्येव वसन्तश्रीरदृश्यत ॥

अत्रोपमोत्प्रेक्षे क्षीरनीरवन्मिथः संसृष्टे न व्यज्येते । द्वितीया यथा—

कृष्णार्जुनानुरक्तापि दृष्टिः कर्णावलम्बिनी । याति विश्वसनीयत्वं कस्य ते कलभाषिणि ॥

अत्र पांसूदकयोरिव मृत्पिण्डे श्लेषविरोधयोरव्यक्तरूपयोरेव व्याजस्तुतावङ्गाङ्गिभावोऽवगम्यते । व्यक्ताव्यक्तरूपा नरसिंहवच्चित्रवर्णवच्च । तयोराद्या यथा—

रजोभिस्तुरगोत्कीर्णैर्गजैश्च घनसंनिभैः । भुवस्तलमिव व्योम कुर्वन्व्योमेव भूतलम् ॥

अत्र नरसिंहजाताविव सिंहनरशरीरभागयोः परिवृत्त्यलङ्कारहेतूपमयोरङ्गभावो व्यक्ताव्यक्तरूपः परिस्फुरन्नुपलभ्यते । द्वितीया यथा—

मयूरारावमुखरां प्रावृषं सतडिल्लताम् । महाटवीमिवोल्लङ्घ्य तोयानि मुमुचुर्घनाः ॥

अत्र पटावयवस्थानां नीलादीनामिव पटावयव्याश्रिते चित्रवर्णश्लेषरूपकोपमार्थश्लेषाणां पदपदार्थाश्रयाणां शरद्वर्णने वाक्याश्रयिणि समाध्यलङ्कारे व्यक्ताव्यक्तरूपोऽङ्गाङ्गिभावः प्रतीयते ।

चतुर्विंशतिरित्येताः क्रमेणोभयसंश्रयाः । काव्यालंकृतयः प्रोक्ता यथावदुपमादयः ॥
इह हीवादिभिः शब्दैरसादृश्यादि प्रतीयते । अर्थोऽस्मात्सूरयः प्राहुरुभयालंकृतीरिमाः ॥

अलंक्रिया यास्त्विह शब्दसंश्रया स्ततोऽर्थभूषाप्यधिकं प्रकृष्यते ।
ततोऽभिरूपामुभयोरलंकृतिं वदन्ति संसृष्टिरतोऽपि शोभते ॥

इति महाराजाधिराज श्री भोजदेवविरचिते शृङ्गारप्रकाशे

उभयालङ्कारप्रवेशो नाम दशमः प्रकाशः

समाप्तः ॥



॥ श्रीः ॥

# एकादशः रसावियोगप्रकाशनप्रकाशः

निर्दोषस्य गुणवतोऽलङ्कृतस्य च काव्यशरीरस्य कामिनीशरीरस्येव सौभाग्यातिशयनिष्पत्तौ रसावियोग एव प्रकृष्ट उपायो गीयते । यतः,

कल्या मूर्तिः कुलममलिनं यौवनं रूपसम्पत्सौभाग्यर्द्धिः प्रियवचनताशीलवैदग्ध्ययोगः ।
शालीनत्वं विनयपरतेत्यङ्गनाभूषणं यत्तत्प्रेमार्द्रं प्रणयिनि मनो नास्तिचे न्नास्ति किञ्चित् ॥

किञ्च— अलंकृताप्यन्वयरूपभूषणै र्नशोभतेऽन्यां प्रति तावदङ्गना ।
बिभर्ति यावत्प्रमदासमागमे न शूरभार्याहतगर्वितं शिरः ॥

रस मिह प्रमाणमेवामनन्ति । सर्वेषामपि हि रत्यादिप्रकर्षाणां रतिप्रियो रणप्रियो अमर्षप्रियः परिहासप्रिय इति प्रेमण्येव पर्यवसानात् ।

अहेतुः पक्षपातोय स्तस्य नास्ति प्रतिक्रिया । स हि स्नेहात्मकस्तन्तुरन्तर्मर्माणि सीव्यति ॥

ततो हि—

यदेव रोचते मह्यं तदेव कुरुते प्रिया । इति वेत्ति न जानाति तत्प्रियं यत्करोति सा ॥

अपि च— अकिञ्चिदपि कुर्वाणः सौख्यैः दुःखान्यपोहति ।
तत्तस्य किमपि द्रव्यं यो हि यस्य प्रियो जनः ॥

तदुक्तम्—

अप्रातिकूलिकतया मनसो मुदादे र्यस्संविदोऽनुभवहेतुरिहाभिमानः ।
ज्ञेयो रसः स रसनीयतयाऽत्मशक्तेः रत्यादिभूमनि पुनर्वितथा रसोक्तिः ॥

नन्विदानीमेवोक्तं रतिप्रियो रणप्रियोऽमर्षप्रियः परिहासप्रिय इति । रत्यादिप्रकर्षाणां प्रेमण्येव पर्यवसानात् रसमिह प्रेमाणमामनन्तीति । तत्कथमुच्यते रत्यादिभूमनि पुनर्वितथा रसोक्तिरिति ? उच्यते, न रत्यादिभूमा रसः । किं तर्हि शृङ्गारः ? शृङ्गारो हि नाम विशिष्टादृष्टचेष्टाभिव्यञ्जकानां आत्मगुणसम्पदामुत्कर्षबीजं बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नसंस्काराद्यतिशयहेतुरात्मनोऽहङ्कारगुणविशेषः सचेतसा रस्यमानो रस इत्युच्यते । यदस्तित्वे रसिकोऽन्यथात्वे नीरस इति । तदाविर्भावहेतवश्च तत्प्रभवा एव भावाः । ते चैकोनपञ्चाशत् । रतिः, हर्षः,

रोमाञ्चः, धृतिः, गर्वः, हासः, मदः, उत्कण्ठा, चिन्ता, स्मृतिः, मतिः, वितर्कः, उत्साहः, क्रोधः, अमर्षः, असूया, ईर्ष्या, उग्रता, जुगुप्सा, विस्मयः, निद्रा, सुप्तम्, प्रबोधः, चपलता, आलस्यं, भयं, शङ्का, त्रासः, वेपथुः, व्रीडा, अवहित्थं, स्तम्भः, ग्लानिः, स्वेदः, व्याधिः, उन्मादः, श्रमः, शोकः, विषादः, वैवर्ण्यं, दैन्यं, स्वरभेदः, आवेगः, अश्रुमोक्षः, मोहः, प्रलयः, जाड्यं, निर्वेदः, शम इति ।

तत्र केचिदाचक्षते 'रतिप्रभवः शृङ्गार' इति । वयं तु मन्यामहे रत्यादीनामयमेव प्रभव इति । शृङ्गारिणो हि रत्यादयो जायन्ते, नाशृङ्गारिणः । शृङ्गारिणो हि रमन्ते, स्मयन्ते, उत्सहन्ते, जिहासन्तीति । ते तु भाव्यमानत्वाद्भावा एव न रसाः । यावत्सम्भवं हि भावनया भाव्यमानो भाव्य एवोच्यते । भावनापथमतीतस्तु रस इति । मनोऽनुकूलेषु हि दुःखादिष्वपि सुखानुभवाभिमानो रसः । स तु पारम्पर्येण सुखहेतुत्वात् रत्यादिभूमसूपचारेण व्यवह्रियते । अतो न रत्यादीनां रसत्वं, अपि तु भावनाविषयत्वाद्भावत्वमेव ।

यदप्युक्तं परप्रकर्षगामी रत्यादिभावो रस इति तदप्यसारम् । ग्लान्यादिष्वपि तदुपपत्तेः । ग्लान्यादयोऽपि हि श्रमादिभिः परं प्रकर्षमारोप्यन्ते । न ते स्थायिन इति चेत् स्थायित्वमेषामुत्पत्तीव्रसंस्कारात् । संस्कारोत्पत्तिश्च विषयातिशयान्नायकप्रकृतेश्च । नायकप्रकृतिश्च त्रिधा-सात्त्विकी, राजसी, तामसी च । तदन्वयाच्च तथाविधानुभवभावनोत्पत्तिः । ततश्चैषां स्थायित्व व्यपदेश इति ।

नन्वष्टौ स्थायिनो ऽष्टौ सात्त्विकास्त्रयस्त्रिंशद्व्यभिचारिण इति श्रूयते । न तत्साधु । यतोऽमीषामन्यतमस्यैतेनैव परस्परं निवर्त्यमानत्वात् । कश्चित्कदाचित्स्थायी कदाचित्तु व्यभिचारी । अतोऽवस्थावशात् सर्वेऽप्यमी व्यभिचारिणः सर्वेऽपि च स्थायिनः, सात्त्विका अपि सर्व एव मनःप्रभवत्वात् । अनुपहतं हि मनस्सत्त्वमित्युच्यते ।

यच्चोक्त विभावानुभावव्यभिचारिसंयोगात्स्थायिनो रसत्वमिति तदपि न । हर्षादिष्वपि विभावानुभावव्यभिचारिसंयोगस्य विद्यमानत्वात् । तस्माद्रत्यादयः सर्वे एवैते भावाः, शृङ्गार एवैको रस इति । तैश्च स्वविभावानुभावैः प्रकाशमानः शृङ्गारो विशेषतः स्वदते ।

तत्र केचनाहुः- नायं रसः शृङ्गाराख्यो रत्यादिभिर्व्यज्यते, अपि त्वालम्बनविभावादुत्पन्नो रत्यादिरुद्दीपनविभावादिभिः परं प्रकर्षमारोप्यमाणो रसीभवन् शृङ्गारादिसंज्ञां लभत इति । त एवं प्रष्टव्याः । किमेते रत्यादयः स्वेभ्यः स्वेभ्यः आलम्बनेभ्यः उत्पद्यमानाः सर्वस्याप्युत्पद्यन्ते उत कस्यचिदेवेति ? यदि तावत्सर्वस्य तदा सर्वं जगद्रसिकं स्यात् । न चैतदस्ति । यतः कश्चिद्रसिकः कश्चित्तु नीरसो दृश्यते । न च दृष्टविपरीतं शक्यमनुज्ञातुम् । अतो न सर्वस्य रत्यादयो जायन्ते । अथ कस्यचित्तस्य निमित्तमभिधानीयं तद्दृष्टमदृष्टं वा स्यात् । न तावद्

दृष्टमनुपलभ्यमानत्वात् । अदृष्टं तु साधारणमसाधारणं वा । साधारणे पूर्वोक्त एव दोषः, सर्वं जगद्रसिकं स्यादिति । असाधारणं तु नान्तरेण प्रत्यगात्मगतानादिवासनानुबन्धि धर्मकार्यं भवितुमर्हति । तं त्वात्मनोऽहङ्कारगुणविशेषं ब्रूमः । स शृङ्गारः, सोऽभिमानः, स रसः । तत एते रत्यादयो जायन्ते । तैश्चायं प्रकर्षप्राप्तैः सप्तार्चिरर्चिश्चयैरिव प्रकाशमानः शृङ्गारिणामेव स्वदत इति । तदुपाधिश्चायमुपजायमानो रसस्त्रिधा विरचायते, प्रकृष्टो भावरूप आभासश्च । तत्रायं कथा शरीरव्यापिन उत्तमनायकस्य तथाविध एव विषये जायते स प्रकृष्टः । मध्यमस्य य उपजातो न प्रकर्षमासादयति स भावरूपः । यश्च तिरश्चां प्रति नायकादीनां चोपजायते स शृङ्गाराभासः । तस्यापि योगो द्विधा– वाक्यविषयः प्रबन्धविषयश्च । तयोर्वाक्यविषयोऽश्लीलामङ्गलघृणावदर्थं ग्राम्यमित्यादिदोषहानेन, दीप्तरसत्वं कान्तिरित्यादिगुणोपादानेन कैशिकीवैदर्भ्यादिलङ्कारयोगेन च यद्यपि प्रसङ्गतस्तत्र युक्त्या तत्रतत्रोपवर्णितस्तथापि गुणालङ्कारसन्निवेशविशेषजन्यत्वान्नालङ्कार-संसृष्टावेव प्रकृष्टत्वं लभते । प्रायेण हि गुणानामपि शब्दार्थोभयालङ्काराणामनुप्रासजातिरूपकादीनां काव्यशरीरेष्विव कटककेयूरकुण्डलादीनां केवलानामदर्शनात् नानालङ्कारसंसृष्टिरेव प्रकृष्टं भूषणमवधार्यते । ततश्च भोजन इव मधुराम्ललवणपाडवानां, देह इव वस्त्रानुलेपनमाल्य-विभूषणानां, धूप इव चन्दनागरुकर्पूरसिह्लकाणां, सङ्गीत इव नृत्तवाद्यपाठ्यानां, प्रेमणीव कोपानुनयप्रसादसङ्गमसुखादीनां, गार्हस्थ्य इव धर्मार्थकाममोक्षसाधनानुष्ठानानां काव्यशरीरेऽपि रूपकादीनां संसृष्टिरेव विशेषतः स्वदमानो रसावियोगहेतुर्भवति । अतः प्रागुपदिष्टापि यत्नतः प्रपञ्च्यते । स तु द्विधा, प्रधानाङ्गभावेन समकक्ष्यतया च । यदाह—

अङ्गाङ्गिभावावस्थानं सर्वेषां समकक्ष्यता । इत्यलङ्कारसंसृष्टे र्लक्षणीया द्वयी गतिः ॥

तत्र प्रधानस्योपकारित्वेन यद्वर्तते तदङ्गम् । यस्तेनोपक्रियते तत्प्रधानम् । तद्यथा—

आक्षिपन्त्यरविन्दानि मुग्धे तव मुखश्रियम् । कोशदण्डसमग्राणां किमेषामस्ति दुष्करम् ॥

अत्रारविन्दानि मुग्धे तव मुखश्रियमाक्षिपन्तीत्युपमा । कोशदण्डसमग्राणां किमेषामस्ति दुष्कर-मिति श्लेषोपसर्जनोऽर्थान्तरन्यासः । भवन्ति चारविन्दानि कोशदण्डसमग्राणि तेन तेषां न किञ्चिदप्यशक्यमस्ति । कोशदण्डयोर्विजयसाधनत्वात् । एतेन श्लेषस्य साधनभूतार्थसमर्पक-त्वादुपमायास्तु प्रकृतसाध्यवस्तुविषयविशेषकत्वादर्थान्तरन्यासं प्रत्यङ्गभावो विज्ञायते ।

ननु चैतद्वाक्यदोषाणामदोषप्रस्तावे शब्दहीनस्य क्वचिद्विवक्षातो गुणत्वमिति वर्णितम् । उक्तं च—

इदं हि शास्त्रमाहात्म्यदर्शनालसचेतसाम् । अपभाषणवद्भाति न च सौभाग्यमुज्झति ॥

तत्किमत्रापभाषणं का वा सौभाग्यत्यागहेतुर्विवक्षेति ? उच्यते । किमेषां दुष्करमिति षष्ठ्यनुपपत्ति-रपभाषणं कर्तृकर्मणोः कृतीति षष्ठ्या 'न लोकाव्ययनिष्ठाखलर्थतृना' मिति प्रतिषेधात् । केह सौभाग्यत्यागहेतुर्विवक्षा ?

तत्रैके वर्णयन्ति, अनन्तः खल्वेष शब्दसमाम्नायः। तत्र यथा— अत्रं अजिरं विचक्षणः समाह्वय इत्यादिष्वदो जग्धिर्ल्यप्ति, अजेर्वी, चक्षिङ्ख्याञ्, एतदोऽशित्यादयो विशेषविधयः क्वचिद्वार्त्तिकेष्विडादकादौ प्रतिषेधा न भवन्ति। तथेह षष्ठीप्रतिषेधोऽपि क्वचिद्विशेषवचनान्न भविष्यति। दृश्यते चेह महाकवीनामविभागेन प्रयोगः। तद्यथा—

अपि वागधिपस्य दुर्वचं वचनं तद्विदधीत विस्मयम्॥ इति भारवेः,

इक्ष्वाकूणां दुरापेऽर्थे त्वदधीना हि सिद्धयः। इति कालिदासस्य.

विषम उपन्यासः। लक्षणात् प्रयोगस्मरणे हि शिष्टप्रयोगे लक्षणमनुपातयति। यत्र तु न लक्षणस्मरणाभावमात्रं, अपि तु तद्विपरीता स्मृतिः न लोकाव्ययनिष्ठाखलर्थतृनामिति किं महाकविप्रयोगस्य शक्यम्? अत एव पूर्वोक्तश्लोकार्थयोस्तद्व्याख्यातारोऽन्यथा व्याख्यानमकुर्वन्। द्रौपदी यद्वोचत्तद्दुर्वचं वचो वागधिपस्यापि विस्मयं विदधीतेति, दुरापेऽर्थे इक्ष्वाकूणां त्वदायत्ताः सिद्धय इति। एवं तर्हि शेषे षष्ठी भविष्यति। कः पुनरयं शेषः, किं कारकेभ्योऽन्यः उत कारकाणामविवक्षेति? किञ्चातः यदि कारकेभ्योऽन्यः शेषः स नास्ति सर्वत्र क्रियाकारकसंबन्धस्य भावात्। यथा राज्ञः पुरुष इति राजपुरुषं बिभर्ति इति कर्तृकर्मणोर्भरणक्रियाकृतः संबन्धः, पितुः पुत्र इति पिता पुत्रं जनयतीति कर्तृकर्मणोर्जनिक्रियाकृतः संबन्धः वृक्षस्य शाखेति वृक्षे शाखा शाखा तु वा वृक्षात्तिष्ठतीति कर्मधिकरणयोः स्थितिक्रियाजनितः संबन्धो भवति। अस्तु तर्हि कारकाणामविवक्षा शेषः। तन्न, सतः अविवक्षाभावात्। नहि सन्निहितो घटः अविवक्षितः सन् भवति। यथेच्छसि तथास्तु। अस्तु तावत्कारकेभ्योऽन्यः शेषः।

ननु चोक्तं कारकाणां सर्वत्र भावान्न ततोऽन्यः कश्चिदस्ति शेष इति। अस्त्येवेति ब्रूमः। यदा तावत्कारकाधिकरणेषु क्रियाकारकसंबन्धः सम्बन्धान्तरं जनयति तदा भवति संबन्धः कारकेभ्योऽन्यः। तथा हि। राज्ञः पुरुष इत्यत्र कर्तृकर्मणोः भरणक्रियाजनितेन संबन्धेन स्वस्वामिलक्षणः संबन्धो जन्यते, पितुः पुत्र इत्यत्र जनिक्रियाकृतेन जन्यजनकलक्षणः, वृक्षस्य शाखेत्यत्र स्थितिक्रियाकृतेनावयवावयविलक्षण इति तत्र षष्ठी भविष्यति। एवमन्येऽप्यश्रूयमाणक्रियापदाः षष्ठ्यर्थाः समुन्नेयाः। श्रूयमाणक्रियापदाः खल्वपि यथा नटस्य शृणोतीति न ग्रन्थिकसंबन्धश्रवणं षष्ठ्या प्रतीयते। न माषाणामश्नीयादिति माषसंबन्धी अशनप्रतिषेधो गम्यते। न ते सुखस्य जानन्ति ये न पश्यन्ति नन्दन इति सुखसंबन्धितया ज्ञानप्रतिषेधोऽवधार्यते। एवमिह दुष्करो मुग्धधिय आक्षेपः, श्रूयमाणक्रियापदाः षष्ठ्यन्ताः समुन्नेयाः कोशदण्डसमग्रत्वात् सुकरत्वं वाक्यार्थत्वेनावबोधयन्नरविन्दानां संबन्धितया न शेषलक्षणा षष्ठी विघ्नति।

तदेतस्मिन्दर्शन इदमुक्तं—

सम्बन्धः कारकेभ्योऽन्यः क्रियाकारकपूर्वकः।
श्रुतायामश्रुतायां वा क्रियायां सोऽभिधीयते॥

तथा हि—

जनयित्वा क्रिया काचित्सम्बन्धं विनिवर्तते। श्रूयमाणे क्रियाशब्दे सम्बन्धो जायते क्वचित् ॥

एवं कारकेभ्योऽन्यः शेष इति दर्शने किमेषामस्ति दुष्करमिति न षष्ठ्यनुपपत्तिः। अथवा पुनरस्तु कारकाणामविवक्षा शेषः। ननु चोक्तं सतः कथमविवक्षा। सतोऽप्यविवक्षा दृश्यते। यथा— अनुदरा कन्या, अलोमिका एडकेति। असतोऽपि विवक्षा यथा— विन्ध्यो वर्धितकः समुद्रः कुण्डिकेति। एवमिह किमेषामस्ति दुष्करमिति सतोऽपि कर्तुरविवक्षायां न तृतीया, अपि तु शेषे षष्ठ्येव। यदि तर्हि श्रूयमाणक्रियापदेऽपि कारकेभ्योऽन्यः कारकविवक्षा वा शेषः किमर्थं ज्ञोविदर्थस्य करण इत्येवमादिः षष्ठीविधानार्थः सूत्रप्रबन्धः पाणिनेः? न तस्य अन्यार्थत्वात् समासप्रतिषेधार्थः स वार्तिककृता व्याख्यातः प्रतिपदविधाना च षष्ठी न समस्यत इति। अन्यैरप्युक्तम्—

कारकैर्व्यपदिष्टे च श्रूयमाणक्रियापदे। शेषे प्रोक्ता पुनः षष्ठी समासस्य निवृत्तये ॥

एवमिदमुपमाश्लेषार्थान्तरन्यासानामुपकार्योपकारितया प्रधानगुणभावेन संसृष्टिः युक्तमिदं न युक्तं तुल्यकक्ष्यतयेति वाक्ये पदार्थानां समकक्ष्यता प्रधानानां वा भवेदप्रधानानां वा। न तावत्प्रधानानाम्, परस्परमनपेक्षत्वेन सम्बन्धाभावात्। नाप्यप्रधानानाम्, प्रधानापेक्षत्वेन परस्परानपेक्षायामसम्बन्धादेव। तदुक्तं असम्बन्धः समत्वात्स्यादिति। तत्कथमुच्यते तुल्यकक्ष्यतेति। एवं मन्यते। यदोत्प्रेक्षोपमादयोऽलङ्कारा विभावानुभावव्यभिचार्यादिनिर्भरेण परतया रसादेरङ्गतां प्रतिपद्यन्ते तदा भवत्येव तुल्यकक्ष्यतेति। यथा—

लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः। असत्पुरुषसेवेव दृष्टिर्निष्फलतां गता ॥

अत्र लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभ इति द्वे उत्प्रेक्षे। असत्पुरुषसेवेव दृष्टिर्निष्फलतां गतेत्युपमा च। वर्णनीयस्य तमस उद्दीपनविभावभूतस्य समतयैवोत्कर्षापादकत्वेनाङ्गभावमुपगता इति नास्ति लक्षणानुपपत्तिः। ननु च—

इववद्वायथाशब्दाः समाननिभसन्निभाः। तुल्यसङ्काशनीकाशप्रकाशप्रतिरूपकाः ॥

प्रतिपक्षप्रतिद्वन्द्विप्रत्यनीकविरोधिनः। सदृक्सदृशसंवादिसजातीयानुवादिनः ॥

प्रतिबिम्बप्रतिच्छन्दसरूपसमसम्मिताः। सलक्षणसदृक्षाभसपक्षोपमितोपमाः ॥

सलोहितसनाभिसपिण्डसब्रह्मचारिणौ। सवर्णतुलितौ शब्दौ प्रख्यप्रतिनिधी अपि ॥

कल्पदेशीयदेश्याद्या ये च न्यूनार्थवाचिनः। समासश्च बहुव्रीहिः शशाङ्कवदनादिषु ॥

स्पर्धते जयति द्वेष्टि द्रुह्यति प्रतिगर्जति। आक्रोशत्यवजानाति कदर्थयति निन्दति ॥

विडम्बयति संरुन्धे हसतीर्ष्यत्यसूयति। तस्य मुष्णाति सौभाग्यं तस्य कान्तिं विलुम्पति ॥

तेन सार्धं विगृह्णाति तुलां तेनाधिरोहति। तत्पदव्यां पदं धत्ते तस्य कक्ष्यां विगाहते॥
तमन्वेत्यनुबध्नाति तच्छीलं तन्निषेधति। तस्य चानुकरोतीति शब्दाः सादृश्यसूचकाः॥

तत्कथमुच्यते लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नम इति? द्वे उत्प्रेक्षे न तूपमे इति। इवो हि वाक्यान्तरे प्रयुज्यमानोपमानोपमेययोः सादृश्यावद्योतने निरूढशक्तिः स इहापि तदर्थ एव भवितुमर्हतीति। नैवम्। उपमानोपमेयशब्दप्रतिपन्नस्य सादृश्यस्यावद्योतनमिवेन क्रियते। न च लिम्पतीत्येवमादौ तमसो नमसो वा द्वितीयमुपमेयमुपमानं वास्ति। येन तयोः सादृश्यावद्योतनायेवः प्रयुज्यते। एवं तर्हि इवश्रुतिसामर्थ्यात्तमसो नमसश्च द्वितीयमुपमानद्वयमुपस्थापयिष्यते। यथा प्रविश पिण्डीमिति प्रवेशनक्रिया स्वयोग्यं कर्मोपस्थापयति। प्रविश गृहं पिण्डीकर्मापि स्वयोग्यां क्रियां पिण्डीं भक्षयेति। एवमिहापीवस्तमसि नमसि चोपमेयः उपमानमपरमुपस्थापयिष्यतीति। नहि तिङन्तेनोपमानमस्ति। का पुनरत्रोपपत्तिः? उच्यते सत्युपमेये सति चोपमाने तयोश्च तुल्ये धर्मे सत्युपमानोपमेयभावः, नासति। नचेह तमसो नमसो वा संबन्ध्युपमानमुपमेयं वास्ति, यदाश्रय उपमानोपमेयभावः प्रकल्प्यते।

ननु च इवश्रुतिरेव तमसो नमसश्च योग्यमुपमानमुपस्थापयिष्यति प्रविश पिण्डीन्यायेन। विषम उपन्यासः। प्रवेशनक्रिया स्वसिद्धये सर्वं कर्मकारकमाक्षिपति। तत्र प्रसिद्धितः प्रत्यासत्तेः गृहमेव गम्यते। न चैवमिवस्य किञ्चित्सामर्थ्यमस्ति, येन स्वार्थसिद्धये प्रसिद्धमुपमानं तमसो नमसो वा समुपस्थापयति। उपमानोपमेयभावमन्तरेणाप्यस्य प्रतियोगदर्शनात्। यथाकथमियैतद्भविष्यतीति। अस्तु तर्हि लिम्पति तमसो वर्षति नमसोश्चोपमानोपमेयभावो भवत्येव। किन्तु उपमानोपमेययोस्तुल्यधर्मो न दृश्यते। य उपमानोपमेयभावाय प्रभवति किमन्येन लेपनं लिम्पते वर्षणं वा वर्षते, धर्मिणोऽन्यः कश्चिद्धर्मो भवितुमीष्टे। ननु च यथा राहोः शिर इति भेदाभावेऽप्यवयवावयविभावः तन्निबन्धना च व्यतिरेकषष्ठी, एवं लिम्पतेर्लेपनं वर्षतेश्च वर्षणं धर्मो भविष्यतीति। नैवम्। इह द्वयं चकास्ति, धातुर्लिम्पतिर्वर्षतिश्च। तदर्थो लेपनं वर्षणं च। तयोर्यद्युपमेयस्य तमसो नमसो वा लिम्पतिर्वर्षतिर्वा धातुरुपमानं स्यात् तस्य तेन सादृश्यं किं स्यात्? अथ यथामी भावाः सर्वे सारूप्यं न दधति एवमसारूप्यमपि। न तदस्ति। अस्तित्वाभिधेयत्वज्ञेयत्वादिभिः सर्वत्र प्रवर्ततामुपमानोपमेयभाव इति न्यायात्तमसो लिम्पतिर्नमसो वर्षतिरुपमानं भवति। यद्येवं लिम्पतिरिव तमः वर्षतिरिव नम इति प्राप्नोति। न लिम्पतीव वर्षतीव चेति। ततो लेपनं वर्षणमेव चावशिष्यते। तत्किमस्तु तुल्यो धर्म उपमानधर्मो वा? यदि तुल्यो धर्मः मार्गणीय उपमानधर्मो, यद्युपमानधर्मो मार्गणीयस्तुल्यो धर्मः। अथ यथा राहोः शिर इति भेदाभावे भावोऽपि भविष्यति। नैवम्। उपमानोपमेयभावस्य भेदसादृश्यप्रतिपत्तिनिबन्धनत्वात्तदभावेऽपि यस्तं मन्येत सः कथं नोन्मत्तः स्यात्? तदुक्तम्—

॥ [illegible] स एव धर्मो धर्मी चेत्यनुन्मत्तो न भाषते॥

अस्तु तर्हि तिङ्वाच्यः कर्तोपमानमिति । न्यग्भूतोऽसौ क्रियापदे । कथं पुनरसौ क्रियापदे न्यग्भवति ? श्रूयताम् । षडर्थास्तिङन्तेन प्रतीयन्ते, क्रिया, कालः, उपग्रहः, साधनं, सङ्ख्या, पुरुष इति । तेषु क्रियाकालात्मनेपदनिमित्तानि प्रकृतिरभिधत्ते । प्रत्ययः साधनं सङ्ख्यां पुरुषं च । एतेषां तु क्रियार्थत्वात् क्रियाप्रधानं कालात्मनेपदनिमित्ते क्रियाविशेषणत्वेन तयोरेव न्यग्भवतः । साधनं पुनः प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूत इति न्यायात्प्रधानभूतमपि भूतं भव्यायोपदिश्यत इति न्यायेन क्रियासिद्धावुपात्तव्यापार परार्थतया क्रियायां न्यग्भवति । तेनायं कर्ता स्वक्रियासिद्धावाकुलः कथमुपमानत्वेनोपमेयत्वेन वान्यदपेक्षितुं क्षमते ? एवं तर्हि योऽङ्गानि लिम्पति योऽञ्जनं वर्षतीति तेन क्रियोपलक्षितेन कर्त्रा तुल्यं तमो नभश्चेत्यर्थः प्रतिपत्स्यते । नैषम् । क्रियोपलक्षितस्य कर्तुरुपमानभूतस्य शब्दन्यायबलात् प्रतीतेः । तदुक्तम्–

नहि प्रतीतिः सुभगा शब्दन्यायविलङ्घिनी । इति ।

अथाध्याहारादिभिरिदमपि स्यात् । तथापि तुल्यधर्मो मार्गणीयः । तद्वदेव प्रतिपत्तेः । न च चन्द्रमुखादिवदनभिधीयमानस्यापि तुल्यगुणस्य संप्रत्ययो भविष्यतीति वाच्यम् ।

यथेन्दुरिव ते वक्त्रमिति कान्तिः प्रतीयते । न तथालेपवर्षाभ्यामन्यदत्र प्रतीयते ॥
तदुपश्लेषणार्थोऽयं लिम्पतिर्ध्वान्तकर्तृकः । अङ्गकर्मा च पुंसैवमुत्प्रेक्ष्यत इतीष्यताम् ॥
एवमञ्जनकर्मापि वर्षतिर्व्योमकर्तृकः । क्षरणार्थश्च विद्वद्भिरुत्प्रेक्ष्यत इतीष्यताम् ॥
मन्ये शङ्के ध्रुवं प्रायो नूनमित्येवमादिभिः । उत्प्रेक्षा व्यज्यते शब्दैरिवशब्दोऽपि तादृशः ॥

अतः स्थितमेतत् । उत्प्रेक्षाद्वयस्योपमायाश्च तमोवर्णनपरतया तुल्यकक्ष्यत्वेनैषां संसृष्टिरिति । सा च नानालङ्कारसङ्कर इत्युक्तम् । तत्रालङ्कारसङ्करः संसृष्टिरित्येव वक्तव्ये नानाग्रहणं गुणरसादीनामप्यलङ्कारताप्रतिपत्त्यर्थम् । तेषामपि काव्यशोभाकरत्वेनालङ्कारत्वात् । यदाह—

काव्यशोभाकरान्धर्मानलङ्कारान्प्रचक्षते । ते चाद्यापि विकल्प्यन्ते कस्तान्कार्त्स्न्येन वक्ष्यति ॥

अपि च—

काश्चिन्मार्गविभागार्थमुक्ताः प्रागप्यलंक्रियाः । साधारणमलङ्कारजातमद्य प्रदर्श्यते ॥

तत्र काव्यशोभाकरानित्यनेन श्लेषोपमादिवद्गुणरसभावतदाभासतत्प्रशमानुपसंगृह्णाति । मार्गविभागकृद्गुणानामलंक्रियापदेशेन श्लेषादीनां गुणत्वमिवालङ्कारत्वमपि बोधयति । किञ्च—

श्लेषः प्रसादः समता माधुर्यं सुकुमारता । अर्थव्यक्तिरुदारत्वमोजःकान्तिसमाधयः ॥
इति वैदर्भमार्गस्य प्राणा दश गुणा स्मृताः । तेषां विपर्ययः प्रायो लक्ष्यते गौडवर्त्मनि ॥

इति । श्लेषादीनां दशानामेव मार्गप्रविभागकारितां ब्रुवता काव्यशोभाकरत्वेन गुणान्तराणामप्यलङ्कारत्वमुक्तं भवति । तदाह— कस्तान्कार्त्स्न्येन वक्ष्यतीति । युक्तमिदम् । अयुक्तं तु रसादीना·

मलङ्कारतेति तेषां गुणानामिवालङ्कारव्यपदेशाभावात्। नायुक्तं युक्तोत्कर्षाणां ऊर्जस्विरसवत्प्रेयसामलङ्कारेषूपदेशात्। तद्यथा—

प्रेयः प्रियतराख्यानं रसवद्रसपेशलम्। ऊर्जस्वि रूढालङ्कारं युक्तोत्कर्षं च तत्त्रयम्॥

तत्र ऊर्जस्वि रूढालङ्कारमित्यनेनात्मविशेषनिष्ठस्योत्कृष्टादृष्टजन्मनोऽनेकजन्मानुभवसंस्कारासादितद्रढिम्नः समग्रात्मगुणसम्पदुदयातिशयहेतोरलङ्कारविशेषस्योपसंग्रहादलङ्काराभिमानशृङ्गारापरनाम्नो रसस्य मानमयविकाररूपेणाभिमानिनां मनसि जाग्रतः पूर्वां कोटिमुपवर्णयति। यदाह—

सत्त्वात्मनाममलधर्मविशेषजन्मा जन्मान्तरानुभवनिर्मितवासनोत्थः।
सर्वात्मसम्पदुदयातिशयैकहेतुर्जागर्ति कोऽपि हृदि मानमयो विकारः॥

अहो अहो नमो मह्यं यदहं वीक्षितोऽनया। मुग्धया त्रस्तसारङ्गतरलायतनेत्रया॥

तथा च—

तिष्ठन्त्या जनसंकुलेऽपि सुदृशा सायं गृहप्राङ्गणे
तत्कालं मयि निस्सहाकुलतनौ बाहौ मृदु प्रेंखति।
ह्रीनम्राननयैव लोलसरलं निःश्वस्य तत्रान्तरे
प्रेमार्द्राः शशिखण्डपाण्डिममुषो मुक्ताः कटाक्षच्छटाः॥

रसवद्रसपेशलमित्यनेन विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिरिति रत्यादिरूपेणानेकधाविर्भवतोऽभिवर्धमानस्य परप्रकर्षगामिनः शृङ्गारस्य मध्यमामवस्थामवस्थापयति। यदाह—

रत्यादयोऽर्धशतमेकविवर्जिता हि भावाः पृथग्विविधभावभुवो भवन्ति।
शृङ्गारतत्त्वमिह ते परिवारयन्तः सप्तार्चिषं द्युतिचया इव वर्धयन्ति॥

तद्यथा—

अत्रान्तरे किमपि वाग्विभवातिवृत्तवैचित्र्यमुल्लसितविभ्रममुत्पलाक्ष्याः।
तद्भूरिसात्त्विकविकारमपास्तधैर्यमाचार्यकं विजयि मान्मथमाविरासीत्॥

यथा च— राहोश्चन्द्रकलामिवाननचरीमित्यादि। प्रेयः प्रियतराख्यानमित्यनेन च समस्तभावमूर्धाभिषिक्ताया रतेः परप्रकर्षाधिगमाद्भावनापथातिक्रमे भावरूपतामुल्लङ्घ्य प्रेमरूपेण परिणतायाः, उपादानाद्भावान्तराणामपि परप्रकर्षाधिगमे रसरूपेण परिणतिरिति शृङ्गारस्योत्तमां कोटिमुपलक्षयति। यदाह—

आभावनोदयमनन्यधिया जनेन यो भाव्यते मनसि भावनया स भावः।
यो भावनापथमतीत्य विवर्तमानः साहंकृतौ हृदि परं स्वदते रसोऽसौ॥

तद्यथा—

यदेव रोचते मह्यं तदेव कुरुते प्रिया । इति वेत्ति न जानाति तत्प्रियं यत्करोति सा ॥

यथा च—

अद्वैतं सुखदुःखयोरनुगुणं सर्वास्ववस्थासु यद्विश्रामो हृदयस्य यत्र जरसा यस्मिन्नहार्यो रसः ।
कालेनावरणात्ययात्परिणते यत्स्नेहसारे स्थितं भद्रं तस्य सुमानुषस्य कथमप्येकं हितं प्राप्यते ॥

युक्तोत्कर्षं च तत्त्रयमित्यनेनायुक्तोत्कर्षाणां त्रयाणामप्यूर्जस्विरसवत्प्रेयसां गुणत्वमेव नालङ्कारत्वमिति ज्ञापयति । तथा ह्योर्जित्यं भाविकत्वं प्रेय इति पदैस्त्रयोऽप्येते गुणेषूपदिष्टाः । कुतः पुनरेतत् यदेकदोर्जस्विरसवत्प्रेयसामलङ्कारत्व मन्यदा गुणत्वम् । उच्यते—

भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायिने । संसर्गेऽस्तिविवक्षायां भवन्ति मतुबादयः ॥

इति । यथा— गोमान्देशः, वाचालो वटुः, वाग्मी विपश्चित्, क्षीरिणो वृक्षाः, बलवान्मल्लः, दण्डिमती शालेति । तत्रोर्जस्विरसवतोरलङ्कारत्वविवक्षायामातिशायने भूम्नि वा मत्वर्थीयः । गुणत्वविवक्षायां तु प्रशंसानित्ययोरित्यपि द्रष्टव्यम् । नित्यो हि काव्ये गुणयोग इव रसावियोगः । गुणवतो रसवतश्च निश्चितैवास्य प्रशंसा, संसर्गे तु गुणानामवश्योपादानेन निन्दा पुनर्दोषहानेन बाधिता नावतरति प्रेय इत्ययं त्वातिशायिकः । तदाह प्रेयःप्रियतराख्यानमिति ।

नन्वलङ्कारेषु गुणेषु वा प्रेय इति रूपाभेदात्कथमलङ्कारत्वे तदुत्कर्षप्रतीतिर्यथा युधिष्ठिरः श्रेष्ठतमः कुरूणामिति । तत्रातिशायनिकान्तरेण तद्वृत्तिरिति चेदिहापि युक्तोत्कर्षं च तत्त्रयमिति वाक्यान्तरेण भविष्यति । न चातिशायनिकाः स्वार्थातिरिक्तं किमपि ब्रुवते, अपि तु प्रकृत्युपात्त-मेव प्रकर्षादिकं गमयन्ति । स्वार्थिकेषु तेषां विधानात् ।

अथ रसवदिति किं मत्वर्थीयः उत वतिः ? किञ्चातः ? यदि मत्वर्थीयः मत्वर्थानुपपत्ते-स्तदभावः । रसा हि सुखदुःखावस्थारूपाः । ते च शरीरिणां चैतन्यवतां न काव्यस्य तस्य शब्दार्थरूपतया अचेतनत्वेन भूमनिन्दादीनामभावात् । अथ वतिः वत्यर्थानुपपत्तेस्तदभावात् तेन तुल्यं क्रिया चेद्वतिः । तत्र तस्येव । न च रसैस्तुल्यं वर्तत इति रसवत् । नापि रस इवात्र रसस्येवास्य किञ्चिदस्तीति यथेच्छसि तथास्तु । अस्तु तावन्मत्वर्थीयः । ननु चोक्तं मत्वर्था-भावात्तदनुपपत्तिः । रसवतो रामादेर्यद्वचनं तद्रसमूलत्वाद्रसवत् अभेदसामर्थ्यारोपाच्च कविना अनुक्रियमाणस्य तस्यानुकरणमपि रसवत् ।

अथवा पुनरस्तु वतिः । ननु चोक्तं वत्यर्थानुपपत्तेर्न वतिः भवतीति । अत्रापि नानुपपत्तिः । तदर्हमिति वचनाद्वातिर्भविष्यति । रसान्प्रतिपादयितुं यदर्हति तद्रसवत् । अर्हति च रसवद्रामा-दिवचनमनुक्रियमाणमभेदसमध्यारोपाद्रसान्प्रतिपादयितुमिति रसवद्भवति ।

ननु च सर्वेषामप्युपादेयानां काव्यशोभाकरत्वादलङ्कारत्वे व्यवच्छेद्याभावात्सङ्करः संसृष्टिरित्येतावदेव वाच्यं भवतु । नैवमेवं सति विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिरिति विभावादिसङ्करस्यापि संसृष्टित्वं प्राप्नोति । तदलङ्कारग्रहणेन निवर्त्यते । न हि विभावादयोऽलङ्काराः, अपि तु भावरसतदाभासानामलङ्काराणामभिनिष्पत्तिहेतवोऽर्थविशेषाः ।

नन्वेवमप्यर्थगुणत्वादमीषामप्यलङ्कारत्वं प्राप्नोति । सत्यमेतत् । किन्त्वन्यपरतया त उपादीयमानास्तत्रैव न्यग्भवन्ति । न ह्यनवयववाक्यार्थप्रतीतौ पदार्थाः पृथक्स्फुरन्तीति । तत्र भावानामलंकारैर्गुणैर्भावैश्च संकरो भवति । न रसतदाभासैस्तेषां तदङ्गत्वात् । रसानामलंकारैः गुणै रसाभासैश्च संकरो भवति । न भावरसाभासैर्भावानां रसाङ्गत्वादाभासानां तु रसविरोधात् आभासानामलंकारैर्गुणैराभासैश्च संकरो भवति । न रसभावैर्विरोधिभावाङ्गभावाभ्यामेवेति ।

ननु चाङ्गाङ्गिनोः संकरव्यवहाराभावे कथमुक्तं –

अङ्गाङ्गिभावावस्थानं सर्वेषां समकक्ष्यता । इत्यलङ्कारसंसृष्टेर्लक्षणीया द्वयी गतिः ॥

इति ? उदाहृतं च, आक्षिपन्त्यरविन्दानीत्यादि । उच्यते, यत्र पृथक्सिद्धयोरशक्तिर्बलादुपकार्योपकारकत्वादिनाङ्गाङ्गिभावोऽवस्थाप्यते तत्रैव संसृष्टिः । यत्र पुनरपृथक्सिद्धयोरेवालंकारयोर्भावरसयोर्वारम्भकत्वेनारभ्यत्वेन चावस्थितयोः स्वाभाविक उपश्लेषः तत्र संकरव्यवहारो न प्रवर्तते । यथा अनन्तर एवोदाहरणे हेत्वर्थान्तरन्यासयोः अर्थान्तरन्यासो हि हेतुनैवारभ्यते । यदाह–

ज्ञेयः सोऽर्थान्तरन्यासो वस्तु प्रस्तुत्य किञ्चन । तत्साधनसमर्थस्य न्यासो योऽन्यस्य वस्तुनः ॥

इति । तत्रार्थान्तरन्यास इति लक्ष्यनिर्देशः । वस्तु प्रस्तुत्यान्यो न्यासोऽन्यवस्तुनः एतावत्युच्यमाने घटोऽस्तीत्यत्रापि प्रसङ्गः तदर्थमाह तत्साधनसमर्थस्येति । न चैतद्वाच्यं धूमोऽयमग्निरित्यत्राप्यर्थान्तरन्यासः प्रसजेत् । यद्यपि धूमस्योत्पाद्यस्य साधनसमर्थोऽग्निस्तथापि काव्यशोभाकरान्धर्मानलंकारान्प्रचक्षत इत्येतदपि सर्वालंकारसाधारणं लक्षणमनुवर्तितव्यम् । अस्मिंश्च सति सर्वालङ्कारजातयो वक्रोक्त्यभिधानवाच्या भवन्ति । तदुक्तम्—

वक्रत्वमेव काव्यानां परा भूषेति भामहः । श्लेषः पुष्णाति सर्वासु प्रायो वक्रोक्तिषु श्रियम् ॥

नन्वेवं सति विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिरित्यादिना न भवितव्यमेवालङ्कारेण । नैवम् । त्रिविधः खल्वलङ्कारवर्गः– वक्रोक्तिः, स्वभावोक्तिः, रसोक्तिरिति । तत्रोपमाद्यलङ्कारप्राधान्ये वक्रोक्तिः, श्लेषादिगुणप्राधान्ये स्वभावोक्तिः, विभावानुभावव्यभिचारसंयोगात्तु रसनिष्पत्तौ रसोक्तिरिति । तत्र द्विविधो विभावः, आलम्बनविभाव उद्दीपनविभावश्च । तयोरालम्बनविभाव इष्टानिष्टसंदर्शनादिः । यमालम्ब्य सुखं दुःखं चोत्पद्यते तेन सुखदुःखविषयेणानुभावेन स्मरणहेतुः संस्कारो जन्यते । संस्कारप्रबोधहेतवः पुनरुद्दीपनविभावा ऋतुमाल्य·

विलेपनादयः । तैः प्रतिबुद्धसंस्कारस्य स्मरणेच्छाद्वेषप्रयत्नाः तेभ्यो मनोवाग्बुद्धिशरीरारम्भाः तेऽनुभूयमानत्वादनुभावाः तैरयमभिप्रवर्धमान ईप्सितमर्थमासादयन् जिहासितं जिहानः सुखात्मकैर्व्यभिचारिभिर्हर्षधृतिस्मृतिमतिप्रभृतिभिः संसृज्यमानः समासादितोत्तरोत्तरस्त्यादिस्थायिभावः शृङ्गारप्रभव एव संभोगशृङ्गारादिरसरूपतामधिगच्छति । स एव त्वीप्सितानवाप्तौ जिहासितस्य चाहानात् दुःखात्मकैर्व्यभिचारिभिश्चिन्तौत्सुक्यवेगनिर्वेदादिभिः संसृज्यमानो दुःखात्मकविप्रलम्भशृङ्गारादि रसरूपतामध्यास्ते । तत्र रतेः शृङ्गारनिष्पत्तिर्यथा–

मृतेति प्रेत्य सङ्गन्तुं यया मे मरणं मतम्। सैषावन्ती मया लब्धा कथमत्रैव जन्मनि ॥

अत्रावन्त्या वासवदत्ताया आलम्बनविभावभूतायाः सकाशादुत्पन्ने वत्सेश्वरस्य रतौ स्थायिभावे तस्याः पुनर्जीवनादिभिरुद्दीपनविभावैरुद्दीप्यमाने समुत्पन्नेषु हर्षधृतिस्मृतिवितर्कप्रभृतिषु सुखात्मकेषु व्यभिचारिषु संभोगशृङ्गारतां प्राप्ते स्थायिनि यदेतदनुभावरूपमृत्योरिव विवरणवचनं वत्सेश्वरस्य तच्छृङ्गाररसादुपजायमानं रसवदुच्यते । हास्याद्धास्यनिष्पत्तिर्यथा–

इदमम्लानमानाया लग्नं स्तनतटे तव। छाद्यतामुत्तरीयेण नवं नखपदं सखि ॥

अत्र कांचित्सखीं पूर्वं भर्तरि परिगृहीतमानां तेनैव नवनखपदाङ्कितस्तनीमालम्बनविभावभूतामुपालभमानायाः कस्याश्चित्सख्या उत्पन्ने हासस्थायिभावे तदीयमानपरिग्रहस्मरणादिभिरुद्दीपनविभावैरुद्दीप्यमाने समुत्पन्नेषु शङ्कावहित्थहर्षगद्गदादिषु व्यभिचारिषु परप्रकर्षाधिगमाद्धास्यरसतामापन्ने स्थायिनि यदेतदम्लानमानादिवचनं तद्धास्यरससमुद्भूतं रसवदुच्यते । उत्साहाद्वीरनिष्पत्तिर्यथा–

अजित्वा सार्णवामुर्वीमनिष्ट्वा विविधैर्मखैः। अदत्वा चार्थमर्थिभ्यो भवेयं पार्थिवः कथम् ॥

अत्र वसुधाविजयादेरालम्बनविभावादुत्पन्ने स्थायिन्युत्साहभावे तेजःस्थैर्यधैर्यादिभिरुद्दीपनविभावैरुद्दीप्यमाने समुत्पन्नेषु स्मृतिमतिवितर्कप्रभृतिषु व्यभिचारिषु परप्रकर्षाधिगमाद्वीररसतामापन्ने स्थायिनि वीररसात्मनः पुंसो यदेतदजित्वेत्यादिवचनं तद्वीररसादुपजायमानं रसवदुच्यते । विस्मयादद्भुतनिष्पत्तिर्यथा—

अंशुकानि प्रवालानि पुष्पं हारादिभूषणम्। फलं मधूनि हर्म्याणि शाखा नन्दनशाखिनाम् ॥

अत्र शाखिनां प्रवालपुष्पफलशाखासम्पत्तिर्निजरूपं नन्दनशाखिनां पुनः प्रवालादिस्थानेष्वंशुकहारमणिमन्दिराणि तदेतदाश्चर्यमेतेषामतश्चैतेभ्य आलम्बनविभावेभ्यः कस्यचिद्देवभूमिगतस्योत्पन्ने विस्मयस्थायिभावे तदीयावयवदर्शनादिभिरुद्दीपनविभावैरुद्दीप्यमाने समुत्पन्नेषु हर्षरोमोद्गमस्वेदगद्गदादिषु व्यभिचारिषु परप्रकर्षाधिगमादद्भुतरसत्वमापन्ने स्थायिनि यदेतदंशुकानि प्रवालानीत्यादिवचनं तदद्भुतरसादुपजायमानं रसवदुच्यते । क्रोधाद्रौद्रनिष्पत्तिर्यथा—

निगृह्य केशेष्वाकृष्टा कृष्णा येन ममाग्रतः ।
सोऽयं दुश्शासनः पापो लब्धः किं जीवति क्षणम् ॥

अत्र दुःशासनालम्बनविभावात् क्रुध्यतो भीमसेनस्य पूर्वमुत्पन्ने क्रोधस्थायिभावे तदवाप्ते स्मर्यमाणसमक्षकृतद्रौपदीकेशकर्षणादिभिरुद्दीपनविभावैरुद्दीप्यमाने असूयावेगवेपथुश्रमादिषु दुःखात्मकेषु व्यभिचारिषु परं प्रकर्षमधिरूढे रौद्ररसतामापन्ने स्थायिनि यदेतत् भीमसेनस्य निगृह्येत्यादिवचस्तद्रौद्ररसादुपजायमानं रसवदुच्यते । भयाद्भयानकनिष्पत्तिर्यथा—

इदं मघोनः कुलिशं धारासन्निहितानलम् । स्मरणं यस्य दैत्यस्त्रीगर्भपाताय कल्पते ॥

अत्र महेन्द्रकुलिशाद्धारासन्निहितानलादालम्बनविभावात्स्मर्यमाणादपि दैत्यस्त्रीणामुत्पन्ने भयस्थायिभावे तद्विदीर्णदानवमरणस्मरणादिभिरुद्दीपनविभावैरुद्दीप्यमाने समुत्पन्नेषु स्वेदस्तम्भवैवर्ण्यवेपथुप्रभृतिषु व्यभिचारिषु स्थायिनो भयानकरसतामापन्नस्य गर्भपातादिभिरनुभावैर्विभाव्यमानस्य स्वरूपसूचकं यदेतदिदं मघोनः कुलिशमित्यादिवचनं तदपि तन्मूलत्वाद्रसवदुच्यते । शोकात्करुणनिष्पत्तिर्यथा—

यस्याः कुसुमशय्यापि कोमलाङ्ग्या रुजाकरी । साधिशेते कथं देवी हुताशनवतीं चिताम् ॥

अत्र चालम्बनविभावभूतात् देवीमरणादुत्पन्ने शोकस्थायिभावे चितानिवेशनहुताशनज्वलनादिभिरुद्दीपनविभावैरुद्दीप्यमाने समुत्पन्नेषु निर्वेदग्लानिचिन्तास्तम्भादिषु व्यभिचारिषु परप्रकर्षात् करुणरसतामापन्ने स्थायिनि करुणारसवतो नायकस्य यदेतत् यस्याः कुसुमशय्यापीत्यादिवचनं तत्करुणरसादुपजायमानमनुभावरूपं रसवदुच्यते । जुगुप्साया बीभत्सनिष्पत्तिर्यथा—

पायं पायं तवारीणां शोणितं पाणिसम्पुटैः । कौणपास्सह नृत्यन्ति कबन्धैरान्त्रभूषणाः ॥

अत्रालम्बनविभावभूतेभ्यः कौणपेभ्यः कस्यचिद्राज्ञो विजयशंसिनः पुंस उत्पन्ने जुगुप्सास्थायिभावे निशितशिरच्छेदविगलद्रुधिरधारापरिप्लुतप्रनर्तितकबन्धान्त्रभूषणशोणितपानादिभिरुद्दीपनविभावैरुद्दीप्यमाने समुत्पन्नेषु भयावेगशङ्कावहित्थादिषु व्यभिचारिषु परां कोटिमधिरूढे बीभत्सरसतामापन्ने स्थायिनि यदेतत्पायंपायमित्यादिवचनं तद्बीभत्सरसादुपजायमानं रसवदुच्यते । एवमेते अष्टावेव रत्यादयो भूमानमापन्नाः शृङ्गारवीरादिव्यपदेशं लभन्ते । यथा चैते भावेभ्यो रसाः रसेभ्यो भावाः तथा रसेभ्यश्च रसा भवन्तीति भरताचार्यः । तत्र शृङ्गाराद्धास्यरसनिष्पत्तिर्यथा—

स एष भुवनत्रयप्रथितसंयमश्शङ्करो बिभर्ति वपुषाधुना विरहकातरः कामिनीम् ।
अनेन किल निर्जिता वयमिति प्रियायाः करं करेण परिघट्टयन् जयति जातहासः स्मरः ॥

वीरादद्भुतनिष्पत्तिर्यथा—

सम्प्रत्येव हि गोग्रहे यदभवत्तत्तावदाकर्ण्यता-
मेतच्चे हृदयं स्पृशामि यदि वा साक्षी तवैवात्मजः ।

एभिः पूर्वमुदायुधैरसुबहुभिर्दृष्टस्ततोऽनन्तरं
यावन्तो वयमाहवव्यसनिनस्तावन्त एवार्जुनाः ॥

रौद्रात्करुणनिष्पत्तिर्यथा—

सत्त्वभ्रंशविषादिभिः कथमपि त्रस्तैः क्षणं वेत्रिभि-
र्दृष्टो दृष्टिनिपातजिह्मितमुखैरव्याहतः प्रक्रमः ।
रामान्वेषणतत्परः परिजनैरुन्मुक्तहाहारवं
कन्यान्तःपुरमेव हा प्रविशति क्रुद्धो मुनिर्भार्गवः ॥

बीभत्सादद्भुतभयानकनिष्पत्तिर्यथा—

आन्त्रप्रोतबृहत्कपालनलकक्रूरक्वणत्कङ्कणप्रायप्रेङ्खितभूरिभूषणरवैराघोषयन्त्यम्बरम् ।
पीतच्छर्दितरक्तकर्दमघनप्राग्भारघोरोल्लसद्व्यालोलस्तनभारभैरववपुर्दर्पोद्धतं धावति ॥

एतच्चायुक्तं यतोऽमी रत्यादयः परं प्रकर्षमारूढा भावा एव न रसाः । तथात्वे हर्षादीनामपि रसत्वप्रसङ्गात् । तदाह–

रत्यादयो यदि रसाः स्फुरति प्रकर्षे हर्षादिभिः किमपराद्धमतद्भिभिन्नैः ।
न स्थायिनस्त इति चेद्भयहासशोकक्रोधादयो वद कियच्चिरमुल्लसन्ति ॥

ते चाष्टावेवेति नियमः यतः शान्तं प्रेयांसमुद्धतमूर्जस्विनं च केचिद्रसमाचक्षते । तन्मूलाश्च किल नायकानां धीरप्रशान्तधीरललितधीरोद्धतधीरोदात्तव्यपदेशाः । तेषु धीरप्रशान्ताश्रयः शान्तो यथा—

सर्वास्सम्पत्तयस्तस्य सन्तुष्टं यस्य मानसम् । उपानद्गूढपादस्य ननु चर्मावृतैव भूः ॥

धीरललिताश्रयः प्रेयान् यथा—

यदेव रोचते मह्यं तदेव कुरुते प्रिया । इति वेत्ति न जानाति तत्प्रियं यत्करोति सा ॥

धीरोद्धताश्रय उद्धतो यथा—

धृतायुधो यावदहं तावदन्यैः किमायुधैः । यद्वा न सिद्धमस्त्रेण मम तत्केन सेत्स्यति ॥

धीरोदात्ताश्रय ऊर्जस्वी यथा–

अपकर्ताहमस्मीति मा ते मनसि भूद्भयम् । विमुखेषु न मे खड्गः प्रहर्तुमभिवाञ्छति ॥

अत्र च शमप्रकृतिः शान्तः, स्नेहप्रकृतिः प्रेयान्, गर्वप्रकृतिरुद्धतः, अहङ्कारप्रकृतिः पुनरूर्जस्वीति शृङ्गारादिवदेतेष्वपि विभावानुभावव्यभिचारिसंयोगो द्रष्टव्यः ।

अन्ये त्वाहुः । सर्व एव रत्यादयो विभावानुभावव्यभिचारिसंयोगादुत्पद्य भूमानमापन्ना रसीभवन्ति । तथा हि रसनाद्रसत्वमेषां मधुरादीनामिवोक्तमाचार्यैः । निर्वेदादिष्वपि तत्प्रकाममस्तीति । तेऽपि रसाः सर्वेषां च तुल्ये रसत्वे रत्यादीनामेव परप्रकर्षगामिनां शृङ्गारवीरादिव्यपदेश इति न घटते । तथात्वे वा नाममात्रं भिद्यते । तदुक्तम्—

वीराद्भुतादिषु च येह रसप्रसिद्धिः सिद्धा कुतोऽपि वटयक्षवदाविभाति ।
लोके गतानुगतिकत्ववशादुपेता मेतां निवर्तयितुमेष परिश्रमो नः ॥

यदि च रत्यादयः प्रकर्षगामिनो भावा एव रसाः कथमुच्यन्ते ? भावेभ्यो रसा इति रसेभ्यो भावा इत्ययुक्तम् । नहि बहवो रसाः ; अपि त्वेक एव शृङ्गारो रस इत्यग्रतोऽपि प्रबन्धेन प्रतिपादयिष्यते ।

यथोक्तं रसेभ्यश्च रसा इति तत्र यथालम्बनविभावभूतेभ्य इति मतं तदा,

शृङ्गारात्तु भवेद्धास्यो रौद्रात्तु करुणो रसः । वीराच्चैवाद्भुतो नाम बीभत्सात्तु भयानकः ॥

इति नियमो न घटते । यतः शृङ्गारादन्यतोऽपि हास्य उत्पद्यमानो दृश्यते । यथा—

हस्तालम्बितमक्षसूत्रवलयं कर्णावतंसीकृतं स्रस्तं भ्रूयुगमुन्नमय्य रचितं यज्ञोपवीतेन च ।
सन्नद्धा जघने च वल्कलपटी पाणिश्च धत्ते धनुर्दृष्टं भो जनकस्य योगिन इदं
शान्तं विरक्तं मनः ॥

शृङ्गारादपि न दृश्यते । यथा—

चिन्ताणिअदइअसमागमम्मि कअमण्णुआइं भरिऊण ।
सुण्णं कलहाअन्ती सहीहि रुण्णा ण ओ हसिआ ॥
[ चिन्तानीतदयितसमागमे कृतमन्युकानि स्मृत्वा ।
शून्यं कलहायमाना सखीभी रुदिता न वा हसिता ॥ ]

रौद्रादन्यतोऽपि करुणो दृश्यते । यथा—

आर्द्रं नागाजिनमवयवग्रन्थिमद्भिभ्रदंसे रूपं प्रावृड्घनरुचि महाभैरवं दर्शयित्वा ।
पश्यन् गौरीं भयचकितकरालम्बितस्कन्दहस्तां मन्ये प्रीत्या द्रुत इव भगवान्
वज्रदेहोऽभिजातः ॥

रौद्रादपि न दृश्यते । यथा—

निरीक्ष्य संरम्भनिरस्तधैर्यं राधेयमाराधितजामदग्न्यम् ।
असंस्तुतेषु प्रसभं भयेषु जायेत मृत्योरपि पक्षपातः ॥

वीरादन्यतोऽप्यद्भुतो दृश्यते । वीरादपि न दृश्यते । यथा—

नैतच्चित्रं यदयमुदधिश्यामसीमां धरित्रीमेकः कृत्स्नां नगरपरिघप्रांशुबाहुर्भुनक्ति ।
आशंसन्ते सुरयुवतयः सक्तवैराहि दैत्यैरस्याधिज्ये धनुषि विजयं पौरुहूते च वज्रे ॥

बीभत्सादन्यतोऽपि भयानको दृश्यते । यथा—

यस्मिन्ननैश्वर्यगतव्यलीकः पराभवं प्राप्त इवान्तकोऽपि ।
धुन्वन्धनुः कस्य रणे न कुर्यान्मनो भयैकप्रवणं स भीष्मः ॥

बीभत्सादपि न दृश्यते । यथा—

तत्क्रूरदन्तकरपत्रनिकृत्तसत्त्वसङ्घातनिस्सरदसृक्प्लुतकूर्चपुञ्जम् ।
वक्त्रं वपुश्च विकृताकृति दीर्घबाहोरार्येण राक्षसकुतूहलिना न दृष्टम् ॥

अथ प्रकृतिभूतेभ्य इति पक्षः । तत्रापि किं शृङ्गाराद्धास्यो जायते उत शृङ्गार एव हास्यो भवति ? किञ्चातः यदि शृङ्गाराद्धास्यो जायते तदिष्यत एव । नह्यशृङ्गारिणः कश्चिदपि प्रकर्षगामी अपकर्षगामी वा भावः संभवति । शृङ्गारी हि रमते उत्सहते हसति विस्मयते जुगुप्सते शोचति बिभेति शाम्यति क्रुध्यति गर्वायते अभिमन्यत इति ।

अथ रतिप्रकृतिरेव शृङ्गारो हास्यरसी भवति । तन्न घटते, शृङ्गारस्य हास्यव्यपदेशाभावात् । अथोच्यते—

शृङ्गारानुकृतिर्येह स हास्यो रस इष्यते ।

तर्हि, वीरस्यानुकृतिर्येह सोऽपि हास्य इतीष्यताम् ।

एतेन रौद्रात्तु करुणो रस इत्यपि प्रत्युक्तम् । नहि रौद्रात्करुणो जायते, नापि रौद्रः करुणो भवति । अथ रौद्रस्य यत्कर्म करुणरस निगद्यते । तथापि,

न रौद्रकर्म करुणः कारणं करुणस्य तत् । एतेन वीरकर्मापि न भवेदद्भुतो रसः ॥
हेतुत्वं तु तदुत्पत्तौ तस्यापि न निवार्यते । बीभत्सदर्शनाद्यःस्या त्स भवेत्तु भयानकः ॥
इत्यालम्बनहेतुभ्यो विभावेभ्यो न भिद्यते ॥

अतो यत्किञ्चिदेतद्भावेभ्यो रसा रसेभ्यो भावा रसेभ्यश्च रसा इति । किं पुनरिह न्याय्यम् । यथोपवर्णितं पुरस्तात् ।

अप्रातिकूलिकतया मनसो मुदादेर्यस्संविदोऽनुभवहेतुरिहाभिमानः ।
ज्ञेयो रसः स रसनीयतयात्मशक्तेः रत्यादिभूमनि पुनर्वितथा रसोक्तिः ॥

एतेन रूढाहङ्कारता रसस्य पूर्वा कोटिः । रत्यादीनामेकोनपञ्चाशतोऽपि विभावानुभावव्यभिचारिसंयोगात्परप्रकर्षाधिगमो रसव्यपदेशार्हता रसस्यैव मध्यमावस्था प्रेयः प्रियतराख्यानमित्युपलक्षणेन यथा रतेः प्रेमरूपेण परिणतिस्तथा भावान्तराणामपि परमपरिपाके प्रमाणरूपेण परिणतौ रसैकायनमिति रसस्य परमा काष्ठेति प्रतिष्ठितं भवति । तथा हि । यथोर्जस्विन्यपकर्ताहमिति यच्चे चेतसि भयं न मे खड्गः पराङ्मुखेषु कदाचिदपि प्रवर्तुमुत्सहत इति रूढोऽहङ्कारः प्रतीयते तथा सैषावन्तो मयात्रैव जन्मनि लब्धेति धिक्के वृथाप्रतिज्ञो मानपरिग्रह इति, उर्वीविजयाद्यहत्वा कथं पार्थियो भवेयमिति, न मयेदृशाः शासिनः क्वचिदपि दृष्टा इति, अनेन मे द्रौपदी केशेष्वाकृष्टेति, धन्यो मघवा यस्यैतदायुधमिति, सा मे देवी चितामध्यास्त इति, धिक् कौणपाः शोणितमात्मभूपणाः पिबन्तीति, अस्ति मे सन्तोषो मनस इति, यथेयं मे प्रिया तथाहमप्यस्या यतो मदनुकूलमेवैषा विचेष्टत इति, मयि धृतायुधे किमायुधान्तरैरिति सर्वत्रैवाहङ्कारः प्रतीयते । कथं पुनर्विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिः ? उच्यते, यथेन्दुसन्निधेश्चन्द्रकान्तः स्यन्दते, यथार्कसन्निधेस्सूर्यकान्तः ज्वलति, यथा कर्पूरसन्निधेः स्फटिको विलीयते तथा तेभ्यस्तेभ्य आलम्बनविभावेभ्यस्तदाकारपरिणतेन्द्रियबुद्ध्युपाधियोगिनोऽभिमानिमनसस्ते ते रतिक्रोधशोकादयो भावाः समुत्पद्यन्ते । ते रत्यादयो यथा—

आश्चर्यमुत्पलदृशो वदनामलेन्दुसान्निध्यतो मम मुहुर्जडिमानमेत्य ।
जात्येन चन्द्रमणिनेव महीधरस्य सन्धार्यते द्रवमयो मनसो विकारः ॥

क्रोधादयो यथा—

तेनाथ नाथ दुरुदाहरणातपेन सौम्यापि नाम परुपत्वमभिप्रपन्ना ।
जज्वाल तीक्ष्णविशदाः सहसोद्गिरन्ती वागर्चिषस्तपनकान्तशिलेव सीता ॥

शोकादयो यथा—

अथेदं रक्षोभिः कनकहरिणच्छद्मविधिना तथावृत्तं पापैर्व्यथयति यथा क्षालितमपि ।
जनस्थाने शून्ये विकलकरणैरार्यचरितैरपि ग्रावा रोदित्यपि दलति वज्रस्य हृदयम् ॥

अथ यथेन्दूदये समुद्रः क्षुभ्यति यथापथ्यसेवनया व्याधिरभिवर्धते यथानार्यसन्निधेरसाधुः सुतरां दुःखीकरोति तथा तेभ्यस्तेभ्य उद्दीपनविभावेभ्यस्तत्तदनुभवसंस्कारयोगिनो मनसस्तत्तद्भावाभिवृद्धये ते ते विकारा उपजायन्ते । ते तत्क्षोभे यथा—

विललाप सबाष्पगद्गदं सहजामप्यपहाय धीरताम् ।
अभितप्तमयोऽपि मार्दवं भजते कैव कथा शरीरिषु ॥

तदभिवृद्धौ यथा—

तमुदीक्ष्य रुरोद सा भृशं स्तनसंबाधमुरो जघान च ।
स्वजनस्य हि दुःख मग्रतो विवृतद्वारमिवोपजायते ॥

तत्प्रातिकूल्ये यथा—

इदमसुलभवस्तुप्रार्थनादुर्निवारं प्रथममपि मनो मे पञ्चबाणः क्षिणोति ।
किमुत मलयवातोन्मूलितापाण्डुपत्रैरुपवनसहकारैर्दर्शितेष्वंकुरेषु ॥

अथ यथैकस्यापि भूरुहादेः काण्डस्कन्धशाखाविटपादयः प्रकाराः पल्लवपत्रपुष्पफलसम्पदादयो विकारा एकस्याप्यम्भसः प्रवाहावर्तबुद्बुदतरङ्गादयो विवर्ता मुक्ताफलफेनलवणकरकादयो विपरिणामाः एकस्यापि ध्वनेस्तारमध्यमन्द्रकुष्टादयो भेदाः वर्णपदवाक्यकूजितादयो अवच्छेदाः एकस्यापि वायोः प्रवहावहपरिवहादयः स्कन्धाः प्राणापानव्यानादयोऽनुबन्धास्तेभ्यस्तेभ्य उपाधिभ्यो जायन्ते, तथैकस्यापि रतिक्रोधशोकादेस्तेभ्यस्तेभ्य उपाधिभ्यस्ते तेऽनुभावा व्यभिचारिणश्चाभ्यन्तरा बाह्याश्च व्यवस्थासम्भवाभ्यामुपप्लवन्ते । तत्राभ्यन्तरा व्यभिचारिषु चिन्तौत्सुक्यावेगवितर्कादयः बाह्याः स्वेदरोमाञ्चाश्रुवैवर्ण्यादयः अनुभावेष्वाभ्यन्तराः स्मरणेच्छाद्वेषप्रयत्नाः बाह्या मनोवाग्बुद्धिशरीरारम्भाः त उभयेऽप्यनुक्रियमाणाः सात्त्विकाङ्गिकवाचिकचित्रसामान्याभिनयव्यपदेशं लभन्ते । तेषु रतिप्रभवा यथा—

विवृण्वती शैलसुतापि भाव मङ्गैः स्फुरद्बालकदम्बकल्पैः ।
साचीकृता चारुतरेण तस्थौ मुखेन पर्यस्तविलोचनेन ॥

क्रोधप्रभवा यथा—

प्रत्यग्रारिकृताभिमन्युनिधनप्रोद्भूततीव्रक्रुधः
कीर्णा बाष्पकणैः पतत्रिधनुषि व्रीडाजडा दृष्टयः ।
पार्थस्याकृतशात्रवप्रतिकृतेरन्तःशुचा मुह्यतो
हा वत्सेति गिरः स्फुरन्ति न पुनर्निर्यान्ति कण्ठाद्बहिः ॥

शोकप्रभवा यथा—

मातर्मातर्दलति हृदयं ध्वंसते देहबन्धश्शून्यं मन्ये जगदविरतज्वालमन्तर्ज्वलामि ।
सीदन्नन्धेतमसि विधुरो मज्जतीवान्तरात्मा विष्वङ्मोहः स्थगयति कथं मन्दभाग्यः करोमि॥

अथ यथेक्षुभ्यो रसः सर्षपेभ्यस्तैलं धातुभ्यो हिरण्यं अश्मभ्यो लोहं दध्नो नवनीतं काष्ठेभ्योऽग्निस्तेभ्यस्तेभ्यो यन्त्राग्निमन्थसंयोगेभ्यो निष्पतति तथा स्वेभ्यः स्वेभ्यो विभावानुभाव-

व्यभिचारिसंयोगेभ्यो रतिक्रोधशोकादिभ्यस्ते ते रसा निष्पद्यन्ते । यथा—

राहोश्चन्द्रकलामिवाननचरीं दैवात्समासाद्य मे
दस्योरस्य कृपाणपातविषयादाच्छिन्दतः प्रेयसीम् ।
आतङ्काद्विकलं द्रुतं करुणया विक्षोभितं विस्मया-
त्क्रोधेन ज्वलितं मुदा विकसितं चेतः कथं वर्तते ॥

अथ यथा लवणरसादयः स्वसंयोगिनो मृद्वीकादीनप्यात्मरूपतां नयन्त उपचीयन्ते तथा रत्यादिजन्मानो रसाः रत्यादीनिव विभावादीनप्यात्मरूपतां नयन्त उपचीयन्ते । यथा—

करसभरिसित्तिभणिए को मे अत्थित्ति जप्पमाणाए ।
अप्पेवरोइरीए अम्हेविरू आपि आतीए ॥

अथ यथा सर्पिर्जतुमधूच्छिष्टादीनां पार्थिवानां घनतुहिनकरकादीनामाप्यानां त्रपुसीसरजतादीनां तैजसानां मन्निसंयोगाद् द्रवतामद्भिस्सामान्यं भवति तथा विभावानुभावव्यभिचारिणां रससंयोगाद्रक्तता रसेनैव सामान्यं भवति । यथा—

विलपन्निति कोसलाधिपः करुणार्थग्रथितं प्रियां प्रति ।
अकरोत्पृथिवीरुहानपि स्रुतशाखारसबाष्पदुर्दिनात् ॥

अथ यथेक्षुरसेभ्यो मधुनिष्पत्तिर्यथा मधुरादिभ्यः षाडवोत्पत्तिर्यथा गुडादिभ्य आसवोत्पत्तिस्तथा तेभ्यस्तेभ्यो रससामान्येभ्यः रसविशेषाभिनिर्वृत्तिः भवति । यथा—

यातो विक्रमबाहुरात्मसमतां प्राप्तेयमुर्वीतले सारं सागरिका ससागरमहीप्राप्त्येकहेतुः प्रिया।
देवी प्रीतिमुपागता च भगिनीलाभाज्जिताः कोसलाः किं नास्ति त्वयि सत्यमात्य-
वृषभे यस्मिन् करोति स्पृहाम् ॥

अथ यथैकस्याप्यग्नेर्भौमदिव्यौदर्यादयो जातिभेदाः दाहालोकपाकादयोऽर्थक्रियाः धूमार्चिरङ्गारादयोऽवस्थाः संदृश्यन्ते तथैकस्यापि रसस्य भावरसतदाभासादयो जातिभेदा उत्कण्ठाभिषङ्गनिर्धूरयादयोऽर्थक्रिया उत्पादाभिवृद्धिस्थैर्यादयोऽवस्थास्समुपलभ्यन्ते । तत्र भावो यथा—

हरस्तु किंचित्परिवृत्तधैर्यश्चन्द्रोदयारम्भ इवाम्बुराशिः ।
उमामुखे बिम्बफलाधरोष्ठे व्यापारयामास विलोचनानि ॥

रसो यथा—

तं वीक्ष्य वेपथुमती सरसाङ्गयष्टिर्विक्षेप एव पदमुद्धृतमर्पयन्ती ।
मार्गाचलव्यतिकराकुलितेव सिन्धुः शैलाधिराजतनया न ययौ न तस्थौ ॥

आभासो यथा—

आः सीते पतिगर्वविभ्रमभरभ्रान्तभ्रमद्वान्धव-
प्रध्वंसस्मितकान्तिमत्तव तदा जातं यदेतन्मुखम् ।
संप्रत्येव हठात् तदेव कुरुते केशोच्चयाकर्षण-
त्रासोच्चानितलोललोचनपतद्बाष्पप्लुतं रावणः ॥

उत्कण्ठा यथा—

पशुपतिरपि तान्यहानि कृच्छ्राद्गमयदद्रिसुतासमागमोत्कः ।
कमपरमवशं न विप्रकुर्युर्विभुमपि त यदमी स्पृशन्ति भावाः ॥

अभिषङ्गो यथा—

लीनेव प्रतिबिम्बितेव लिखितेवोत्कीर्णरूपेव च
प्रत्युप्तेव च वज्रलेपघटितेवान्तर्निखातेव च ।
सा नश्चेतसि कीलितेव विशिखैश्चेतोभुवः पञ्चभि-
श्चिन्तासन्ततितन्तुजालनिबिडस्यूतेव लग्ना प्रिया ॥

निर्वृतिर्यथा—

जगति जयिनस्ते ते भावा नवेन्दुकलादयः प्रकृतिमधुराः सन्त्येवान्ये मनो मदयन्ति ये ।
मम तु यदियं याता लोके विलोचनचन्द्रिका नयनविषयं जन्मन्येकः स एव महोत्सवः ॥

उपादो यथा—

उत्पत्तिर्देवयजना ब्रह्मवादी नृपः पिता । सुप्रसन्नोज्ज्वला मूर्ति रस्याः स्नेहं करोति मे ॥

अभिवृद्धिर्यथा—

कान्ते तल्पमुपागते विगलिता नीवी स्वयं बन्धनात्
तद्वासः श्लथमेखलागुणधृतं किञ्चिन्नितम्बे स्थितम् ।
एतावत्सखि वेद्मि साम्प्रतमहं तस्याङ्गसङ्गे पुनः
कोऽसौ कास्मि रतं च किं कथमिति स्वल्पापि मे न स्मृतिः ॥

स्थैर्यं यथा—

अद्वैतं सुखदुःखयोरनुगतं सर्वास्ववस्थासु यद्विश्रम्भो हृदयस्य यत्र जरसा यस्मिन्नहार्यो रसः ।
कालेनावरणात्ययात्परिणते यत्स्नेहसारे स्थितं भद्रं तस्य सुमानुषस्य कथमप्येकं हि तत्प्राप्यते ॥

भावविशेषो यथा—

शत्रोरसागरलङ्घनं किमपरं द्वारोपरोधः पुरे दोर्दण्डा अपि मे त एव कुलिशक्षुण्णाङ्गदग्रन्थयः।
सर्वं सोढमिदं वृथैव हि मया सीताप्रसक्तात्मना पापो ध्वस्तमनोरथस्तु सरलं
दृष्टोऽपि नाहं तया ॥

रसविशेषो यथा—

कोपो यत्र भ्रुकुटिरचना विग्रहो यत्र मौनं यत्रान्योन्यस्मितमनुनयो दृष्टिपातः प्रसादः ।
तस्य प्रेम्णस्तदिदमधुना वैशसं पश्य जातं त्वं पादान्ते लुठसि न च मे मन्युमोक्षः खलायाः॥

आभासविशेषो यथा—

आपृष्टासि व्यथयसि मनो दुर्बला वासरश्री रेह्यालिङ्ग क्षपय रजनीमेकिका चक्रवाकी ।
नान्यासक्तो न खलु कुपितो नानुरागच्युतो वा दैवाधीनस्तदिह भवतीमस्वतन्त्रस्त्यजामि॥

एवमवस्थापिते गुणरसतदाभासभावानामलङ्कारत्वे षट्प्रकारोऽलङ्कारसङ्करः संभवति–गुणसंकरः, रससंकरः, अलङ्कारसंकरः, गुणरससंकरः, गुणालङ्कारसंकरः, रसालङ्कारसंकर इति।

ननु च गुणानां संकरव्यवहारो नोपपद्यते, बहुष्वपि गुणेषु गुणवदित्येव व्यपदेशात्। नैवम्, त्रिविधा गुणाः, शब्दगुणा अर्थगुणा दोषगुणाश्च । ते तु प्रत्येकं द्विधा— उल्लेखवन्तो निरुल्लेखाश्च । तत्र शब्दगुणेषु समाधिमाधुर्यौदार्यगाम्भीर्यादयः सोल्लेखाः । श्लेषप्रसादसौकुमार्यादयो निरुल्लेखाः । अर्थगुणेषु श्लेषप्रसादरीतिकान्त्यादयः सोल्लेखाः, अर्थव्यक्तिसौक्ष्म्यगाम्भीर्यसंमितत्वादयो निरुल्लेखाः । दोषगुणेषु ग्राम्यपुनरुक्ततापार्थव्यर्थादयः सोल्लेखाः, शब्दहीनसंशयापक्रमविसन्ध्यादयो निरुल्लेखाः । तत्र सजातीयानां सोल्लेखानामिव विजातीयानां तु निरुल्लेखानामपि संकरव्यवहारः प्रवर्तते । तत्र सजातीयानां शब्दगुणेषु समाध्यादीनां यथा—

णवपल्लवेसु लोलइ घोलइ विडवेसु वलइ सिहरेसु।
थवइ थवएसु अ तहा वसंतलच्छी असोअस्स ॥

[ नवपल्लवेषु लोलति घूर्णते विटपेषु वलते शिखरेषु ।
स्थगति स्तबकेषु च तथा वसन्तलक्ष्मीरशोकस्य ॥ ]

अत्र अन्यधर्माणामन्यत्रारोपणं समाधिः, पृथक्पदता माधुर्यं, बन्धाविकटत्वमुदारता, ध्वनिमत्ता गाम्भीर्यमिति सजातीयास्सङ्कीर्यन्ते । यतो वसन्तलक्ष्मीरशोकस्येति पदयोः शब्दध्वनिरपि परिस्फुरति यथा कस्यचिदशोकस्य कामिनोऽङ्केषु प्रियाङ्गना सविलासं चेष्टते तथास्येयमिति । अर्थगुणेषु श्लेषादीनां यथा—

जनः पुण्यैर्यायाज्जलधिजलभावं जलमुचस्तथावस्थं चैनं निदधतु शुभैः शुक्तिवदने ।
ततस्तां श्रेयोभिः परिणतिमसौ विन्दतु यया रुचिं तन्वन्पीनस्तनि हृदि तवायं विलुठति ॥

अत्र संविधानकसूत्रता श्लेषः। अर्थस्य प्राकट्यं प्रसादः, उत्पत्त्यादिक्रियाक्रमो रीतिः, दीप्तगुणत्वं कान्तिः, इत्यर्थगुणास्सजातीयास्संकीर्यन्ते। दोषगुणेषु ग्राम्यादीनां यथा—

हन्यते सा वरारोहा स्मरेणाकाण्डवैरिणा। हन्यते चारुसर्वाङ्गी हन्यते मञ्जुभाषिणी॥

अत्र हन्यत इत्यमङ्गलार्थं वरारोहेत्यश्लीलार्थं हन्यते हन्यत इति पुनरुक्तं चारुसर्वाङ्गीत्युक्त्वा वरारोहेति व्यर्थं, त एते सजातीयाश्चत्वारोऽपि दोषगुणाः सङ्कीर्यमाणाः कस्यचिदुन्मत्तभाषिणो अनुकम्पाद्यतिशयविवक्षामभ्यनुज्ञायन्ते। यदाह—

अनुकम्पाद्यतिशयो यदि कश्चिद्विवक्ष्यते। न दोषः पुनरुक्तादौ प्रत्युतेयमलंक्रिया॥

अथासजातीयानां शब्दगुणानामर्थगुणानां च सङ्करो यथा—

को नाम नोदयति नास्तमुपैति को वा लोकोत्तरः पुनरयं सवितां जगत्सु।
यत्रोदयास्तमयभाजि रुचां निधाने द्वेधा भवत्यहरिति क्षणदेति कालः॥

अत्र यावदर्थपदतासम्मितत्वं बन्धविकटत्वमुदारता श्लाघ्यविशेषणयोग उदात्तत्वमिति शब्दगुण उक्तार्थनिर्वहणं प्रौढिरर्थस्य प्राकट्यं प्रसादः रूढाहङ्कारतौर्जित्यमित्यर्थगुणाश्च सङ्कीर्यन्ते। शब्दगुणानां दोषगुणानां च यथा—

एह्येहि वत्स रघुनन्दन पूर्णचन्द्र चुम्बामि मूर्धनि चिराय परिष्वजे त्वाम्।
आरोप्य वा हृदि दिवानिशमुद्वहामि वन्देऽथवा चरणपुष्करकद्वयं ते॥

अत्र भावतो वाक्प्रवृत्तिर्भाविकत्वं प्रसिद्धार्थपदता प्रसादः क्रियार्थपदोपाख्यानं प्रेय इति शब्दगुणाः एह्येहीति पुनरुक्तं वत्सेत्युक्त्वा त्वत्पादाब्जद्वयं वन्द इति विरुद्धं मूर्ध्नि चुम्बामि हृदि वहामि पादौ वन्द इति क्रियास्वनुपयोगात् पूर्णचन्द्रेति क्रियोपयोगिव्यर्थं चेति दोषगुणाः परस्परं सङ्कीर्यन्ते। रसाक्षेपादौ हि पुनरुक्ततादयो न दुष्यन्ति। अर्थगुणानां दोषगुणानां च यथा—

किं द्वारि दैवहतिके सहकारकेण संवर्धितेन विषपादप एष पापः।
अस्मिन्मनागपि विकासविकारभाजि भीमा भवन्ति मदनज्वरसन्निपाताः॥

अत्र दीप्तरसत्वं कान्तिः अर्थप्राकट्यं प्रसादः उक्तार्थनिर्वहणं प्रौढिरित्यर्थगुणाः। दैवहतिके विषपादपोऽयं पाप इत्याद्यमङ्गलार्थं ग्राम्यम्। किमनेन संवर्धितेनेत्यत्र मदनज्वरसन्निपात इत्यत्र च कर्तव्यप्रयोजनादेर्विरहिणो द्रष्टुरित्यादेश्चाध्याहारादसम्पूर्णवाक्यतायामर्थव्यक्तिविपर्ययः अस्मिन् विकासविकारभाजीति विकासशब्दस्य पुष्पविषयत्वाद्वृक्षेऽपि प्रयोगो वाचकत्वादसमर्थमिति दोषगुणा मिथः सङ्कीर्यन्ते। यतो रसाक्षेपात्परिहासलेशोक्त्योरमङ्गलं प्रविश पिण्डीं द्वारमिति न्यायात्प्रसिद्धावध्याहारः दरी वदति, मञ्चाः क्रोशन्तीति प्रयोगदर्शनादाधाराधेययोरभेदोपचारश्च विरुद्धलक्षणादिभिः प्रयुज्यमानो न दोषायेति। अस्तु नाम गुणानां शब्दार्थदोषगुणभेदात्त्रिविधे

निरुद्धेखतया सोल्लेखतया च सङ्करव्यवहारः। रसानां तु वीराद्भुतादीनां कथमिवैकः शृङ्गारो अनेकसाध्यं सङ्करव्यवहारं वर्तयति ? उच्यते, यद्यपि शृङ्गार एवैको रसस्तथापि तत्प्रभवा ये रत्यादयस्तेऽप्युद्दीपनविभावैरुद्दीप्यमानास्तदनुप्रवेशादेव संचारिणामनुभावानां च निमित्तभाव-मुपयन्तो रसव्यपदेशं लभन्ते। यथा ह्यभिमानो रत्यादीनां निमित्तं चेतसा रस्यमानो रसः तथा रत्यादयोऽपि हर्षधृतिचिन्तौत्सुक्यादीनां मनोवाक्कायबुद्धिशरीरारम्भाणां च निमित्तमभिमानानु-प्रवेशेनैव चेतसा रस्यमाना रसा इत्युच्यन्ते। युगपदभिधाने च सङ्करव्यवहारं कल्पयन्ति। ते तूत्पत्तौ भावाः प्रकर्षे रसाः विपर्यये रसाभासाः प्रविलये तत्प्रशमा इति प्रमिधमानाः सङ्कीर्यन्त इति। तत्सङ्करः षोढा— भावसङ्करः, रससङ्करः, भावाभाससङ्करः, रसाभाससङ्करः, भावप्रशमसङ्करः, रसप्रशमसङ्कर इति। तेषु भावसङ्करो यथा—

न्यक्कारो हृदि वज्रकील इव मे तीव्रः परिस्पन्दते
घोरान्धे तमसीव मज्जति मनः संमीलितं लज्जया।
शोकस्तार्क्ष्यविपत्तितो दहति मां नास्त्येव यस्मिन् क्रिया
मर्माण्येव पुनश्छिनत्ति करुणा सीतां वराकीं प्रति॥

अत्रामर्षलज्जाशोकभीतयः समकक्ष्यतया मिथस्तिलतण्डुलवत्सङ्कीर्यमाणा रामस्य विरहिणो वागारम्भानुभावोक्तिपरतया प्रतीयन्ते। रससङ्करो यथा—

क्षिप्तो हस्तावलग्नः प्रसभमभिहतोऽप्याददानोंऽशुकान्तं
गृह्णन् केशेष्वपास्तश्चरणनिपतितो नेक्षितः संभ्रमेण।
आलिङ्गन् योऽवधूतस्त्रिपुरयुवतिभिः साश्रु नेत्रोत्पलाभिः
कामीवार्द्रापराधः स दहतु दुरितं शाम्भवो वः शराग्निः॥

अत्र शृङ्गारकरुणौ हरप्रभाववर्णनायां मृत्पिण्डे पांसूदकवत् प्रधानाङ्गभावेन संकीर्येते। भावाभाससंकरो यथा—

आः सीते पतिगर्वविभ्रमभरभ्रान्तभ्रमद्बान्धव-
प्रध्वंसस्मितकान्तिमत्तव तदा जातं यदेतन्मुखम्।
संप्रत्येव हठात् तदेष कुरुते केशोच्चयाकर्षण-
त्रासोच्चानितलोललोचनपतद्बाष्पप्लुतं रावणः॥

अत्र क्रोधाभासे छायादर्शन्यायेन रत्याभासाः संकीर्यमाणा उपलभ्यन्ते। रसाभाससंकरो यथा—

एकेनाक्ष्णा प्रविततरुषा पाटलेनास्तसंस्थं पश्यत्यक्ष्णा सजलतरलेनापरेणात्मकान्तम्।
अह्नश्छेदे दयितविरहाशङ्किनी चक्रवाकी द्वौ सङ्कीर्णौ रचयति रसौ नर्तकीव प्रगल्भा॥

अत्र नरसिंहजाताविव सिंहनरभागौ नर्तकीचक्रवाक्युपमाने रोषशोकप्रकर्षाभासमानौ मिथः संकीर्येते । भावप्रशमसंकरो यथा—

दृष्टे लोचनवर्त्मना मुकुलितं पार्श्वस्थिते चक्रव-
न्न्यग्भूतं बहिरासितं पुलकवत् स्पर्शं समातन्वति ।
नीवीबन्धवदागतं शिथिलतामाभाषमाणे ततो
मानेनापगतं ह्रियेव सुतनोरंघ्रि स्पृशि प्रेयसि ॥

अत्र कस्याश्चिरसखीविख्यातमानसं विधानकाया मानवत्याः प्रियदर्शनालम्बनविभावादुत्पन्ने प्रकृष्टरतिप्रभवे प्रहर्षस्थायिभावे तत्पार्श्वोपसर्पणादिभिरुद्दीपनविभावैरुद्दीप्यमाने समुत्पद्यमानेषु पुलकादिषु सुखात्मकेषु व्यभिचारिषु नयननिमीलनाधोमुख्यनीवीस्रंसनादिभिरनुभावैः परप्रकर्षणारोपणादानन्दरसतामापद्यमाने स्थायिनि प्रबलविरोधिभावान्तरोदयादेतेभ्य एव कारणेभ्यः प्रतिक्षणमपचीयमानयोर्लज्जारोषयोः प्रशमौ समकक्ष्यतया क्षीरनीरवत्सङ्कीर्यमाणौ प्रतीयेते ।
रसप्रशमसङ्करो यथा—

विरोधो विश्रान्तः प्रसरति रसो निर्वृतिघनस्तदौद्धत्यं क्वापि व्रजति विनयः प्रह्वयति माम् ।
झटित्यस्मिन् दृष्टे किमपि परवानस्मि यदि वा महार्घस्तीर्थानामिव हि महतां कोऽप्यतिशयः ॥

अत्र वीरौद्धत्यस्वातन्त्र्यरसानामानन्दप्रशमपारवश्यरसैस्तिरस्क्रियमाणानां पट [illegible] नीलादिभिः सितादीनां प्रशमा रामदर्शनप्रभावोद्भवे लवस्य विस्मयातिशयप्रशमजन्मनि वागारम्भानुभावोपमादौ चित्रवर्णवत्सङ्कीर्यमाणः समुपलभ्यते । अथालङ्कारसंकरः । स यद्यपि व्यक्ताव्यक्तोभयात्मतया तिलतण्डुलकादिभेदैः प्रधानाङ्गभावसमकक्ष्यताभ्यां पुरस्तादुक्तस्तथापि तेषां गुणादिसंकरसाधारणत्वात्सम्प्रत्यसाधारणः प्रकार उच्यते । स षोढा— शब्दालङ्कारसंकरः, अर्थालङ्कारसंकरः, उभयालङ्कारसंकरः, शब्दार्थालङ्कारसंकरः, शब्दोभयालङ्कारसंकरः, अर्थोभयालङ्कारसंकर इति । तेषु शब्दालंकारसंकरो यथा—

हंसाली भयतरला सारा सरसा सरासारसरासा ।
अम्बरतलमारूढा सारासरसा सरासारसरासा ॥

अत्र संस्कृतप्राकृतभाषाश्लेषः गतप्रत्यागतं चित्रं पदावृत्ति यमकं वर्णानुप्रासश्चेति चत्वारः शब्दालंकाराः संकीर्यन्ते । अर्थालंकारसंकरो यथा—

वासावस्थितताम्रचूडवयसामायामिभिः कूजितै-
र्दूरादप्यनुमीयमानवसतिर्ग्रामोऽयमन्तर्वणम् ।

यत्रोद्दीप्तकुकूलकूटविसरज्झम्पाघनं घूर्णते
सन्ध्यान्तोल्लसदच्छभल्लपटलच्छायाजटालं तमः ॥'

अत्र ताम्रचूडवयसां कूजितैरित्यनुमानं यत् तमो घूर्णत इति ज्ञापकहेतुः आदीप्तदुकूलकूटविलसज्झम्पाघनमिति सन्ध्यान्तोल्लसदच्छभल्लपटलच्छायाजटालमिति च कारकहेतुः जायमानपदार्थस्वरूपाभिधानं जातिरित्यर्थालंकाराश्चत्वारो मिथः संकीर्यन्ते । उभयालंकारसंकरो यथा–

ण हु णवरं दीवसिहासारिच्छं चंपएहि पडिवण्णम् ।
कज्जलकज्जं पि कअं उअरि भमन्तेहिं भमरेहिं ॥

[न खलु केवलं दीपशिखासादृश्यं चम्पकैः प्रतिपन्नम् । कज्जलकार्यमपि कृतमुपरिभ्रमद्भिर्भ्रमरैः ॥]

अत्र चम्पकानां प्रदीप्तशिखाभिराकारकान्तिभ्यामुपमाविरहिणीहृदयदाहोद्यानद्योतनार्थक्रियाभ्यां सारूप्यं कज्जलपटलानामिव भ्रमरपटलानामुपरिमेलनाम्मेलितं चम्पकप्रदीपकलिकयोरिव भ्रमरकज्जलपटलयोरप्यौपम्यादिसम्बन्धात्समुच्चय इत्युभयालंकाराश्चत्वारो मिथः संकीर्यन्ते । शब्दार्थालंकारसंकरो यथा–

सर्वाशारुधि दग्धवीरुधि सदासारङ्गबद्धक्रुधि
क्षामक्ष्मारुहि मन्दमुन्मधुलिहि स्वच्छन्दकन्दद्रुहि ।
शुष्यत्स्रोतसि तप्तभूरिरजसि ज्वालायमानाम्भसि
ज्यैष्ठे मासि खरार्कतेजसि कथं पान्थ व्रजन् जीवसि ॥

अत्रावन्त्या रीतिः पदमुद्रा, विभक्तिमुद्रा अनुप्रासश्चेति शब्दालंकाराः, जातिः कारकज्ञापकयोः हेतुः चित्रहेतुश्चेत्यर्थालंकाराः मिथः संकीर्यन्ते । शब्दोभयालंकारसंकरो यथा—

स्तोकस्तोकममूभिरम्बरतले ताराभिरस्तं गतं
गच्छत्यस्तगिरेः शिरस्तदनु च च्छायादरिद्रः शशी ।
प्रत्यासन्नतरोदयस्य तरणेर्बिम्बारुणिम्ना ततो
मञ्जिष्ठारसलोहिनी दिगपि च प्राची समुन्मीलति ॥

अत्र च्छायादरिद्रः मञ्जिष्ठा रसलोहिनीति पदमुद्रा, ताराभिरस्तं गतं प्राची समुन्मीलतीति विभक्तिमुद्रा, तदनु च दिगपि चेति समुच्चयमुद्रा, स्तोकस्तोकमस्तं गतं गच्छतीत्यादिरनुप्रासश्च शब्दालंकाराः, हेतूपमासमाधिरर्थक्रमः समुच्चयोक्तिश्चेत्युभयालंकारा मिथः संकीर्यन्ते । अर्थोभयालंकारसंकरो यथा–

खं वस्ते कलविङ्ककण्ठमलिनं कादम्बिनीकम्बलं
चर्चां पारयतीव दर्दुरकुलं कोलाहलैरुन्मदम् ।

गन्धं मुञ्चति सिक्तलाजसुरभिं वर्षेण दग्धा स्थली
दुर्लक्ष्योऽपि विभाव्यते कमलिनीहासेन भासां पतिः ॥

अत्र जातिरनुमानं कारकज्ञापकहेतू चेत्यर्थालङ्काराः रूपकमुपमा हेतूपमोत्प्रेक्षोपमेति च उभयालङ्कारा मिथः संकीर्यन्ते। भवतु नाम गुणानां रसानामलङ्काराणां च संकरः; गुणरससंकरस्तु कथंकारमुपपन्नो भवति ? यतो दोषहानमिव गुणोपादानमपि नियमनिर्वर्त्यं, अलंकारयोग इव रसावियोगोऽप्यवश्यविधेयः। कदाचिदलङ्कारयोगोऽपि व्यज्यते, न तु रसावियोगो गुणयोगश्च व्यभिचरितसम्बन्धा एव च पदार्थाः पदार्थान्तरैस्तिलतण्डुलक्षीरनीरादिवत्ससृज्यमानाः संकरबुद्धिमुत्पादयन्तो दृश्यन्ते। नावश्यावयविवज्जातिव्यक्तिवच्चाव्यभिचरितसम्बन्धा इति। अत्रापि ब्रूमः अवयवावयविन्यायेन चापृथक्प्रयत्ननिर्वर्त्यानां गुणरसानां वाक्ये सन्निवेशः। तत्र संकरव्यवहारो न प्रवर्तते। तद्यथा—

मधुरं रसवद्वाचि वस्तुन्यपि रसस्थितिः। येन माद्यन्ति धीमन्तो मधुनेव मधुव्रताः ॥
कामं सर्वोऽप्यलङ्कारो रसमर्थे निषिञ्चति। तथाप्यग्राम्यतैवैनं भारं वहति भूयसा ॥
शृङ्गार एव मधुरः परप्रह्लादनो रसः। तन्मयं काव्यमाश्रित्य माधुर्यं प्रतितिष्ठति ॥
शृङ्गारे विप्रलम्भाख्ये करुणे च प्रकर्षवत्। माधुर्यमार्द्रतां याति यतस्तत्राधिकं मनः ॥
रौद्रादयो रसा दीप्त्या लक्ष्यन्ते काव्यवर्तिनः। तद्व्यक्तिहेतुशब्दार्थावोजोऽधिष्ठाय तिष्ठति ॥
समर्पकत्वं वाक्यस्य यत्तु सर्वरसान्प्रति। स प्रसादो गुणो ज्ञेयः सर्वसाधारणक्रियः ॥

सेयं गुणानां रसारम्भकत्वे तद्व्यवस्थासिद्धिः, एवं रसानां गुणारम्भकत्वेऽपि। तद्यथा—रूढाहङ्कारतौर्जित्यं, भावतो वाक्प्रवृत्तिर्भाविकत्वं, क्रोधादावप्यतीव्रता, माधुर्यं, आशयोत्कर्षः, उदात्तत्वं, अर्थस्याभीष्टतमता, प्रेयः, दीप्तरसत्वं, कान्तिरिति। यत्र तु तिलतण्डुलवत् क्षीरनीरवच्छायादर्शवच्च तुल्यकक्ष्यतयैव गुणरसाना वाक्यऽपृथक्प्रयत्ननिर्वर्त्यानां विनिवेशस्तत्र संकरव्यवहारः प्रवर्तत एव। स षोढा— गुणप्रधानो, रसप्रधानः, उभयप्रधानः, उभयाप्रधानः, गुणाधिको, रसाधिक इति। तेषु गुणप्रधानो यथा—

अत्रान्तरे ललितहारलतानितम्बसंवाहनस्खलितवेगतरङ्गिताङ्गी।
देवी व्यपास्य शयनं धृतमानतन्तुरन्तःपुरं गतवती सह सौविदल्लैः ॥

अत्रार्थप्राकट्यौदार्ययोरर्थशब्दगुणयोः प्राधान्यं न रतिक्रोधयोरिति गुणप्रधानः। रसप्रधानो यथा—

अस्मिन्नगृह्यत पिनाकभृता सलीलमारब्धवेपथुरधीरविलोचनायाः।
विन्यस्तमङ्गलमहौषधिरीश्वरायाः स्रस्तोरगप्रतिसरेण करेण पाणिः ॥

अत्र श्लाध्यविशेषणयोग उदात्तत्वम्, बन्धविकटत्वमुदारता, अर्थप्राकट्यं प्रसादः, दीप्तरसत्वं कान्तिरिति गुणाः साध्वसविलासानुरागसंगमरसैरतिशय्यन्त इति रसप्रधानः । उभयप्रधानो यथा—

आपातमात्ररसिके सरसीरुहस्य किं बीजमर्पयितुमिच्छसि वापिकायाम् ।
कालः कलिर्जगदिदं न कृतज्ञमज्ञे स्थित्वा हरिष्यति तवैव मुखस्य शोभाम् ॥

अत्र भणितिविशेष उक्तिः संविधाने सुसूत्रता श्लेष इति शब्दगुणयोः लावण्यविलासवर्णनीयरसयोश्च तुल्यकक्ष्यतया निर्देश इत्युभयप्रधानः । उभयाप्रधानो यथा—

अभिनववधूरोषस्वादुः करीषतनूनपादसरलजनाश्लेषक्रूरस्तुषारसमीरणः ।
गलितविभवस्याज्ञेवाद्य द्युतिर्मसृणा रवे र्विरहिवनितावक्त्रक्लैव्यं बिभर्ति निशाकरः ॥

अत्र स्वादुक्रूरमसृणक्लैव्यमित्यन्यधर्माणामन्यत्रारोपणं समाधिः, अभिनववधूरोषादीनां चतुर्णामभ्यर्थानां स्वाद्वादीनां च लक्षणादिलक्षितानां प्राकट्यं प्रसादः, अभिनववधूरोषस्वादुः करीषतनूनपात् इति विशेषणविशेष्याणामुपक्रमेण निर्वहणं रीतिः, पादचतुष्टये चतुर्णामर्थानां विभक्तसमत्वेन निवेशः संमितत्वमिति चत्वारो गुणाः, चत्वारश्च रत्यमर्षविषादजुगुप्सात्मानो रसाः कालावस्थानिवेदनपरत्वेन प्रतीयन्त इत्युभयाप्रधानः । गुणाधिको यथा—

अजननिरस्तु विभूते रपूरणिर्भवतु सर्वकामानाम् ।
मा याचिषि मा सेविषि मा सहिषि पराभवं धनिनः ॥

अत्र लुतिङ्व्युत्पत्तिः सौशब्द्यम्, वाक्यानां परिपूर्णत्वमर्थव्यक्तिः, अर्थस्य प्राकट्यं प्रसादः, विभूतेरनुत्पत्तौ कामा न पूर्यन्ते, अपरिपूर्णकामो याचते, याचमानस्तदनाप्नुवन् धनिनः सेवते, सेवमानस्तु तैः परिभूयत इत्युत्पत्त्यादिक्रियाक्रमो रीतिरिति गुणाश्चत्वारः, रसस्तु निर्वेद एवैक इति गुणाधिकः । रसाधिको यथा—

कमलमनम्भसि कमले च कुवलये तानि कनकलतिकायाम् ।
सा च सुकुमारसुभगेत्युत्पातपरम्परा केयम् ॥

अत्र कमलमनम्भसि कमले च कुवलये तानि कनकलतिकायाम् इत्यन्यधर्माणामन्यत्रारोपणं समाधिः, सा च सुकुमारसुभगेत्युत्पातपरम्परा केयमित्यश्लीलामङ्गलार्थौ दोषगुणावपि, श्लाघ्यविशेषगुणयोग उदात्तत्वम्, विकटबन्धत्वमुदारता, उपक्रमाभेदो रीतिः, अर्थप्राकट्यं प्रसादः, अनिष्ठुरता सौकुमार्यं, अभीष्टतमता प्रेयः, दीप्तरसत्वं कान्तिरिति गुणा दश, रसास्तु रत्युत्कर्षदर्पधृत्युत्कण्ठावेगविस्मयमतिवितर्कचिन्ताचपलताहासोत्साहस्तम्भगद्गदोन्मादव्रीडावहित्थभयशङ्काः विंशतिर्वागारम्भानुभावे शृङ्गारिणः प्रियाचाटुकारस्य कस्यचित्प्रतीयन्त इति रसाधिकः ।

गुणालङ्कारसंकरोऽपि षट्प्रकारस्यैव समाधेः प्राधान्यमभिहितं भवति । यदाह—

तदेतत्काव्यसर्वस्वं समाधिर्नाम यो गुणः। कविसार्थः समग्रोऽपि तमेवमनुधावति ॥

स त्रिधा– एकधर्माध्यासेऽनेकधर्माध्यासेऽधर्माध्यासे च । तत्रानेकधर्माध्यासे समाधेरुभयालंकारत्वमुक्तम् । एकधर्माध्यासे समाधिस्तु द्विधा– शब्दगुणरूपो दोषगुणरूपश्च । शब्दगुणरूपो यथा—

कुमुदानि निमीलन्ति कमलान्युन्मिषन्ति च। इति नेत्रक्रियाध्यासा लब्धा तद्वाचिनी श्रुतिः॥

दोषगुणेषु तु,

निष्ठ्यूतोद्गीर्णवान्तादि गौणवृत्तिव्यपाश्रयम्। अतिसुन्दरमन्यत्तु ग्राम्यकक्षां विगाहते ॥

तद्यथा—

पद्मान्यर्कांशुनिष्ठ्यूताः पीत्वा पावकविप्रुषः। भूयो वमन्तीव मुखैरुद्गीर्णारुणरेणुभिः ॥

इति हृद्यमहृद्यं तु निष्ठीवति वधूरिति । युगपन्नैकधर्माणामध्यासोलंकृतिर्यथा ॥

गुरुगर्भभराक्रान्ताः स्तनन्त्यो मेघपंक्तयः। अचलाधित्यकोत्सङ्गमिमाः समधिशेरते ॥

इतीव गर्भिणीधर्मा बहवोऽन्यत्र दर्शिताः ॥

धर्माध्यासस्तु गुणालंकारसंकरे प्रधानं भवति । यतो यद्यपि गुणवत्येव वाक्येऽलंकारयोगस्तथापि क्वचिद् गुणस्य प्राधान्यं क्वचिदलंकारस्येति प्रधानाङ्गभावेन गुणालंकारव्यवहारयोः संकरव्यवहारः प्रवर्तते । स षोढा— शब्दगुणप्रधानः, अर्थगुणप्रधानः, दोषगुणप्रधानः, शब्दालंकारप्रधानः, अर्थालंकारप्रधानः, उभयालंकारप्रधानश्च । तेषु शब्दगुणप्रधानो यथा—

प्राप्तश्रीरेष कस्मात् पुनरपि मयि तं मन्थखेदं विदध्या-
निद्रामप्यस्य पूर्वामनलसमनसो नैव संभावयामि ।
सेतुं बध्नाति भूयः किमिति च सकलद्वीपनाथानुयात-
स्त्वय्यायाते वितर्कानिति दधत इवाभाति कम्पः पयोधेः ॥

अत्र हेतूत्प्रेक्षाभिधाने त्वयीत्यादौ पदे विष्णोः स्वरूपाध्यासेन तद्भावापत्तौ समाधेरिह प्राधान्यं प्रतीयते । ननु चायमर्थस्य प्राकट्यात् प्रसादोऽर्थगुणः कस्मान्न भवति ? अतास्मिन्नपि तद्व्यपदेशेन शब्दशक्तेराधिक्यात् । ननु च त्वयि इति, एष इति अस्य इति, युष्मदेतदिदमां न कश्चन विष्णुवाची स कथं वर्णनीये न्यस्तस्तं तमर्थमभिदधीत । उच्यते, सर्वनामत्वेनैषां सर्ववाचित्वात् । सर्वनामानि हि सर्वाभिधायीन्यपि प्रकरणाधिगम्यं विशेषमेव ब्रुवते स च इह

प्राप्तश्रीरित्येवमादिभिरभिव्यक्तमेवावगम्यत इति। अर्थगुणप्रधानो यथा—

लक्ष्मीवशीकरणचूर्णसहोदराणि त्वत्पादपङ्कजरजांसि चिरं जयन्ति।
यानि प्रणाममिलितानि नृणां ललाटे लुम्पन्ति दैवलिखितानि दुरक्षराणि॥

अत्र हेतुसाम्योभयालङ्काराभिधानेऽपि प्राधान्येनार्थप्राकट्यमर्थगुणः प्रतीयते। दोषगुणप्रधानो यथा—

येनापविद्धसलिलस्फुटनागसद्मा देवासुरैरमृतमम्बुनिधिर्ममन्थे।
व्यावर्तनैरहिपतेरयमाहिताङ्कः खं व्यालिखन्निव विभाति स मन्दराद्रिः॥

अत्र 'व्यावर्तनैरहिपतेरयमाहिताङ्कः' इति ज्ञापकहेतोः 'खं व्यालिखन्निव' इति उत्प्रेक्षाधयवाद्य, देवासुरैरिति नित्यवैराविवक्षायां बहुवचनम्, 'अमृतमम्बुनिधिर्ममन्थे' इति द्विकर्मकेष्वपि मथिप्रभृतीनामुपसंख्यानमिति अमृतशब्दात् द्वितीया इति दोषगुणयोः प्राधान्यं प्रतीयते। ननु चात्रार्थस्य प्राधान्यं कथं भवति तद्विषयस्य ज्ञापकहेतुनापहृतत्वात् सोऽप्यर्थालंकार एव। गुणालंकारयोश्च तुल्यकक्ष्यतायामलंकारः प्रधानं भवति न गुणः। गुणैर्हि गुणभूतैरेवालंकाराः प्राय आरभ्यन्ते। तद्यथा—

अस्पृष्टा दोषमात्राभिः समग्रगुणगुम्फिता। विपञ्चीस्वरसौभाग्या वैदर्भी रीतिरिष्यते॥
समस्तात्युद्भटपदामोजःकान्तिसमन्विताम्। गौडीयेति विजानन्ति रीतिं रीतिविचक्षणाः॥
आश्लिष्टश्लथभावां तु पुराणच्छायमाश्रिताम्। मधुरां सुकुमारां च पाञ्चालीं कवयो विदुः॥
माधुर्यमपि वाञ्छन्तः प्रसादं च सुमेधसः। समासवन्ति भूयांसि न पदानि प्रयुञ्जते॥
लाटीयावन्त्ययो रीत्यो र्मागध्यां च क्वचित्क्वचित्। केचिदोजोभिदित्सन्तः समस्यन्ति बहून्यपि॥
प्रतीतशब्दमोजस्वि सुश्लिष्टपदसंधि च। प्रसादि स्वाभिधानं च यमकं कृतिना मतम्॥

मा भूदलङ्कारतुल्यकक्षतया अर्थस्य प्राधान्यं शब्दगुणस्य तु श्लाघ्यविशेषगुणयोग उदात्तत्वमित्यादेः किमिति प्राधान्यं न भवति दोषगुणानामतीवोल्लेखवत्त्वेन प्राधान्यात्।

सा वामनप्रसिद्धिर्लङ्घितनभसो बलिद्विषोऽद्यापि।
मत्सरिणः खलु लोका मर्माण्येवानुबध्नन्ति॥

दोषस्य यो गुणीभावः स ततोऽप्यधिकं प्रकाशत इति। शब्दालंकारप्रधानो यथा—

यच्चन्द्रकोटिकरकोरकभारभाजि बभ्राम बभ्रुणि जटापटले हरस्य।
तद्वः पुनातु हिमशैलशिलानिकुञ्जझाङ्कारडम्बरविरावि सुरापगाम्भः॥

अत्रार्थप्राकट्यं प्रसादः विभवोत्कर्षं उदात्तता मृदुप्रस्फुटोन्मिश्रवर्णानामवैषम्यं समता, बन्धगाढता और्जित्यमित्यादिभ्यो गुणेभ्यः प्राधान्येन शब्दालंकारानुप्रासः प्रतीयते । अर्थालंकारप्रधानो यथा—

आश्लेषिणःपृथुतरक्लमपीतशीतमायामिनीर्घनमुदो रजनीर्युवानः ।
ऊर्वोर्मुहुर्वलनबन्धनसन्धिलोलपादान्तसंवलिततूलपटाः स्वपन्ति ॥

अत्र बन्धविकटत्वमुदारता, श्लाघ्यविशेषणयोग उदात्तत्वम्, विभवोत्कर्ष औदार्यम्, दीप्तरसत्वं कान्तिरित्यादिभ्यो गुणेभ्यः प्राधान्येन जातिर्यालंकारः प्रतीयते । उभयालंकारप्रधानो यथा—

अभ्युद्धृता वसुमती दलितं रिपूरः क्षिप्रक्रमं कवलिता बलिराजलक्ष्मीः ।
अत्रैकजन्मनि कृतं यदनेन यूना जन्मत्रये तदकरोत् पुरुषः पुराणः ॥

अत्रोक्तिपरिपाकः प्रौढिः, बन्धविकटत्वमुदारता, आशयोत्कर्ष उदात्तत्वम्, अर्थप्राकट्यं प्रसादः इत्यादिभ्यो गुणेभ्यः विशेषोक्तिरुभयालंकारः प्राधान्येन प्रतीयते ।

॥ अथ रसालङ्कारसङ्करः ॥

रसवन्ति हि वस्तूनि सालङ्काराणि कानिचित् । एकेनैव प्रयत्नेन निर्वर्त्यन्ते महाकवेः ॥
रसभावादिविषयविवक्षाविरहे सति । अलङ्कारनिबन्धो यः स कविभ्यो न रोचते ॥
रसाक्षिप्ततया यस्य बन्धः शक्यक्रियो भवेत् । अपृथग्यत्ननिर्वर्त्यः सोऽलङ्कारः प्रकृप्यते ॥
शृङ्गारी चेत्कविः काव्ये जातं रसमयं जगत् । स एव वीतरागश्चेन्नीरसं सर्वमेव तत् ॥
यया कयाचिच्छ्रुत्या यत्समानमनुभूयते । तद्रूपादिपदासक्तिरसानुप्रासा रसावहा ॥
नवोऽर्थः सूक्तिरग्राम्या श्रव्यो बन्धः स्फुटा श्रुतिः । अलौकिकार्थानुक्तिश्च रसमाहर्तुमीशते ॥

तत्र रसालङ्कारसंकरः षोढा संभवति, शब्दालङ्कारप्रधानः, अर्थालङ्कारप्रधानः, उभयालङ्कारप्रधानः, भावप्रधानः, आभासप्रधान रसप्रधानश्चेति । तेषु शब्दालङ्कारप्रधानो यथा—

कमलमलिरमुचदुत्पलकलिकातरलोलमुत्पलाशङ्कां ते ।
कुरुते स्म चक्षुरलिकुलकलिकातरलोलमुत्पलाशङ्कां ते ॥

अत्र रतिरसप्रभवं वागारम्भमभिभूय यमकानुप्रासौ शब्दालङ्कारौ प्राधान्येन प्रतीयते । अर्थालङ्कारप्रधानो यथा—

पुलअं जणेन्ति दहकन्धरस्स राहवसरा सरीरम्मि ।
जणअसुआफंसमहग्घविअ करअलाअड्ढि अविमुक्का ॥

[ पुलकं जनयन्ति दशकन्धरस्य राघवशराः शरीरे ।
जनकसुतास्पर्शमहार्घा इव करतलाकृष्टविमुक्ताः ॥ ]

अत्र रतिरसाभासमनुभूय हेतुरर्थालङ्कारप्राधान्येन प्रतीयते । उभयालङ्कारप्रधानो यथा—

किं गुरुजहणं अह थणभरोत्ति भाअकरअलग्गतुलिआए ।
विहिणो खुत्तंगुलिमग्गविब्भमं वहइ स तिवली ॥

[ किं गुरुजघनमथ स्तनभर इति भागकरतलाग्रतुलितायाः ।
विधेः खाताङ्गुलिमार्गविभ्रमं वहत्यस्यास्त्रिवली ॥ ]

अत्र रतिरसप्रभवाग्विस्मयादीनभिभूय पर्यायसंशयहेतूत्प्रेक्षोपमा उभयालङ्काराः प्राधान्येन प्रतीयन्ते । भावप्रधानो यथा—

तीए दंसणसुहए पणअक्खलणजणिओ मुहम्मि मणहर ।
रोसो विहरइ हिअअं मअपंको व्व मअलंछणम्मि णिसण्णो ॥

[ तस्या दर्शनसुभगे प्रणयस्खलनजनितो मुखे मनोहरे ।
रोषोऽपि हरति हृदयं मदपङ्क इव मृगलाञ्छने निषण्णः ॥ ]

अत्र हेतूपमातिरस्कारेण रसवतो हरेर्वचसि वागारम्भरूपे रुक्मिणीदत्तपारिजातमञ्जरीविलोकनप्रभवं सत्यभामाया रोषभावरामणीयकं प्राधान्येन प्रतीयते । आभासप्रधानो यथा—

कह मा छिज्जउ मज्झो इमीअ कंदोट्टदलसरिच्छेहि ।
अच्छीहिं जो ण दीसइ घणथणहररुद्धपसरेहिं ॥

( कथं मा क्षीयतां मध्य एतस्या नीलोत्पलदलसदृशाभ्याम् ।
अक्षिभ्यां यो न दृश्यते घनस्तनभररुद्धप्रसराभ्याम् ॥ )

अत्र हेतूपमोत्प्रेक्षासमाधितिरस्कारेण कस्यचिदनवाप्तदयिताप्रत्यभियोगाभिमानसुखस्य सुभगमानिनः प्रतिनायकादेः प्रत्यहं सीदतः रसाभासवागारम्भः प्राधान्येन प्रतीयते । रसप्रधानो यथा—

मा गर्वमुद्वह कपोलतले चकास्ति कान्तस्वहस्तलिखिता मम मञ्जरीति ।
अन्यापि किं न सखि भाजनमीदृशानां वैरी न चेद्भवति वेपथुरन्तरायः ॥

अत्राक्षेपहेतुत्वहेतुपर्यायोक्तिभ्यः प्रकृष्टरतिरसप्रभवः प्रियप्रेमाभिमानविकत्थनायाः प्रियवयस्यायाः पुरस्तात् स्वकान्तप्रेमनिवेदनापरवेपथुव्यभिचारसूचको वागारम्भः प्राधान्येन प्रतीयते । एवमियमनेकप्रकारा संसृष्टिर्गुणरसालंकारसंकरप्रभवापि मन्तव्या । तत्रापि प्रधानाङ्गभावेन समकक्ष्य-

तथा च व्यकाव्यकोभयात्मकरूपायां तिलतण्डुलक्षीरजलकादयो भेदा यथायोगमवगन्तव्याः। ते किं वक्तव्याः ? न वक्तव्याः। कथमनुक्ता गम्यन्ते ? उक्तेष्वेवान्तर्भावात्। अन्यथा अर्थोभयालङ्कारसंकराभिधाने खंवस्त इति चर्चा पारयतीति विभक्तिमुद्राकलविङ्ककण्ठमलिनं कादम्बिनीकम्बलमिति। पदमुद्रा च शब्दालङ्कारावपि संकीर्यमाणौ प्रतीयेते। किं पुनरमी संकरा द्वयोर्बहूनामपि भवन्तीति ? द्वयोरेवेति ब्रूमः। नन्विदानीमेवोक्तं बहूनामपि भवन्तीत्युक्तं द्वयोर्द्वयोः सर्वप्रकारैरप्युदाहृतत्वाद्वाक्ये च गुणरसयोगस्य नित्यत्वादुल्लेखवन्त एव संकरा गृह्यन्ते, नानुल्लेखवन्तः। तद्यथा—

उदात्तः प्रणवो यासां न्यायैस्त्रिभिरुदीरणम्। कर्मयज्ञः फलं स्वर्गस्तासां त्वं प्रभवो गिराम्॥

अत्र श्लाघ्यविशेषणयोग उदात्तत्वमिति शब्दगुणे अर्थप्राकट्यं प्रसादः। विशेष्यानुपादानादसम्पूर्णवाक्यता नेयत्वमिति दोषगुणश्च नोल्लिखति, विभाव्यमानस्तु प्रतीयते। ज्ञापकहेत्वर्थालङ्कारे तासां त्वं प्रभव इति कारकहेतुरर्थालङ्कारः क्रमरचनेति शब्दालङ्कारश्च नोल्लिखितः। विभाव्यमानस्तु प्रतीयते। प्रेयसि रसे विस्मयप्रकर्षो हर्षोत्कर्षे नोल्लिखति। विभाव्यमानस्तु प्रतीयते। एवं

किं येन सृजसि व्यक्तमुत येन बिभर्षि तम्। अथ यस्तस्य संहर्ता भागः कतम एष ते॥

अत्र वितर्कालंकारे कारकहेतुः क्रमरचना च नोल्लिखति, प्रसादार्थगुणे सुशब्दता बन्धवैकट्यं च नोल्लिखति, मतिप्रकर्षे प्रीत्युत्कर्षो वितर्कश्च नोल्लिखति। विभाव्यमानास्तु सर्व एव प्रतीयन्ते। तथा—

शिञ्जानमञ्जुमञ्जीरकाञ्चीसञ्चारचारवः। रमयन्ति मनः कान्ता नितान्तं योगिनामपि॥

अत्र सौकुमार्यशब्दगुणे समासभूयस्त्वमोजः श्लाघ्यविशेषणयोग उदात्तत्वं च नोल्लिखति। अनुप्रासशब्दालंकारे हेतुरर्थालंकारो जातिश्च नोल्लिखति। विस्मयभावे रतिर्मतिश्च नोल्लिखति। विभाव्यमानाश्च सर्व एव प्रतीयन्ते। अपि च,

पयोधरतटोत्सङ्गलग्नसन्ध्यातपांशुका। कस्य कामातुरं चेतो वारुणी न करिष्यति॥

अत्र हेतुसमाध्यलङ्कारयोः श्लेषरूपकालंकारौ कान्त्युदात्तत्वगुणयोरोजःप्रसादगुणौ आलम्बनविभावोद्दीपनविभावयोर्मतिवितर्कौ च नोल्लिखतः। ते तु विभाव्यमाना प्रतीयन्ते। किञ्च,

हस्ते लीलाकमलमलकं बालकुन्दानुविद्धं नीता लोध्रप्रसवरजसा पाण्डुतामाननश्रीः।
चूडापाशे नवकुरवकं चारु कर्णे शिरीषं सीमन्ते च त्वदुपगमजं यत्र नीपं वधूनाम्॥

अत्र ज्ञापकहेत्वलङ्कारे कारकहेतुर्जातिश्चार्थालङ्कारौ आवन्त्या रीतिः क्रमरचना च शब्दालङ्कारौ दीपकमश्लेषहेतूक्तिपर्यायश्च उभयालङ्कारौ नोल्लिखन्ति। श्लाघ्यविशेषणयोग उदात्तत्वमिति

शब्दगुणे यावदर्थपदता संमितत्व मनिष्ठुराक्षरप्रायता सौकुमार्यमिति शब्दगुणौ दीप्तरसत्वं कान्तिरर्थप्राकट्यं प्रसाद इत्यर्थगुणौ कालविरोधिनिष्क्रियमशरीरमिति दोषगुणौ च नोल्लिखन्ति। स्वनिवासवर्णनोत्कर्षे प्रतिमावोपवर्णनं निवासिजनवैदग्ध्याभिधानं च विभावौ प्रियतमास्थानप्रेयोरसे सर्वोपकरणप्रागुण्यस्मृतिः विलासाद्यभिनन्दनं चानुभावौ प्रियसुहृत्परोक्षनोत्साहे धनागमनीयविकासस्मृतिरुत्कण्ठेति च व्यभिचारिणौ नोल्लिखन्ति। विभाव्यमानास्तु सर्वे एव प्रतीयन्ते। अन्यच्च,

शिखण्डे खण्डेन्दुः शशिदिनकरौ कर्णयुगले गले तारास्तारातरलमुडुचक्रं च कुचयोः।
तटित्काञ्चीसन्ध्यासिचयरुचिरः कालि तदयं तवाकल्पः कल्पव्युपरमविधेयो विजयते॥

अवारोहावरोहक्रमो गतिः, श्लाघ्यविशेषणयोग उदात्तत्वमिति शब्दगुणयोर्बन्धवैकल्यादयः शब्दगुणाः, दीप्तरसत्वं कान्तिरर्थप्राकट्यं प्रसाद इत्यर्थगुणयोः रूढाहङ्कारतौर्जित्यमित्यादयोऽर्थगुणाः, कालादिविरोध्यप्रकृतरसत्वमिति दोषगुणयोर्विनिष्क्रियत्वादयो दोषगुणा नोल्लिखन्ति। वाक्यमुद्रानुप्रासशब्दालङ्कारयोः क्रमरचनादयः शब्दालङ्कारः, जातिहेत्वर्थालङ्कारयोः ज्ञापकहेत्वादयोऽर्थालङ्काराः समासोक्तिरूपकोभयालङ्कारयोः समुच्चयोक्त्यादय उभयालङ्काराः नोल्लिखन्ति। प्रेयश्शान्तरसयोर्भयानकादयो रसाः रौद्रशृङ्गाराभासयोर्वीराभासादयः आभासा मतिस्मृतिभावयोर्हर्षादेश्च भावा नोल्लिखन्ति। विभाव्यमानाश्च ते सर्वे एव प्रतीयन्ते। सोऽयं वाक्यविषयो रसवियोग उक्तः। प्रबन्धविषय उच्यते, सोऽपि दोषहाने गुणोपादानेनालङ्कारसंकरेण च प्रकाशमानो मनीषिणां मनःप्रहर्षहेतुर्भवति। तत्र दोषहानमनौचित्यादिपरिहारेण यथा—मायाकैकेयीदशरथाभ्यां रामः प्रवासितो न मातरपितराभ्यामिति निर्दोषदशरथो राममेवायोधयद् रामेण वालिनिहते न सुग्रीवेणेति महावीरचरिते रुधिरप्रियराक्षसेन दुश्शासनस्य रुधिरं पीतं न भीमसेनेनेति वेणीसंहारे, अनङ्गावतारस्य प्रद्युम्नस्यैव जन्मान्तरपत्नी रति र्मायावती न गुर्वङ्गनेति हरिवंशे, दुर्वाससोऽभ्यानाद्दुष्यन्तः शकुन्तलास्वीकारं विसस्मार नानवस्थितानुरागतयेति शाकुन्तले, लवणप्रयुक्तराक्षसाभ्यां रामोऽवसरे तच्छद्मभिधाय सीता परित्याजिता न कैकेयीमन्थराभ्यामिति छलितरामे, दग्धायामपि वासवदत्तायां वैरप्रतिचिकीर्षया पद्मावती मयोढा सिद्धे च समीहिते तया विना क्षणमपि न जीवामीत्यविज्ञातवासवदत्तासन्निधेर्वत्सराजस्याग्निप्रवेशाध्यवसायः, प्रियाहृदयतो व्यलीकशल्यमुद्धरानेति तापसवत्सराजे, निरपत्यः स्वामिकार्यं साधयामीति प्रभुभक्त्या निरपराधामपि प्रेयसीं दग्ध्वा स्वामिकार्यापेक्षया अहमेतावन्ति दिनानि जीवितोऽद्य कृतस्वामिकार्यं त्वामेवानुगच्छामीति शिवगणः शूद्रकविनिर्मितां मायामयीं चितां प्रियासमक्षं प्रविवेश। सापि तत् प्रेमापदानदर्शनापह्नुतप्रियव्यलीका तद्वियोगकातरा तत्रैवात्मानं प्राचिक्षेपेति विक्रान्तशूद्रके, एवमन्यदपि दोषहानमुदाहार्यम्। गुणोपा-

दानं तु लक्ष्यमाणप्रबन्धभेदानां सम्यग्लक्षणयोगेन संविधानकससूत्रता तेष्वेव नगरार्णववर्णना दीनां सन्निवेशप्राशस्त्यमलंकारसंकर इति । तदुक्तम्—

> औचित्यं वचसां प्रकृत्यनुगतं सर्वत्र पात्रोचिता
> पुष्टिः स्वावसरे रसस्य च कथा मार्गे न चातिक्रमः ।
> शुद्धिः प्रस्तुतसंविधानकविधौ प्रौढिश्च शब्दार्थयो-
> र्विद्वद्भिः परिभाव्यतामवहितैरेतावदेवास्तु नः ॥

तत्रेष्टार्थव्यवच्छिन्ना पदपंक्तिर्वाक्यपद्धतिः प्रकरणावली वा प्रबन्धः । यतः पदानां सुबन्तानां तिङन्तानां च सर्वार्थसाधारणत्वा न स्वरूपनिबन्धको विशेषः प्रतीयते । नापि वाक्यानां, सर्वं व्यवहारसाधारणत्वात्, परस्परावच्छेदहेतुभेदः संभवति । न च प्रकरणानां शैलर्तुनगरार्णव-वर्णनादिरूपाणां सकलकाव्यशरीराङ्गत्वे तद्गतो व्यतिरेक उपपद्यते । अतो य एव तैः क्रियमाणो महावाक्यार्थं प्रति नियतरूपः स एव परमनेकवाक्यप्रकरणादिसमुदायरूपस्य महावाक्यादेरव-च्छेदहेतुः तेन व्यवच्छिन्ना विशेषेऽवच्छिन्ना पदपंक्ति र्वाक्यपद्धतिः प्रकरणावली वा प्रबन्धः । यथा— जानकीहरणं, कुमारसंभव इति ।

ननु च जानक्या हरणमस्मिन्, कुमारस्य संभवोऽस्मिन्निति बहुव्रीहौ प्रबन्धोऽन्यपदार्थे जानकीहरणमिति न प्राप्नोति । काव्ये तु कुमारसंभव इति । न चैकत्र काव्यमेवान्यपदार्थत्वेना-भीयते । अन्यत्र प्रबन्ध एवेति नियमहेतुरस्ति । तर्हि नायं बहुव्रीहिः, अपि तु तत्पुरुषः, जानक्या हरणं जानकीहरणं, कुमारस्य संभवः कुमारसंभव इति । अभिधेयेन चाभिधायकमपि व्यपदिशन्ति कवयः, यथाभिज्ञानशाकुन्तले नाटकं हर्षचरितमाख्यायिकेति । प्रबन्धश्चेह द्विधा— प्रेक्ष्यः, श्रव्यश्च । तयोरभिनेयः प्रेक्ष्यः, स च नाटकादिभेदाच्चतुर्विंशतिप्रकारो भवति । नाटकं, प्रकरणं, व्यायोगः, ईहामृगः, समवकारः, डिम, उत्सृष्टिकाङ्क, भाणं, प्रहसन, वीथी, नाटिका, सट्टकः, श्रीगदितं, दुर्मिल्लिका, प्रस्थान, काव्यं, भाणकं, भाणिका, गोष्ठी, हल्लीसक, नर्तनकं, प्रेक्षणकं, नाट्यं, रासकमिति । अनभिनेयः श्रव्यः । सोऽप्याख्यायिकादिभेदाच्चतुर्विंशतिप्रकारो भवति । आख्यायिका, उपाख्यान, आख्यानं, निदर्शन, प्रवह्लिका, मन्थुल्लिका, मणिकुल्या, कथा, परिकथा, खण्डकथा, उपकथा, बृहत्कथा, चम्पूः, पर्वबन्धः, काण्डबन्धः, सर्गबन्धः, आश्वासबन्धः, सन्धिबन्धः, अवस्कन्धबन्धः, काव्यशास्त्रं, शास्त्रकाव्यं, कोशः, सङ्घातः, संहिता, साहित्यप्रकाश इति । तत्राभिनेयभेदेषु—

> प्रख्यातवस्तुविषयं प्रख्यातोदात्तनायकं चैव । राजर्षिचरितवंशानुचरितदिव्याश्रयोपेतम् ॥
> सर्वाभिर्भाषाभिः समन्वितं गद्यपद्यमिश्राभिः । सर्वैश्चालङ्कारैर्लक्षणषट्त्रिंशता च संयुक्तम् ॥

नानाविभूतिसंयुतमृद्धिविलासादिभिर्गुणैर्युक्तम्। अङ्कप्रवेशकाढ्यं रूपकमिह नाटकं नाम॥
नृपतीनां यच्चरितं नानारसभावसंश्रितं बहुधा। सुखदुःखोत्पत्तिकृतं वाच्यं तन्नाटके भवति॥
तत्रावस्थोपेतं कार्यं प्रसमीक्ष्य बिन्दुविस्तारात्। कर्तव्योऽङ्कः सम्यग्गुणान्वितो नाट्यतत्त्वज्ञैः॥
यत्रार्थस्य समाप्तिर्यत्र च बीजस्य भवति संहारः। किञ्चिदवलग्नबिन्दुः सोऽङ्क इति सदावगन्तव्यः॥

ये नायका निगदितास्तेषां प्रत्यक्षचरितसंभोगः।
नानावस्थान्तरितः कार्यस्त्वङ्को यथार्थरसः॥
नायकदेवीपरिजनपुरोहितामात्यसार्थवाहानाम्।
नैकरसान्तरविहितो ह्यङ्क इति बुधैः स विज्ञेयः॥

शोकप्रसादविद्रवशापोत्सर्गप्रसादनक्रोधाः। उद्वाहोऽद्भुतदर्शनमङ्के प्रत्यक्षजानि स्युः॥
युद्धं राज्यभ्रंशो मरणं नगरोपरोधनं चैव। प्रत्यक्षाणि तु नाङ्के प्रवेशकैः संनिधेयानि॥
भावा रसाश्च यस्मिन्नारोहन्त्यङ्कवद्धवेत्सोऽङ्कः। नानाविधानयुक्तो लक्ष्मेव च यः प्रबन्धस्य॥
एकदिवसप्रयोज्यः कार्यस्त्वङ्कोऽर्थबीजमधिकृत्य। आवश्यककार्याणामविरोधेन प्रबन्धेषु॥
एकाङ्केन कदाचिद्बहूनि कार्याणि योजयेद्धीमान्। आवश्यकाविरोधेन तत्रकार्याणि कार्याणि॥
ज्ञात्वा दिवसावस्थां क्षणयाममुहूर्तलक्षणोपेताम्। विभजेत्कार्यं मतिमान्पृथक्पृथक्सर्वमङ्केषु॥
रङ्गं तु ये प्रविष्टास्सर्वेषां भवति तत्र निष्क्रामः। बीजार्थयुक्तियुक्तं कृत्वा कार्यं यथार्थरसम्॥
दिवसावसानकार्यं यद्यङ्के नोपपद्यते सर्वम्। अङ्कच्छेदं कृत्वा प्रवेशकैस्तद्विधातव्यम्॥
सन्निहितनायकोऽङ्कःकर्तव्यो नाटके प्रकरणे वा। परिजनकथानुबन्धः प्रवेशकस्तत्र विज्ञेयः॥
अङ्कच्छेदं कृत्वा मासकृतं वर्षसञ्चितं वापि। तत्सर्वं कर्तव्यं वर्षादूर्ध्वं नतु कदाचित्॥
यदि कश्चित्कार्यवशाद्गच्छति पुरुषः प्रकृष्टमध्वानम्। तत्राप्यङ्कच्छेदः कर्तव्यःपूर्वतन्त्रज्ञैः॥
अङ्कान्तरानुसारी संक्षेपार्थमधिकृत्य बिन्दूनाम्। प्रकरणनाटकविषये प्रवेशकःसंविधातव्यः॥
नोत्तममध्यमपुरुषैराचरितो नाप्युदात्तवचनकृत. । प्राकृतभाषाचारःप्रयोगमासाद्य कर्तव्यः॥
कालोत्थानगतिरसव्यत्यासारम्भकामविषयाणाम्। अर्थाभिधानभूतः प्रवेशकःस्यादनेकार्थः॥
बह्वाश्रयमप्यर्थं प्रवेशकैः संक्षिपेत्प्रबन्धेषु। अङ्केषु स प्रयुक्तो जनयति खेदं प्रयोगस्य॥
यत्रार्थस्य समाप्तिर्न भवत्यङ्के प्रयोगबाहुल्यात्। वृत्तान्तः स्वल्पकथैःप्रवेशकैस्सोऽभिधातव्यः॥

शुद्धस्तङ्कीर्णो वा द्विविधो विष्कम्भकश्च विज्ञेय. । म यमपात्रैः शुद्धः सङ्कीर्णो मध्यनीचकृतः॥
अङ्कमुखं गर्भाङ्कः कार्योऽस्मिश्चूलिकापि वा कुशलैः । मा भूदिति वृत्तानां विच्छेदो विस्तरो वेति॥
अङ्कमुखं विश्लिष्टं यत्रोपश्लिष्यते क्रियावाक्यैः। पुरुषस्य वा तस्मिन्नङ्कमुखमिव व्यपदिशन्ति॥
अङ्कान्तरे पराङ्को निरतति यस्मिन्प्रयोगमासाद्य। बीजार्थयुक्तियुक्तो गर्भाङ्को नाम स ज्ञेयः॥
अन्तर्यवनिकसंस्थैर्मागध सूतादिभिस्तु यःक्रियते। अर्थस्योपक्षेपोऽनेकविधश्चूलिका सापि॥

नाटकलक्षणमेतन्मया समासेन कीर्तितं विधिवत् ।
प्रकरणमतःपरमहं लक्षणयुक्त्या प्रवक्ष्यामि ॥

यत्र कविरात्मबुद्ध्या वस्तुशरीरं च नायकं चैव। औत्पत्तिकं प्रकुरुते तज्ज्ञेयं प्रकरणं नाम॥
यदनार्षमप्रयुक्तं परेण यत्स्यादभूतगुणबन्धम्। प्रकरणमिति तद्विद्यादौद्भिज्जबीजार्थसंयुक्तम्॥
यन्नाटके मयोक्तं वस्तुशरीरं रसाश्रयोपेतम्। तत्प्रकरणेऽपि कार्यं केवलमुत्पाद्यवस्त्विह तत्॥
विप्रवणिक्सचिवानां पुरोहितामात्यसार्थवाहानाम्। चरितंयन्नैकविधंतज्ज्ञेयंप्रकरणंकृतिभिः॥
नोदात्तनृपोपेतं न दिव्यचरितं न राजसम्भोगम्। बाह्यजनसंप्रयुक्तं तज्ज्ञेयं प्रकरणं लोके॥
दासविटश्रेष्ठियुतं वेशस्त्र्युपचारकारणोपेतम्। मन्दकुलस्त्रीचरितं कार्यंकार्यं प्रकरणे तु॥
सचिवश्रेष्ठिब्राह्मणपुरोहितामात्यसार्थवाहानाम्। गृहवार्ता यत्र भवेन्न तत्र वेश्याङ्गना कार्या॥
यदि वेशयुवतियुक्तं न कुलस्त्रीसङ्गमर्हति कदाचित्। अथ कुलवधूप्रयुक्तं न वेशयुवतिर्भवेत्तत्र॥

यदि वा कारणयुक्त्या वेशकुलस्त्रीसमागमोऽपि स्यात् ।
अविकृतभाषाचारं तत्र तु पाठ्यं प्रयोक्तव्यम् ॥

मध्यमपुरुषैर्नित्यं योज्यो विष्कम्भकोऽत्र तन्त्रज्ञैः। संस्कृतवचनानुगतः संक्षेपार्थः प्रवेशकवत्॥
अङ्कान्तरालविहितप्रवेशकोऽर्थक्रियामभिसमीक्ष्य। संक्षेपात्सन्धीनामर्थानां चैव कर्तव्यः॥
अङ्के प्रवेशके वा प्रकरणमाश्रित्य नाटकं वापि। नवध. कर्तव्यो वै यस्तत्र तु नायकःख्यातः॥
अपसरणमेव कार्यं ग्रहणं वा सन्धिरेव वा योज्यः। काव्यश्लेषैर्बहुभिर्यथारसं नाट्यतत्त्वज्ञैः॥
प्रकरणनाटकविषये पञ्चाद्या दशपरा भवन्त्यङ्काः। अङ्कान्तरसन्धिषु च प्रवेशकास्तेषु तावन्तः॥
नमहाजनपरिवारं कर्तव्यं नाटकं प्रकरणं वा। ये तत्र कार्यपुरुषाश्चत्वारः पञ्च वा ते स्युः॥
व्यायोगेहामृगसमवकारडिमसंज्ञितानि कार्याणि। दशभिर्द्वादशभिर्वा षोडशभिर्वापि पुरुषैः स्युः॥

व्यायोगस्तत्र बुधैः कार्यः प्रख्यातनायकशरीरः । अल्पस्त्रीजनयुक्तः स्यादेकाहप्रयोज्यश्च ॥
बहवस्तत्र तु पुरुषा व्यायच्छन्ते कथाशरीरवशात्। नचतत्प्रमाणनियमः किञ्चैकाङ्कोविधातव्यः॥
नस दिव्यनायककृतः कार्यो राजर्षिनायकनिबन्धः । युद्धनियुद्धाधर्षणसङ्घर्षयुतश्च कर्तव्यः॥
एवंविधस्तु कार्यो व्यायोगो दीप्तकाव्यरसयोनिः । वक्ष्याम्यतः परमहं लक्षणमीहामृगस्यापि ॥
दिव्यपुरुषाश्रयकृतो दिव्यस्त्रीकारणोपगतयुद्धः । सुविहितवस्तुनिबन्धो विप्रत्ययकारकश्चैव ॥
उद्धतपुरुषप्रायस्त्रीरोषग्रथितकाव्यबन्धश्च । संक्षोभविद्रवकृतः संस्फोटकृतश्च स ज्ञेयः ॥
तत्र च वधेप्सितानां वधोऽप्युदग्रो भवेन्नपुरुषाणाम्। किञ्चिद्व्याजं कृत्वा तेषां युद्धं शमयितव्यम्॥
स्त्रीभेदनापहरणोपमर्दनप्राप्तवस्तुश्रृङ्गारः । ईहामृगो विधेयश्चतुरङ्कविभूषितस्तज्ज्ञैः ॥
यद्व्यायोगे कार्यं ये पुरुषा वृत्तयो रसाश्चैव । ईहामृगेऽपि ते स्युः केवलमत्र स्त्रिया योगः ॥
ईहामृगस्य लक्षणमित्युक्तमिदं मया समासेन । वक्ष्याम्यतः परमहं लक्षणयुक्त्या समवकारम्॥
देवासुरबीजकृतः प्रख्यातोदात्तनायकश्चैव । त्र्यङ्कस्तथा त्रिकपटस्त्रिविद्रवः स्यात्त्रिश्रृङ्गारः ॥
द्वादशनायकबहुलो ह्यष्टादशनाडिकाप्रमाणश्च । वक्ष्याम्यस्याङ्कविधिं यावत्यो नाडिका यत्र॥
अङ्कोऽत्र सुप्रसन्नः सविद्रवः सकपटः सवीथीकः । द्वादशनाडीयुक्तः प्रथमः कार्यः क्रियोपेतः॥
कार्यस्तथा द्वितीयस्समाश्रितो नाडिकाश्चतस्रस्तु । वस्तुसमापनविहितो द्विनाडिकः स्यात् तृतीयोऽस्मिन् ॥
नाडीसंज्ञा ज्ञेया मानं कालस्य यन्मुहूर्तार्धम्। तन्नाडिकाप्रमाणं यथोक्तमङ्केषु संयोज्यम् ॥
अङ्केऽङ्के संबन्धः कर्तव्यः काव्यबन्धमासाद्य । अर्थं हि समवकारेष्वप्रतिसंबन्धमिच्छन्ति ॥
वस्तुगतिक्रमविहितो दैववशाद्वा परप्रयुक्तो वा। सुखदुःखोत्पत्तिकृतस्त्रिविधः कपटोऽत्र विज्ञेयः॥
युद्धजलसंभ्रमो वा वाय्वग्निगजेन्द्रसंभ्रमकृतो वा। नगरोपरोधजो वा विज्ञेयो विद्रवस्त्रिविधः ॥
त्रिविधश्चात्र विधिज्ञैः पृथक्पृथक्काव्यबन्धविहितार्थः। त्रिविधकृतः श्रृङ्गारो ज्ञेयो धर्मार्थकामेषु ॥
यस्मिन्धर्मप्रापकमात्महितं भवति साधनं बहुधा । व्रतनियमतपोयुक्तो ज्ञेयोऽसौ धर्मश्रृङ्गारः॥
अर्थस्याप्तिर्यस्मिन्भवति च बहुधा स चार्थश्रृङ्गारः। स्त्रीसंप्रयोगविषयेष्वथार्थमपीष्यतेऽभिरतिः॥
कन्याविलोभनकृतः प्राप्तौ स्त्रीपुंसयोः स रत्यैव । निभृतं सावेगं वा विज्ञेयः कामश्रृङ्गारः ॥
उष्णिग्गायत्र्याद्यन्यानि च यानि बन्धकुटिलानि । वृत्तानि समवकारे कविभिस्तानि प्रयोज्यानि ॥

एवं कार्यः इ.ज्ञैर्नानारससंश्रयः समवकारः। डिमलक्षणं तु भूयो लक्षणमुक्त्वा प्रवक्ष्यामि ॥
शृङ्गारहास्यवर्ज्यं शेषैः सर्वैरसैस्समायुक्तः। दीप्तरसकाव्ययोश्चतुरङ्को वा डिमः कार्यः ॥
प्रख्यातवस्तुविषयः प्रख्यातोदात्तनायकश्चैव। रौद्रभयानकबीभत्सवीरकरुणाद्भुतोपेतः ॥
मायेन्द्रजालबहुलो बहुपुंसोत्थानसंयुक्तः। देवभुजगेन्द्रराक्षसयक्षपिशाचावकीर्णश्च ॥
निर्घातोल्कापातैरुपरागैश्चन्द्रसूर्ययोर्युक्तः। युद्धनियुद्धनिवद्धसंस्फोटकृतश्च कर्तव्यः ॥
सात्वत्यारभटीभ्यां वृत्तिभ्यामन्वितो डिमःकार्यः। पोडशनायकबहलस्तज्ज्ञैर्नानाश्रयविशेषः॥
डिमलक्षणमप्यभिहितमिदमुद्देशक्रमेण संक्षेपात्। उत्सृष्टिकाङ्कभाणप्रहसनवीथीरथो वक्ष्ये॥
प्रख्यातवस्तुविषयस्तेष्वप्रख्यातवस्तुविषयो वा। दिव्यपुरुषैर्वियुक्तश्शेषैश्च समन्वितःपुंभिः॥
करुणरसप्रायकृतो नियुद्धयुद्धोद्धतप्रहारश्च। स्त्रीपरिदेवितबहलो निर्वेदितवाक्यभाषश्च ॥
नानिग्यायतचेष्टः सात्वत्यारभटिकैशिकीहीनः। कार्य.काव्यविधिज्ञैस्सततमिहोत्सृष्टिकाङ्कस्तु॥
धूर्तविटसंप्रयोज्यो नानावस्थान्तरात्मकश्चैव। वस्तुसमाङ्कःकार्यः सततं काव्ये बुधैर्भाणः॥
आत्मानुभूतशंसी परसंश्रयवर्णनाविशेषयुतः। विविधाश्रयश्च भाणो विज्ञेयःसैकभार्यश्च ॥

परवचनमात्मसंस्थापरवचनैः सोत्तरैर्ग्रथितवाक्यम।
आकाशपुरुषकथितैरङ्गविकारैरिहाभिनयेत् ॥

प्रहसनमिह विज्ञेयं द्विविधं शुद्धंच सङ्कीर्णम्। वक्ष्यामि तयोर्युक्त्या पृथक्पृथग्लक्षणविशेषम्॥
लोकोपचारयुक्ता यावार्ता यश्च दम्भसंयोगः। स प्रहसने प्रयोज्यो धूर्तजनविवादसंपन्नः ॥
भगवत्तापसविप्रैरन्यैरपि हासवादसम्पन्नम्। नीचजनसंप्रयुक्तं परिहासाभाषणप्रायम् ॥
वेश्यानपुंसकविटैर्घातिकदासीजनेन संकीर्णम्। अनिभृतवेषपरिच्छदचेष्टितकरणैश्च संपन्नम्॥
अविकृतभावाचारं विशेषभावोपहासरचितपदम्। नियतगतिवस्तुविषयं शुद्धमिह प्रहसने भवति ॥
उद्घात्यकादिभिरिदं वीथ्यङ्गैर्मिश्रितं भवेन्मिश्रम्। वीथी स्यादेकाङ्का द्विपात्रभार्यैकभार्या वा ॥

सर्वरसलक्षणाढ्या समन्विताङ्गैरियं त्रयोदशभिः।
प्रथमोत्तममध्यमाभिर्युक्तः स्यात्प्रकृतिभिस्तिसृभिः ॥
इति दशरूपकमेतद्भरताचार्यानुसारतो गदितम्।
प्रकरणनाटकभेदो रूपकमिह नाटिका भवति ॥

स्त्रीप्राया चतुरङ्का ललिताभिनयात्मिकासु विहिताङ्गी ।
बहुगीतनृत्तवाद्या रतिसंभोगात्मिका चैव । राजोपचारयुक्ता शृङ्गाराभिनयभावसंयुक्ता ॥
नायकदेवीपरिजनसमन्विता नाटकप्रकृतिः । प्रकरणसमुद्भवा पुनरुत्पाद्यं वस्तु
नायकं नृपतिम् ॥
अन्तःपुरसङ्गीतककन्यामधिकृत्य कर्तव्या। विष्कम्भकप्रवेशकरहितो यस्त्वेकभाषया भवति॥
अप्राकृतसंस्कृतया स सट्टको नाटिकाप्रतिमः। काव्यं गोपुच्छाग्रं कर्तव्यं नाटिकादिषु प्राज्ञैः॥
ये तूदात्ता भावास्ते सर्वे पृष्ठतः कार्याः । सर्वेषां काव्यानां नानारसभावयुक्तियुक्तानाम् ॥
निर्वहणे कर्तव्यो नित्यंहि रसोऽद्भुतस्तज्ज्ञैः। यद्दिव्यनायककृतं काव्यं संग्रामबन्धवधयुक्तम्॥
तद्भारतेऽत्र वर्षे कर्तव्यं काव्यबन्धेषु । तस्माद्भारतमिष्टं वर्षेष्वन्येषु नित्यकालं हि ॥
हृद्या सर्वा भूमिः शुभगन्धा हेमरत्नमयी । उपवनगमनक्रीडाविहारनारीरतिप्रमोदाः स्युः ॥
तेषुहि वर्षेषु सदा नतत्र दुःखं नवा शोकः। येचैषामधिवासाःपुराणवादेषु पर्वताःकथिताः ॥
संभोगस्तेषु भवेत्कर्मारम्भस्तथैव तस्मिन् । वाक्यार्थाभिनयोऽयं प्रकीर्तितो नाटकादिभेदेन॥
द्वादशविधपदार्थाभिनयमथ यथास्थितं वक्ष्ये। तत्र श्रीरिव दानवशत्रोर्यस्मिन्कुलाङ्गना पत्युः॥
वर्णयति शौर्यधैर्यप्रभृतिगुणानग्रतरसख्याः। पत्या च विप्रलब्धा गातव्ये ताःक्रमादुपलभन्ते॥
श्रीगदितमिति मनीषिभिरुदाहृतोऽसौ पदाभिनयः। चौर्यरतप्रतिभेदं यूनोरनुरागवर्णनं वापि॥
यत्र ग्राम्यकथाभिः कुरुते किल दूतिका रहसि । मन्त्रयति च तद्विषयन्यग्जातित्वेन
याचने च बहु ॥
लब्ध्वापि लब्धुमिच्छति दुर्मिलिता नाम सा भवति ।
प्रथमानुरागमानप्रवासशृङ्गारसंश्रयं यत्स्यात् ॥
प्रावृड्वसन्तवर्णनपरमन्यद्वापि सोत्कण्ठम् । अन्तेधीररसाढ्यैर्निबद्धमेतच्चतुर्भिरपसारैः ॥
प्रस्थानमितिब्रुवते प्रवासमुपलक्षयेत्सुधियः। आक्षिप्तिकाथवर्णो मात्रा ध्रुवकोऽथ भग्नतालश्च॥
वर्धतिकाच्छ्ध्वनिका यत्र स्युस्तदिह काव्यमिति ।
युक्तं लयान्तैर्यच्च ध्वनिकास्थाननिर्मिते भवति ॥
काव्यमिति विविधरागं चित्रमिति तदुच्यते कृतिभिः ।
हरिहरभानुभवानीस्कन्दप्रमथाधिपस्तुतिनिबन्धः ॥

उद्धतकरणप्रायस्त्रीवर्जो वर्णनायुक्तः। धवलगुणकीर्तनपरैर्गाथारम्भादिभिरस्तुतिनिबन्धः ॥
गायनसहोक्तियुक्तो दत्तेन विभूषितप्रायः। त्रिचतुःपञ्चदितालैर्विश्रामैः सप्तभिःपरिच्छिन्नः ॥
अर्धोद्ग्राहनिवारणसंख्यातैः कुत्रचिन्नियतः। समत्रिश्रामैर्द्विपथैर्विभूषितःपञ्चमे विपरीवर्ते ॥
गाथामात्राद्विपथकपाठ्येनालंकृतो भवति। वर्णोऽथमत्तपाली सभग्नताला त्वनन्तरं गाथा ॥
अनुभग्नतालमात्रे प्रथमे स्याद्द्रुततालश्च। मात्रानुच मार्गणिका मात्राथ ततोऽनुभग्नतालश्च॥
गाथाद्विपदवहन्तो विश्रामे स्याद्वितीयेतु। मात्राविषमच्छिन्ना सभग्नतालाथ भवति रच्वा च॥
मार्गणिकेत्येवं स्यात्तालविधानं तृतीयेतु। मात्राद्विपथवहन्तोरच्वावस्थापनं चतुर्थे स्युः ॥
रच्वाथभग्नतालो मार्गणिकाद्विपथविषमश्च। पञ्चमके षष्ठेऽप्यथ रच्वा नुच भग्नतालःस्यात् ॥
द्विपथकमार्गणिकेच स्यातामथ सप्तमे शृणुथ। रच्वाथ भग्नतालश्शुद्धे भाणे क्रमःप्रदिष्टोऽयम् ॥

सङ्कीर्णभाणभणितिःकार्या स्यादुभयसंयोगात्।
किञ्चिदनुद्धतभावात्तालक्रमवर्जनाच्च चित्रोऽयम् ॥

इति शुद्धस्संकीर्णश्चित्रश्च मतस्त्रिधा भाणः। यदि वेषशुद्धवाचःशुद्धः संकीर्णयाथ संकीर्णः ॥
सर्वाभिर्भाषाभिश्चित्रैश्च विचेष्टितैश्चित्रैः।अयमुद्धतोऽथ ललितोभाणो ललितोद्धतश्च संभवति॥
अर्थानामौद्धत्याल्लालित्यादुभयभावाच्च। यद्दुष्करमभिनेयं चित्रं चात्युद्भटं च यद्भवति ॥
तद्भाणकेऽभिधेयं युतमनुतालैर्वितालैश्च। सोऽत्रैवान्तर्भाव्यो योभाणो नन्दिमालिनामास्यात्॥

भिन्नः कैश्चित्कथितो भरतमतं सम्यगविदित्वा।
आकाशपुरुषमुद्दिश्य वस्तु यत् पठ्यतेऽथवा क्रियते ॥
विश्लिष्टोद्भटभावप्रयोगमिह नन्दिमाली सः।
प्रायो हरिचरितमिदं स्वीकृतगाथादिवर्णमात्रश्च ॥
सुकुमारतः प्रयोगाद्भाणोऽपि हि भाणिका भवति।
दिव्याभिश्चारीभिर्विवर्जिता ललितकरणसंयुक्ता ॥
तालान्तरालनृत्ता क्वचिदपि रच्वादिसंकलिता।
अर्धोद्ग्राहनिवारणगायनसहवचनमत्तपालीभिः ॥
विश्रामैश्च विहीना स्त्रीयोज्या वर्जितैस्तालैः।
वस्तूनि भाणिकाया नव दश वा नियमतो विधीयन्ते ॥

नवमाद्यपञ्चमेषु स्थानेषु च भग्नतालः स्यात् ।
स्थानान्तरेषु चास्यां लयतालविधिर्यदृच्छया क्रियते ॥
विविधवचोविन्यासैस्सभ्यजनोत्साहसम्पत्तिः ।
गोष्ठे यत्तु विहरतश्चेष्टितमिह कैटभद्विषः किञ्चित् ॥
रिष्टासुरप्रमथनप्रभृति तदिच्छन्ति गोष्ठीति। यन्मण्डलेन नृत्तं स्त्रीणां हल्लीसकं तु तत्प्राहुः ॥
तत्रैको नेता स्याद्गोपस्त्रीणामिव मुरारिः। यस्य पदार्थाभिनयं ललितलयं सदसि नर्तकी कुरुते॥
तन्नर्तनकं शम्या लास्यच्छलिकद्विपद्यादि। रथ्यासमाजचत्वरसुरालयादौ प्रवर्त्यते बहुभिः॥
पात्रविशेषै यत्तत्प्रेक्षणकं कामदहनादि ॥
षोडश द्वादशाष्टौ वा यस्मिन्नृत्यन्ति नायिकाः। पिण्डीबन्धादिविन्यासै रासकं तदुदाहृतम् ॥
पिण्डनात्तु भवेत्पिण्डी गुम्भनाच्छंखला भवेत्। भेदेन भेद्यको जातो लताजालापनोदनः॥
एते नृत्तात्मना कार्या नाट्यवन्तः क्रियाविधौ । सुकुमारोद्धतैरङ्गैर्गायिकाभिर्विलक्षणा ॥
वाक्यस्था विधयो ह्येते पिण्ड्याद्या दश जातयः। न पदैरभिधीयन्ते अनुकार्यानुरूपिणः ॥
कामिनीभिर्भुवो भर्तुश्चेष्टितं यत्तु नृत्यते । रागाद्वसन्तमासाद्य स ज्ञेयो नाट्यरासकः ॥
चर्चरीति च तामाहुर्वर्णतालेन तत्र तु । प्रविशेत्कामिनीयुग्मं समचार्यादिशिक्षितम् ॥
वामदक्षिणसञ्चारैरङ्गैस्तेन परिष्कृतम् । ततस्तदेव वर्णं तदालीढद्वयसंस्थितम् ॥
छोटिकाभिर्द्रुतं तालं वादकानां प्रदर्शयेत् । पञ्चघातकसंज्ञोऽथश्छटस्तस्मात्प्रवर्तते ॥
नृत्तेन विभजेत्खण्डैश्चतुर्भिस्त्रिभिरेव वा । अन्योन्याङ्गिकसञ्चारैर्हस्ततालैर्मिथःकृतैः ॥
परिक्रम्य च निष्क्रामैस्ततोऽन्यद्द्वितयं विभोः। एककालं तु निस्सन्धिप्रवेशान्निर्गमस्तयोः॥
पुष्पाञ्जलिप्रयोगं तु मात्रातालेन योजयेत्। उभयोःपार्श्वयोः पश्चात्पात्राणि प्रविशन्ति च ॥
यद्दार्पणकतालेन रथ्यावर्णादिवर्णकैः । शुष्कगीतप्रयोगं तु ततो गायन्ति गायनाः ॥
लताख्यैर्भेदकैर्गुल्मैर्नानावृत्तप्रदर्शकैः । पात्रैरेकत्र संयुक्तं पिण्डीबन्धं तु कारयेत् ॥
ततो वल्लिनिकातालं शुष्कवर्णप्रयोगतः । मुग्जाक्षरवाद्यैस्तु हन्याद्दण्डं तु दण्डकैः ॥
एवं नृत्तक्रमेणान्यो ह्यपसारस्समाप्यते। अपसारत्रयं चान्यत्कल्प्यते साम्प्रतं मया ॥
तत्रापि पूर्ववन्नृत्तं कामतस्तु लयक्रमः । कथितो रासकप्रान्ते शुभार्थो वचनक्रमः ॥

लब्ध्वा दुग्धमहोदधौ सुरगणैः पीत्वाऽमृतं यस्तदा
पिण्डीशृंखलिकाविशेषविहितो युक्तो लताभेधकैः ।
चित्रातोद्यपदक्रमैर्लययुतो भेदद्वयालंकृतश्चारीखण्डसुमण्डलैरनुगतः सोऽयं मतो रासकः ॥

अथानभिनेयभेदाः । तेषु,

कन्यापहारसङ्गरसमागमाभ्युदयभूषितं यस्याम्। नायकचरितं ब्रूते नायक एवास्य वानुचरः॥

वक्त्रःपरवक्त्रवती सोच्छ्वासा संस्कृतेन गद्येन ।
साख्यायिकेति कथिता माधविका हर्षचरितादि ॥
नलसावित्रीषोडशराजोपाख्यानवत्प्रबन्धान्तः ।
अन्यप्रबोधनार्थं यदुपाख्याति तदुपाख्यानम् ॥
आख्यानकसंज्ञां तल्लभते यद्यभिनयन् पठन् गायन् ।
ग्रन्थिक एकः कथयति गोविन्दवदवहिते सदसि ॥

निश्चीयते तिरश्चमतिरश्चांवा यत्र चेष्टाभिः। कार्यमकार्यं वा तन्निदर्शनं पञ्चतन्त्रादि ॥
धूर्तविटकुट्टनीमतमयूरमार्जारिकादि यल्लोके। कार्याकार्यनिरूपणरूपमिह निदर्शनं तदपि॥
यत्र द्वयोर्विवादप्रधानमधिकृत्य जायते सदसि। सार्धप्राकृतरचितप्रवह्लिकाचेटकप्रभृति ॥
क्षुद्रकथामन्थुल्ली येह महाराष्ट्रभाषया भवति। गोरोचनेन कार्या सानङ्गवतीव वा कविभिः॥
यस्यामुपहासःस्यात्पुरोहितामात्यतापसादीनाम्। प्रारब्धानिर्वाहे सापिहि मन्थुल्लिका भवति॥

मणिकुल्यायां जलमिव न लक्ष्यते यत्र पूर्वतो वस्तु ।
पश्चात्प्रकाशते सा मणिकुल्या मत्स्यहसितादि ॥
या नियमितगतिभाषा दिव्यादिव्योभयेति वृत्तवती ।
कादम्बरीव लीलावतीव वा सा कथा कथिता ॥

पर्यायेण बहूनां यत्र प्रतियोगिनां कथाकुशलैः। श्रूयन्ते शूद्रकवज्जिगीषुभिःपरिकथा सा तु॥
ग्रन्थान्तरप्रसिद्धं यस्या मितिवृत्तमुच्यते विबुधैः । मध्यादुपान्ततो वा सा खण्डकथा यथेन्दुमती ॥

यत्राश्रित्य कथान्तरमतिप्रसिद्धं निबध्यतेकविभिः। चरितं विचित्रमन्यत्सोपकथा चित्रलेखादि॥

लम्भाङ्किताद्भुतार्था पिशाचभाषामयी महाविषया ।
नरवाहनदत्तादेश्चरितमिव बृहत्कथा भवति ॥
आख्यायिकैव साङ्का सोच्छ्वासा दिव्यपद्यगद्यमयी ।
सा दमयन्ती वासवदत्तादिरिहोच्यते चम्पूः ॥

यस्मिन्नितिहासार्थाश्छन्दोभिस्संस्कृतेन बध्यन्ते। बहवःसपर्वबन्धो भवति महाभारतप्रभृतिः॥
यत्रेतिहासमखिलं यथास्थितं चैकमेव भाषन्ते। ऋषयस्सकाण्डबन्धो रामायणसन्निभो भवति॥

यस्मिन्नितिहासार्थानपेशलान्पेशलान्कविः कुरुते ।
स हयग्रीववधादिप्रबन्ध इव सर्गबन्धः स्यात् ॥

यःसर्गबन्धतुल्या निबध्यते प्राकृतेन शुद्धेन। आश्वासकबन्धोऽसौ विज्ञेयः सेतुबन्धादिः॥

योऽपभ्रंशनिबन्धो मात्राच्छन्दोभिरभिमतोऽल्पधियाम् ।
वाच्यस्स सन्धिबन्धश्चतुर्मुखोक्ताब्धिमथनादि ॥
य इह द्विचारिकावाग्ग्राम्यगिरा गीयते गभीरोक्तः ।
सोऽवस्कन्धकबन्धोऽभिधीयते भीमकायादि ॥
यत्रार्थशास्त्राणां काव्ये विनिवेश्यते महाकविभिः ।
तद्भट्टिकाव्यमुद्राराक्षसवत्काव्यशास्त्रं स्यात् ॥
शास्त्रं यत्र कवीनां रहस्यमुपकल्पयन्त्यनल्पधियः ।
तद्रतिविलासकामन्दकीयवच्छास्त्रकाव्यं तु ॥
कोश इव यत्सुभाषितरत्नसमूहात्मकः समुद्ध्रियते ।
महतः काव्याम्भोधेः सकोश इव सतशतिकादि ॥

एकप्रघट्टके यस्त्वेककृतो भवति सूक्तिसमुदायः। सङ्घातस्स निगदितो बृन्दावनमेघदूतादि॥
यस्यां सन्धीयन्ते मनीषिभिर्विप्रकीर्णवृत्तान्ताः। सा संहितेति गदिता यदुवंशदिलीपवंशादि॥
यस्मिन्नशेषविद्यास्थानार्थविभूतयः प्रकाशन्ते। संहत्य स साहित्यप्रकाश एतादृशो भवति॥

एतस्मिन् शृङ्गारप्रकाशे सुप्रकाशमेवाशेषशास्त्रार्थसम्पदुपनिषदा मखिलकलाकाव्यौचित्य-कल्पनारहस्यानां च सन्निवेशो दृश्यते । अथैतेषामुभयेषामपि प्रबन्धस्कन्धभेदानामवैशेषिको वैशेषिकश्च गुणालंकारलक्षणयोगो रसावियोगहेतुर्भवति । तत्र गुणो द्वेधा— शब्दगुणोऽर्थगुणश्च ।

अलंकारोऽपि शब्दालंकारोऽर्थालंकारश्च। ताभ्यामुभयगुणालंकारो व्याख्यातः। त एते गुणालंकाराश्चाविशेषेण लक्षणं तु त्रिविधमपि विशेषेण व्याख्यायन्ते। तत्र महाकाव्यादौ यथासम्भवं संक्षिप्तग्रन्थत्व मविषमबन्धत्व मनतिविस्तीर्णसर्गादित्व श्लिष्टसन्धित्वं चेति शब्दगुणाः। चतुर्वर्गफलायत्तत्वं चतुरोदात्तनायकत्वं रसभावनिरन्तरत्वं विधिनिषेधव्युत्पादकत्वं सुसूत्रसंविधानकत्व मित्यर्थगुणाः। रसानुरूपसन्दर्भत्वं पात्रानुरूपभाषत्व मर्थानुरूपच्छन्दस्त्वं समस्तलोकरञ्जकत्वं सदलंकारवाक्यत्व मित्युभयगुणाः, नमस्काराद्युपक्रमत्वं संबन्धादिमदादिवाक्यत्वं दुष्करसंस्कृतादिवाक्यत्वं भिन्नवृत्तसर्गान्तत्वं कविभावांकितसमाप्तित्वमिति शब्दालंकाराः। नगराश्रमशैलसैन्यावासार्णवादिवर्णनं, ऋतुरात्रिन्दिवार्कास्तमयचन्द्रोदयादिवर्णनं, नायकनायिकाकुमारसहायवाहनादिवर्णनामन्त्रदूतप्रयाणसङ्ग्रामाभ्युदयादिवर्णनं वनविहारजलक्रीडामधुपानमानापगमरतोत्सवादिवर्णनमित्यर्थालंकाराः। बीजबिन्दुपताकाप्रकरीकार्योपक्षेपनं गर्भाङ्कचूलिकांकावतारविष्कम्भप्रवेशकविधानं देशकालपात्रचेष्टाकथान्तरानुषञ्जनं द्विसंधानमार्गद्वयानुवर्तनमित्युभयालंकाराः। तत्रासंक्षिप्तग्रन्थत्वमित्यनेन ग्रन्थगौरवमाचक्षाणः कथारसविच्छेदशंकिनां मनांस्यावर्जयति। अविषमबन्धत्वमित्यनेन शब्दसन्दर्भवेदिनां मनोमुदमादधाति। श्रव्यवृत्तत्वमित्यनेन यद्यपि पद्यभेदत्वान्महाकाव्यादेः सर्वादिचतुष्पदी समाकृष्टा। तथापि यान्येव श्रुतिसुखमुत्पादयन्ति वृत्तानि तान्येव निबन्धनीयानीति दर्शयन् श्रोतृजनं प्रोत्साहयति। अनतिविस्तीर्णसर्गादित्वमित्यनेन ग्रन्थविस्तरभीरूणां चित्तमाकर्षयति। सुश्लिष्टसन्धित्वमित्यनेन तु सर्गादीनां परस्परमेकवाक्यतया महावाक्यात्मकस्य प्रबन्धस्योपकारित्वं दर्शयति। चतुर्वर्गफलायत्तत्वमित्यनेन चत्वारो वर्गा धर्मार्थकाममोक्षा स्तएव व्यस्ताः समस्ता वा फल तत्साधनोपायविषयं महाकाव्यादीति ज्ञापयन्मुक्तकादिभ्यो भेदमाचष्टे। चतुरोदात्तनायकत्वमित्यनेन कथाशरीरव्यापिनो नायकस्य धर्मार्थकाममोक्षेषु वैचक्षण्यमभिदधान आशयविभूत्योरप्युत्कर्षमभिदधाति। रसभावनिरन्तरत्वमित्यनेन रसग्रहणेनापि तत्कारणभूतानां भावानां परिग्रहे पृथग्भावग्रहणेन रसभावानां परस्पर कार्यकारणभावमभिदधद्रसेभ्यो भावा भावेभ्यो रसा रसेभ्यश्च रसा इति नैरन्तर्यस्य रसभावबहुत्वस्याभ्यासेन भोजनस्येवैकरसस्य प्रबन्धस्यापि वैरस्यमपाकरोति। विधिनिषेधव्युत्पादकत्वेन तु गुणवतो नायकस्योत्कर्षप्रकाशनेन दोषवतश्चोच्छेदप्रदर्शनेन जिगीषुणा गुणवतैव भाव्यं न दोषवतेति व्युत्पादयति। सुसूत्रसंविधानकत्वमित्यनेन प्रोक्तलक्षणा वक्ष्यमाणलक्षणाश्च पदार्थास्तथा निबन्धनीयाः, यथा प्रबन्धस्य शोभायै च भवन्तीति कवीन् शिक्षयति। रसानुरूपसन्दर्भत्वमित्यनेन रतिप्रकर्षे कोमल उत्साहप्रकर्षे प्रौढः क्रोधप्रकर्षे कठोरः शोकप्रकर्षे मृदुः विस्मयप्रकर्षे तु स्फुटः शब्दसन्दर्भो विरचनीय इत्युपदिशन् 'नैकमोजः प्रकाशो वा रसभावविदः कवे' रिति ख्यापयति। पात्रानुरूपभाषत्वमित्यनेन उत्तमपात्राणि संस्कृतेन उत्तमाधराणि प्राकृतेन मध्यमानि शौरसेन्या जघन्यान्यपभ्रंशेन तदपराणि मागधिकया भाषन्त

इति ज्ञापयन्नभिन्नसर्गेषु भाषाचित्राणामवकाशं ददाति । अत्रानुरूपच्छन्दस्त्वमित्यनेन शृङ्गारे द्रुतविलम्बितादयो वीरे वसन्तादयः करुणे वैतालीयादयः रौद्रे स्रग्धरादयः सर्वत्र शार्दूल-विक्रीडितादयो निबन्धनीया इत्युपदिशति । समस्तलोकरञ्जकत्वमित्यनेन अलौकिकतां परिहरन् कीर्तिप्रीतिनिबन्धनस्य प्रबन्धस्य लोके प्रतिष्ठया कवेः प्रयासवैयर्थ्यमपाकरोति । सदलङ्कार-वाक्यत्वमित्यनेन तु यद्युपात्तलक्षणानां शब्दार्थोभयगुणानां स्वरूपसौन्दर्येणैव काव्यशोभाकरत्वं तथाप्यलङ्कारवत्त्वेनैव भारमुद्वोढु मलमित्येतदुपर्युपरिदेशेनोपपादयति । तेऽमी शब्दार्थोभयगुणा महाकाव्येषु रसावियोगहेतवो भवन्ति । एवमलङ्कारा अपि । तत्र, नमस्काराद्युपक्रममित्यनेन नमस्कारस्तुतिराशीर्वस्तुनिर्देशो वस्तूपक्षेप इत्युपलक्ष्यन्ते । तत्र नमस्कारो यथा हर्षचरिते—

नमस्तुङ्गशिरश्चुम्बिचन्द्रचामरचारवे । त्रैलोक्यनगरारम्भमूलस्तम्भाय शम्भवे ॥

स्तुतिर्यथा रघुवंशे—

वागर्थाविव सम्पृक्तौ वागर्थप्रतिपत्तये । जगतः पितरौ वन्दे पार्वतीपरमेश्वरौ ॥

आशीर्यथा हरविलासे—

ओमित्येतत्परं ब्रह्म श्रुतीनां मुखमक्षरम् । प्रसीदतु सतां स्वान्ते प्वेकं त्रिपुरुषीमयम् ॥

वस्तुनिर्देशो यथा हयग्रीववधे—

आसीद्दैत्यो हयग्रीवः सुहृद्वेश्मसु यस्य ताः । वदन्ति स्म बलं बाह्वोःसितच्छत्रसिताःश्रियः ॥

वस्तूपक्षेपो यथा मारीचवधे—

मअवहणिमित्तणिग्गअमइन्दसुण्णं गुहं णिएऊण ।
लद्धावसरो गहिउण मोत्तिआइं गओ वाहो ॥

[मृगवधनिमित्तनिर्गतमृगेन्द्रशून्यां गुहां निरूप्य । लब्धावसरो गृहीत्वा मौक्तिकानि गतो व्याधः ॥]

संबन्धादिमदादिवाक्यत्वमित्यनेन स्ववंशादिकीर्तनं वक्तव्यार्थप्रतिज्ञानं तत्प्रयोजनोपन्यासः कविप्रशंसा दुर्जनसुजनस्वरूपमित्यादयः संगृह्यन्ते । तत्र स्ववंशादिकीर्तनं यथा कादम्बर्याम्—बभूव वात्स्यायनवंशसंभव इत्युपक्रम्य,

द्विजेन तेनाक्षतकण्ठकौण्ठ्यया महामनोमोहमलीमसान्धया ।
अलब्धवैदग्ध्यविलासमुग्धया धिया निबद्धेयमतिद्वयी कथा ॥

वक्तव्यार्थप्रतिज्ञानं यथा सेतुबन्धे—

तत्तिअसमबन्दिमोक्खं समंततेल्लोक्क हिअअसल्लुद्धरणं ।
सुणहअसुराअइइंघसि आआदुक्खस्स अअं दहमुहस्सपहा ॥

[तं त्रिदशबन्दिमोक्षं समस्तत्रैलोक्यहृदयशल्योद्धरणम् ।
शृणुतानुरागचिह्नं सीतादुःखक्षयं दशमुखस्य वधम् ॥]

प्रयोजनोपन्यासो यथा तत्रैव—

परिवड्ढइ विण्णाणं संभाविज्जइ जसो विढप्पंति गुणा ।
सुव्वइ सुउरिसचरिअं किं तं जेण णहरंति कव्वालावा ॥

[परिवर्धते विज्ञानं संभाव्यते यशोऽर्ज्यन्ते गुणाः। श्रूयते सुपुरुषचरितं किंतद्येन न हरन्ति काव्यालापाः॥]

प्रतिप्रशंसा यथा रावणविजये-

सअलं चेअणिबन्धं दोहिंवएहिकलुसं पसण्णं पठिअं ।
जाणंति कइणं कईसुद्धसहावेहि लोअणेहिंवहिअअं ॥

[सकलं चेतोनिबन्ध दोषैरप्यकलुषं प्रसन्नं पठितम् ।
जानन्ति कवीनां कति शुद्धस्वभावैः लोचनैरिव हृदयम् ॥]

दुर्जनसुजनस्वरूपं यथा कादम्बर्याम् —

कटु क्वणन्तो मलदायकाः खलास्तुदन्त्यलं बन्धनशृंखला इव ।
मनस्तु साधु ध्वनिभिः पदेपदे हरन्ति सन्तो मणिनूपुरा इव ॥

दुष्करसमसंस्कृतादिसर्गत्वमित्यनेन गोमूत्रिकामुरजबन्धैकाक्षरपादयमकभाषाचित्रादय उपलक्ष्यन्ते । तेषु गोमूत्रिका यथा किरातार्जुनीये-

नासुरोऽयं नवा नागो धरसंस्थो न राक्षसः। नासुखोऽयं नवाभोगो धरणीस्था हि राजसः॥

मुरजबन्धो यथा शिशुपालवधे -

सासेना गमनारम्भे रसेनासीदनारता । तारनादजनामत्तधीरनागमनामया ॥

एकाक्षरपादो यथा—

जजौजोजाजिजिजाजि तंततोतिततोतितुत् । भाभोभीभाभिभूभाभूरारारिरिरिरीररः ॥

यमकं यथा तत्रैव-

पृथोरप्यक्षिपद्रुक्मी यया चापमुदायुधः । तयैव वाचापगमं यया चापमुदायुधः ॥

भाषाचित्रं मालतीमाधवे —

किं वा भणसि विच्छेददारुणायासकारिणि। कामं कुरु वरारोहे दृढं मे परिरम्भणम् ॥

भिन्नवृत्तसर्गान्तत्वमित्यनेन भिन्नपर्वान्तत्व भिन्नकाण्डान्तत्वं भिन्नसर्गान्तत्वं भिन्नाश्वासान्तत्व भिन्नसन्ध्यन्तत्वमित्यादीन्युपगृह्यन्ते । सर्गग्रहणस्य छत्रिणो गच्छन्ती तिवत्सहचरितोपलक्षणत्वात् । एतेन वृत्तग्रहणेन न केवल गणच्छन्दो मात्राक्षरच्छन्दोऽपि परिगृहीतं भवति ।

ननु चाश्वासकबन्धेषु तत्समाप्तावपि न च्छन्दोभेद उपलभ्यते । तथा हि, रावणविजयहरिविजयसेतुबन्धेष्वादितस्समाप्तिपर्यन्तमेकमेव च्छन्दो भवति । गलितकानि तु तत्र व्यासकृद्-

यत्कैरपि विदग्धमानिभिरुपक्षिप्तानीति तद्विदो भाषन्ते । मैवम्; मात्राच्छन्दसां स्कन्धकादीनां छन्दोविचितिष्वेकैकस्याप्यनन्तभेदत्वात् । अन्ये तु भिन्नवृत्ताः सर्गान्ताः पर्वकाण्डसर्गा एतेष्विति व्याचक्षते । तेनायमर्थः संपद्यते पर्वणिपर्वणि काण्डेकाण्डे सर्गे सर्गे चान्यदन्यच्छन्दो निबन्धनीयमिति, आश्वासकसन्धिबन्धयोस्तु सर्वत्र एकमेव च्छन्दो भवति । तत्र सम्यक् आश्वासकान्ते पुष्पिताग्रा ।

भगवति शयिते विभावरीणां द्युतिमपहृत्य यशोविभावरीणाम् ।
गतमससितया विभावरीणां सघनमहस्समताविभावरीणाम् ॥

सन्धिबन्धेषु नाराचतोटकादीनि विचित्राणि च्छन्दांसि दृश्यन्ते । एतेनैव चानुष्टुप्छाल्यादिना छन्दसा बहवः सर्गकाण्डादयो रघुवंशे रामायणादिषूपलभ्यन्ते । तस्मादुपक्रान्तवृत्तव्युदासेन सर्गादीनां वृत्तान्तैरुपसंहारः कर्तव्य इत्येतदेव व्याख्यानं श्रेयः । तद्यथा कुमारसंभवे—

अथ सललितयोषिद्भ्रूलताचारुशृङ्गं रतिवलयपदाङ्के चापमासज्य कण्ठे ।
सहचरमधुहस्तन्यस्तचूतांकुरास्त्रः शतमख मुपतस्थे प्राञ्जलिः पुष्पधन्वा ॥

कविभावाङ्कितसमाप्तिवाक्यत्वमित्यनेन स्वाभिप्रायाङ्कता स्वनामाङ्कता इष्टनामाङ्कता मङ्गलाङ्कता आशंसाङ्कता च संगृह्यन्ते । तेष्वभिप्रायाङ्कता यथा— धैर्यमाद्यराजस्य उत्साहः सर्वसेनस्य अनुरागःप्रवरसेनस्येति । स्वनामाङ्कता यथा— स्वप्रबन्धेषु गोविन्दचतुर्मुखादीनां यथा च राजशेखरस्य हरविलासे । इष्टनामाङ्कता यथा— लक्ष्म्यङ्कता किराते भारवेः, श्र्यङ्कता शिशुपालवधे माघस्य, चतुर्मुखगोविन्दचन्द्रशेखरेष्टदेवतानामाङ्कता च पूर्वोक्तेषु पूर्वोक्तानामिति । मङ्गलाङ्कता यथा— अभ्युदयः कृष्णचरिते, जय उदाहरणे, आनन्दः पञ्चशिखशूद्रककथायामिति । आशंसा धर्मार्थकाममोक्षविषया । तासु धर्मविषया यथा उत्तरचरिते—

पाप्मभ्यश्च पुनाति वर्धयति च श्रेयांसि येयं कथा
मङ्गल्या च मनोहरा च जगतां मातेव गङ्गेव च ।
तामेतां परिभावयन्त्वभिनयैर्विन्यस्तरूपां त्रिधा
शब्दब्रह्मविदः कवेः परिणतप्रज्ञस्य वाणीमपि ॥

अर्थविषया यथा—

परस्परविरोधिन्योरेकसंश्रयदुर्लभम् । संगतं श्रीसरस्वत्यो र्भूतयेऽस्तु सतां भुवि ॥

कामविषया यथा—

मम हृदयमशङ्कितव्यलीकं समसुखदुःखजातविप्रयोगम् ।
अनुभवतु मुदः स देवयूनांमिथुन मभीष्टतमास्तवप्रसादात् ॥

मोक्षविषया यथा—

प्रवर्ततां प्रकृतिहिताय पार्थिवाः सरस्वती श्रुतिमहतां महीयसाम् ।
ममापि च क्षपयतु नीललोहितः पुनर्भवं परिगतशक्तिरात्मभूः ॥

एतेनान्यदपि व्याख्यातम् । तद्यथा—

यावल्लीलावतीनामनणुमणिरणत्किङ्किणीकाणकूज-
त्काञ्चीदामोपनद्धाः पृथुजघनतटीः पञ्चबाणोऽधिशेते ॥

नगराश्रमशैलसैन्यावासार्णववर्णनमित्यनेनार्थालङ्कारेषु प्रदेशप्रशंसामुपदिशति । अत्र नगरवर्णनं यथा सेतुबन्धहरिविजयशिशुपालवधकुमारसंभवादौ । आश्रमवर्णनं यथा रघुवंश-किरातार्जुनीयकादम्बरीशाकुन्तलादौ । शैलवर्णनं यथा किरातार्जुनीयशिशुपालवधसेतुबन्ध-हरिविजयादौ । सैन्यर्तुरात्रिन्दिवार्कास्तमयचन्द्रोदयादिवर्णनमित्यनेन कालावस्थोपवर्णनं लक्ष्यते । तत्रर्तुवर्णनेन शरद्वसन्तग्रीष्मवर्षादिवर्णनानि सेतुबन्धहरिविजयरघुवंशहरिवंशादौ, रात्रिवर्णनं यथा किरातार्जुनीयकुमारसम्भवशिशुपालवधहयग्रीववधादौ, दिवसवर्णनं प्रभातपूर्वाह्णापराह्ण-मध्याह्नवर्णनानि, चन्द्रोदयवर्णनं यथा कुमारसम्भवकिरातार्जुनीयशिशुपालवधसेतुबन्धादाविति । नायकनायिकाकुमारसहायवाहनादिवर्णनमित्यनेन पात्रविशेषाभिवन्दनं सूचयति । तत्र नायक-वर्णनं यथा हरिविजयहरविजयजानकीहरणरघुवंशादौ । नायिकावर्णनं यथा कुवलयाश्वचरित-कुमारसम्भवजानकीहरणसुभद्राहरणादौ । कुमारवर्णनं यथा रघुवंशोत्तरचरितकादम्बरीहर्ष-चरितादौ । सहायवर्णनं यथा रामायणमहाभारतबृहत्कथामालतीमाधवादौ । वाहनवर्णनं यथा हर्षचरितकादम्बरीहरिविजयरावणविजयादौ । हस्त्यश्वरथपुष्पकादिवर्णनादिमन्त्रदूतप्रयाण-सङ्ग्रामाभ्युदयवर्णनमित्यनेन अर्थप्रधाने चेष्टानामुपदेशाच्चतुर्वर्गफलत्वेऽपि भूयसार्थोपदेशकृन्महा-काव्यादिकं भवतीत्यभिधत्ते । पुरुषकारायत्तां च नायकस्य सिद्धिं सूचयति । तत्र मन्त्रः पञ्चाङ्गः । कर्मणामारम्भोपायः पुरुषद्रव्यसम्पत् देशकालविभागः विनिपातप्रतीकारः कार्यसिद्धिश्चेति । स यथा किरातार्जुनीयशिशुपालवधहयग्रीववधभट्टिकाव्यादौ ।

दूतस्त्रिधा निसृष्टार्थः परिमितार्थः शासनहरश्च । तत्र निसृष्टार्थो यथा, उद्योगपर्वणि वासुदेवः, हरिविजये वा सत्यकः । परिमितार्थो यथा, रामायणेऽङ्गदः । शासनहरो यथा, कादम्बर्यां केयूरक इति । प्रयाणं त्रिधा · स्वशक्त्युपचये परव्यसने अभिमतार्थसिद्धये च । ..[1]. सरो शिशुपालस्योच्छेदाय वासुदेवस्य शिशुपालवधे, अभिमतार्थसिद्धये यथा विष्णोः पारिजातहरणाय हरिविजये, यथा वा दिव्यास्त्रलाभायार्जुनस्य किरातार्जुनीय इति । सङ्ग्रामस्त्रिधा, समो विषमः समविषम इति । तत्र समो द्वन्द्वयुद्धे चतुरङ्गयुद्धे च । द्वन्द्वयुद्धं यथा, रामरावणयोः । चतुरङ्गं यथा कुरुपाण्डवानाम् । विषमो यथा रामस्य खरदूषणत्रिशिरोभिः । स तु,

[1] स्खलितम्.

चतुर्दशसहस्राणि चतुर्दश च रक्षसाम् । हतान्येकेन रामेण मानुषेण पदातिना ॥

समविषमो यथा, महेश्वरार्जुनयोः किरातार्जुनीये, रघुमघोनोर्वा रघुवंश इति ।

अभ्युदयस्त्रिधा– अरिविजयः, स्त्रीलाभः, पुत्रोत्पत्तिरिति । तत्रारिविजयो द्विधा, शत्रुच्छेदेन तदुपरत्या च । स पूर्वो यथा रावणवधादौ । द्वितीयो यथा हरिविजयादौ । स्त्रीलाभो यथेन्दुमतीस्वयंवरे । पुत्रलाभो यथा दिलीपस्य रघुवंश इति । वनविहारजलक्रीडामधुपानारामरतोत्सवादिवर्णनमित्यनेन रसोद्दीपनविभावस्य संभोगशृङ्गारस्य उपदेशान्मन्त्रद्यूतप्रयाणसङ्ग्रामाभ्युदयादिभिस्तांस्तानर्थानधिगम्य तैस्तैर्विलासविशेषैः कामसेवया तदुपयोगः कर्तव्य इति शिक्षयति । तत्र वनविहारो द्विधा– मृगयादिभिः पुष्पापचयादिभिश्च । तत्राद्यो यथा दशरथस्य रघुवंशे दुष्यन्तस्य शाकुन्तले । द्वितीयो यथा यदूनां शिशुपालवधे, अप्सरसां वा किरातार्जुनीये इति । जलक्रीडा द्विधा एकस्य वा बह्वीभिस्त्वयोषाभि र्बहूनां वा बह्वीभिः यथाङ्गनाभिः । तत्राद्या यथा कार्तवीर्यस्य नर्मदायां कुशस्य वा सरय्वाम् । द्वितीया यथा अप्सरसां वा सिद्धसिद्धौ, यदूनां वा रैवतकह्रद इति । मधुपानं द्विधा, गोष्ठीगृहे वासभवने च । तत्राद्यं यथा हरिविजये शिशुपालवधे च । द्वितीयं यथा कुमारसम्भवे किरातार्जुनीये च । मानापगमो यथा रामातङ्कासिशाचरीणां सेतुबन्धे, यथा वा मलयमारुतेन्दूदयादिभ्यो महाप्रबन्धेषु । रतोत्सवोऽपि द्विधा सामान्यतो विशेषतश्च । सामान्यतो यथा किरातार्जुनीये शिशुपालवधे च । विशेषतो यथा कुमारसंभवे जानकीहरणे चेति । बीजबिन्दुपताकाप्रकरीकार्यपरिकल्पनमित्यनेन यत्र पञ्चानामर्थप्रकृति . . . . वासनं यत्र स्यात्तद्बीजमिह कीर्तितम् । तद्यथा–

धूर्तैर्यद्विवशीकृतो वररुचिः सर्वज्ञकल्पोऽपि सन्
जीवन्नेव पिशाचतां च गमितो भर्त्स्यु र्यदभ्यर्च्यधीः ।
छन्दोगोऽयमिति प्रभाकरगुरुर्देशाच्च निर्वासितो
मद्वृत्तान्तविजृम्भितेन महता तत्सर्वमल्पीकृतम् ॥

प्रयोजनानां विच्छेदे यदविच्छेदकारणम् । यावत्समाप्तिसम्बन्धः स बिन्दुरिति कीर्तितः ॥

यथा—

ध्वस्ताः क्षुद्राः धार्तराष्ट्रास्समस्ताः पीतं रक्तं स्वादु दुश्शासनस्य ।
पूर्णा कृष्णाकेशबन्धप्रतिज्ञा तिष्ठत्येकः कौरवस्योरुभङ्गः ॥

यस्यावृत्तं परार्थःस्यात्प्रधानस्योपकारकम् । आत्मानुबन्धफलवत्सापताकेति कीर्तिता ॥

यथा—

दिष्ट्या सैष महाबाहुरञ्जनानन्दवर्धनः । यस्य वीर्येण कृतिनो वयं च भुवनानि च ॥

फलं प्रकल्पते यस्याः परार्थायैव केवलम्। अनुबन्धविहीनां तां प्रकरीति विनिर्दिशेत् ॥

यथा—

सन्ध्याभ्रकपिशस्तत्र विराधो नाम राक्षसः। अतिष्ठन्मार्गमावृत्य रामस्येन्दोरिव ग्रहः ॥

यदाधिकारकं वस्तु सम्यक्प्राज्ञैः प्रयुज्यते। यदर्थश्च समारम्भस्तत्कार्यमिति कीर्तितम् ॥

यथा—

आज्ञा कृता गुरूणां सुहृद्भिरपरिक्षतैरहं युक्तः। दृष्टो भगवान्साक्षा देवी प्राप्ता प्रियं किमतः॥

यथा त्वेकद्वित्रिलोपे नियम उच्यते –

एकलोपे चतुर्थस्य द्विलोपे त्रिचतुर्थयोः। द्वितृतीयचतुर्थानां त्रिलोपे लोप इष्यते ॥

तत्र,

बीजार्थयुक्तिमानङ्को योऽङ्केष्वेकःप्रयुज्यते। स नाटकेषु गर्भाङ्कोऽङ्कावतारश्च कथ्यते ॥

यथा बालरामायणे—

श्रवणैः श्रव्यमनेकैर्दृश्यं दीर्घैश्च लोचनैर्बहुभिः। भवदर्थमिव निबद्धनाट्यं सीतास्वयंवरणम्॥

अन्तर्यवनिकासंस्थैः सूतादिभिरनेकधा। अर्थोपक्षेपणं यत्र क्रियते सा हि चूलिका ॥

यथा वेणीसंहारे नेपथ्ये—

आचार्यस्य त्रिभुवनगुरोर्न्यस्तशस्त्रस्य शोकाद्द्रोणस्याजौ नयनसलिलच्छादिताक्षाननस्य।
मौलौ पाणिं पलितधवले न्यस्य कृत्वा नृशंसं धृष्टद्युम्नः स्वशिबिरमयं याति सर्वे सहध्वे ॥

विशिष्टमुखमङ्कस्य स्त्रिया वा पुरुषेण वा। यदुपक्षिप्यते पूर्वं तदङ्कमुखमुच्यते ॥

यथा मालतीमाधवे— अवास्मि सौदामनी भगवतः श्रीपर्वतादुपैस्यैत्यादि नीचमध्यमपात्रा। भगवती कामन्दकी। अपि नाम कल्याणिनोरनयो र्भूरिवसुदेवरातापत्ययो र्मालतीमाधवयोरभिमतः पाणिग्रहः स्यादित्यादि।

हीनाभ्यामेव पात्राभ्यामङ्कादौ यः प्रयुज्यते। प्रवेशकस्स विज्ञेयः शौरसेन्यादिभाषया ॥

यथा— ततः प्रविशतश्चेट्यौ। एका – सहि संगद जाण उत्तंतो भअवदीए णिवेदिदो इत्यादि। देशकालपात्रचेष्टाकथान्तरानुषञ्जनमित्यनेनापरिपूर्णाङ्गेनापि संविधानदेशकालाद्यविरोधेन तद्वर्णनादिकं निर्दिशति। तत्र देशान्तरानुषञ्जनं यथा शिशुपालवधे—

मुदे मुरारेरमरैः सुमेरोरानीय यस्योपचितस्य शृङ्गैः।
भवन्ति नोद्दामगिरां कवीनामुच्छ्रायसौन्दर्यगुणा मृषोद्याः ॥

कालान्तरानुषञ्जनं यथा किरातार्जुनीये—

संपदि हरिनखैर्वधूनिदेशाद्ध्वनितमनोरथवल्लकीमृदङ्गैः ।
युगपदृतुगणस्य सन्निधानं वियति वने च यथायथं वितेने ॥

पात्रान्तरानुषञ्जनं यथा —

करिष्यसे यत्र सुदुश्चराणि प्रसत्तये गोत्रभिदस्तपांसि ।
शिलोच्चये चारुशिलोच्चयं तमेष क्षणान्नेष्यति गुह्यकस्त्वाम् ॥

चेष्टान्तरानुषञ्जनं यथा—

मदस्रुतिश्यामितगण्डरेखाः क्रामन्ति विक्रान्तनराधिरूढाः ।
सहिष्णवो नेह युधामभिज्ञा नागा नगोच्छ्रायमिव क्षिपन्तः ॥

कथान्तरानुषञ्जनं यथा कुमारसम्भवे-

कुसुमायुधपत्नि दुर्लभस्तव भर्ता न चिराद्भविष्यति ।
शृणु येन गतः स कर्मणा शलभत्वं हरलोचनार्चिषि ॥

द्विसन्धानमित्यनेन वाक्यप्रकरणप्रबन्धानामनेकार्थानुसन्धानेन कवेः शक्तिविशेषं व्यञ्जयति। तत्र किञ्चिदेकमेव वाक्यं प्रकरणं प्रबन्धो वा द्वयोरर्थयोस्संगच्छते । किञ्चिदभिन्नार्थमेवोच्यमानमनेकेन श्रोत्रा संबन्धमनुभवति । किञ्चित्पुनरेकमुद्दिश्याभिधीयमानमर्थभेदादन्येनापि संबध्यते। तत्राद्यस्योदाहरणं यथा मालतीमाधवे— सुश्लिष्टगुणतया रमणीय एव सन्निवेशः । कुतूहलिनी च नो भर्तृदारिका । वर्तते च तस्यामभिनवो विचित्रः कुसुमेषुव्यापारस्तद्भवतु कृतार्थता वैदग्ध्यस्य फलतु निर्माणस्य रमणीयता समासादयतु सरस एव भर्तृदारिकायाः कर्णोत्पललम्बनमहार्घतामिति। द्वितीयस्य यथा शिशुपालवधे—

दमघोषसुतेन कश्चन प्रतिशिष्टः प्रतिभानवानथ ।
उपगम्य हरिं सदस्यदः स्फुटभिन्नार्थमुदाहरद्वचः ॥

तृतीयस्य यथा दण्डिनो धनञ्जयस्य वा द्विसन्धानप्रबन्धौ रामायणमहाभारतार्थावनुबध्नाति । चतुर्थस्य यथा कुमारसम्भवे—

स्वागतं स्वानधीकारान्प्रभावैरवलम्ब्य वः । युगपद्युगबाहुभ्यः प्राप्तेभ्यः पूज्यविक्रमाः ॥

इत्यादि । प्रकरणं चतसृष्वपि दिक्ष्ववस्थितैर्दिवौकोभिर्ब्रह्मणाभिधीयमानमभिसंबध्यते । पञ्चमस्य यथा कीचकवधे— द्रौपदी विराटमभिभाषमाणा तेनैव वाक्येन युधिष्ठिरादीनभिभाषत इति ।

मार्गद्वयानुवर्तनमित्यनेन महाकवीनां समयमुपलक्षयति । तत्र—

गुणतःप्रागुपन्यस्य नायकं तेन विद्विषाम् । निराकरणमित्येष मार्गः प्रकृतिसुन्दरः ॥

वंशवीर्यश्रुतादीनि वर्णयित्वा रिपोरपि । तज्जयान्नायकोत्कर्षकथनं च धिनोति नः ॥ ८०

किं पुनरयं नायकेन रिपोरुच्छेदः क्रियमाणो दोषवतो वा स्याद्गुणवतो वा । किञ्चातः यदि दोषवतस्तदा तत एवोच्छेदः । नहि शीर्यमाणनदीतटोपविष्टप्रक्षेपणे पुरुषकारः साफल्यमनुभवति । तदुक्तं, काष्ठमिव च घुणजग्धमविनीतपुत्रं राजकुलमवियुक्तमात्रं भज्येत । नापि गुणवतः तस्यानुच्छेद्यत्वात् नायकस्य योषितो वा न कश्चिद्विशेष इति । नैवं ; विधिनिषेधव्युत्पत्तिफलत्वात् प्राधान्यम् । तथाहि, रामायणादिषु गुणवतो नायकस्य उत्कर्षदर्शनेन दोषः को हि ? गुणार्जनं प्रतीयते । यदि गुणवतोऽप्युच्छेदः स्यात्, अपि च गुणत्वे तुल्ये एकस्य जयोऽन्यस्य पराजय इति नियमनिमित्तमभिधानीयं तदान्तरेण दैवं भवितुमर्हति । देवसंपादितायां च सिद्धौ पुरुषकारशून्यस्य नायकस्य योषितो वा न कश्चिद्विशेष इति । रामवद्वर्तितव्यं न रावणवद् इति यथा पितुराज्ञां परिपालयतो वनवासिनोऽपि विजयः संपन्नः, रावणस्य च परदारानभिलषितः त्रैलोक्यविजयिनोऽप्युच्छेदस्तथान्यस्यापि संपत्स्यत इति विधिनिषेधव्युत्पत्तिः । तदनुविधानेन च महाकाव्यादिप्रबन्धानां विरचनेति ।

यत्पुनरिदमुक्तं दोषवतः समुच्छेदे स्वत एव विशीर्यमाणत्वात्क इव नायकस्योत्कर्षः को वा गुणार्जनं प्रतीयते, यदि गुणवतोऽप्युच्छेदः स्यात्, तत्र न पुरुषार्थविषयत्वेन दोषवत्त्वम् । नाप्युच्छेदनिमित्तत्वेन गुणवत्त्वमपि तूच्छेदनिमित्तत्वेन दोषवत्त्वं नायकोत्कर्षप्रकाशनपरत्वेन प्रतिपक्षस्य गुणसमृद्धिर्वर्ण्यते । स्थित्यतिक्रमश्च तस्योच्छेदनिमित्तं भवति । तथा च पुराणेषु हिरण्यकशिपुप्रभृतीनां देवताराधनप्राप्तमहावीर्याणां त्रैलोक्यकण्टकत्वेन समुच्छेदो दृश्यते । वंशवीर्यश्रुतादिवर्णजनितश्च तदुत्कर्षस्तज्जयान्नायकस्यैवोत्कर्षहेतुर्भवति ।

अथ किमेतानि नगरार्णववर्णनादीनि समुच्चयप्रयोज्यानि उत विकल्पप्रयोज्यानि । समुच्चयप्रयोज्यानीति चेत् किरातार्जुनीयादौ नगरार्णवार्कोदयकुमारविवाहाभ्युदयादीनां भणनं, अथ विकल्पेन यथेष्टकल्पनायामलक्षणत्वप्रसङ्गः । तत्र, अङ्गकल्पनस्योभयथापीष्टत्वात् । यदा कथाशरीरस्य परिपूर्णाङ्गस्वभावस्तदा समुच्चयेन यदान्यथा तदा विकल्पेनेति । तत्रापि केषांचिदेवाङ्गानां विकल्पोऽपरेषां नियमेन प्रयोगः । यानि पुरुषार्थस्यार्थः कामादेरासन्नोपकारीणि तानि नियमतः प्रयुज्यन्ते । यथा— मन्त्रदूतप्रयाणादिनायकाभ्युदयादयः ।

यथा च शैलर्तूद्यानगमनजलक्रीडाचन्द्रोदयमधुपानरतोत्सवादयः तानि च यदि कथाशरीरे न स्युः तदा कथान्तराद्यनुषञ्जनेनापि कर्तव्यानीति प्रचक्षते । तदेतदुभयमपि तत्र तत्र नियस्यमानं शब्दलक्षणमर्थलक्षणं च वेदितव्यम् । तद्यथा—

सर्गबन्धो महाकाव्यमुच्यते तस्य लक्षणम् । आशीर्नमस्क्रियावस्तुनिर्देशो वापि तन्मुखम् ॥
इतिहासकथोद्भूतमितरद्वा तदाश्रयम् । चतुर्वर्गफलायत्तं चतुरोदात्तनायकम् ॥

नगरार्णवशैलर्तुचन्द्रार्कोदयवर्णनैः । उद्यानसलिलक्रीडामधुपानरतोत्सवैः ॥
विप्रलम्भैर्विवाहैश्च कुमारोदयवर्णनैः । मन्त्रदूतप्रयाणाजिनायकाभ्युदयैरपि ॥
अलंकृतमसंक्षिप्तं रसभावनिरन्तरम् । सर्गैरनतिविस्तीर्णैः श्रव्यवृत्तैः सुसन्धिभिः ॥
सर्वत्र भिन्नसर्गान्तैरुपेतं लोकरञ्जकम् । काव्यं कल्पान्तरस्थायी जायते सदलंकृति ॥
न्यूनमप्यत्र यैः कश्चिदङ्गैः काव्यं न दुष्यति । यद्युपात्तेषु सम्पत्तिराराधयति तद्विदः ॥

इति । यथा च,

वृत्तिप्रत्यङ्गसम्पन्नं पञ्चार्थप्रकृतिक्षमम् । पञ्चावस्थाभिनिष्पन्नैः पञ्चभिस्सन्धिभिर्युतम् ॥
सन्ध्यन्तरैरेकविंशत्या चतुष्षष्ट्यङ्गसंयुतम् । महारसं महाभोगमुदात्तवचनान्वितम् ॥
महापुरुषसञ्चारं साध्वाचारजनप्रियम् । सुश्लिष्टसन्धिसंयोगं सुप्रयोगं सुखाश्रयम् ॥
मृदुशब्दाभिधानं च गुणालङ्कारसंयुतम् । लक्षणैश्च चतुष्षष्ट्या युक्तं कुर्वीत नाटकम् ॥
नाटके लक्षणं यत्तु तत्स्यात्प्रकरणेऽपि च । सट्टके नाटिकायां च किञ्चिदूनं तदुच्यते ॥
महाकाव्येषु . . . . . . . तत् । काव्यशास्त्रादिषु तथा तथैवाख्यायिकादिषु ॥
महाकाव्यादयः पद्यं गद्यमाख्यायिकादयः । गद्यपद्यमयी चम्पूः पद्यगद्ये तथा पृथक् ॥
पञ्चसन्धिमहाकाव्यं नाटकं नाटिका तथा । आख्यायिका प्रकरणं पर्वबन्धादयश्च ये ॥
डिमस्समवकारश्च चतुस्सन्धी प्रकीर्तितौ । व्यायोगेहामृगौ प्राज्ञैः संविधेयौ त्रिसन्धिकौ ॥
द्विसन्धि स्यात्प्रहसनं वीथ्यङ्कौ भाण एवच । प्रवह्लिकादिषु ज्ञेया यथेष्टं सन्धिकल्पना ॥
न सन्धिकल्पना कोशसङ्घातादिषु विद्यते । काव्यवर्जं समस्तेषु पदार्थाभिनयेषु च ॥
कैशिकीवृत्तिहीनानि डिमादीन्यष्ट लक्षयेत् । कथादिषु यथायोगं विज्ञेया वृत्तिकल्पना ॥
संस्कृतं सर्गबन्धादि प्राकृतं स्कन्धकादि यत् । अवस्कन्धान्यपभ्रंशो नाटकादि तु मिश्रकम् ॥
इति संक्षेपतः प्रोक्तं महाकाव्यादिलक्षणम् । शेषं यद्यत्र निर्दिष्टं तत्तत्रैवोपलक्षयेत् ॥
तन्महाकाव्यमित्याहु र्महतां च महच्च यत् । निरुक्तमवगन्तव्य मित्थमेवापरेष्वपि ॥
चतुर्वर्णफलत्वेऽपि भूयसार्थोपदेशकृत् । महाकाव्यं भवेत्कामप्रधानं तु कथादयः ॥

वाक्यप्रबन्धानुगतोऽयमुक्तो मया समासेन रसावियोगः ।
अथेह येऽर्था न विवेचिताः पृथक् विभज्यते केचिदुदाह्रियन्ते ॥

इति महाराजाधिराज श्रीभोजदेवविरचिते शृङ्गारप्रकाशे रसावियोगप्रकाशनो नाम एकादशप्रकाशः समाप्तः ॥

॥ श्रीः ॥

# द्वादशः प्रबन्धाङ्गचतुष्षष्टिचतुष्टयप्रकाशः

इतिहासकथोद्भूतमितरद्वा सदाश्रयम् । चतुर्वर्गफलोपेतं चतुरोदात्तनायकम् ॥
पञ्चावस्थाभिनिष्पन्नैः पञ्चभिः सन्धिभिर्युतम्। वृत्तिवृत्त्यङ्गसम्पन्नं पञ्चार्थप्रकृतिक्षमम्॥
महारसमहाभोगमुदात्तरचनान्वितम् । महापुरुषसञ्चारसाध्वाचारजनप्रियम् ॥
सुश्लिष्टसन्धिसंयोगं सुप्रयोगं सुखाश्रयम्। मृदुशब्दाभिधानं च गुणालङ्कारभूषितम्॥
सन्ध्यन्तरैकविंशत्या चतुष्षष्ट्यङ्गसयुतम्। लक्षणैश्च चतुष्षष्ट्या युक्तं कुर्वीत नाटकम्॥

इति।। यदुक्तं तत्र यथा काव्यादेः प्रबन्धस्य शरीराणि पञ्चारम्भविधयः पञ्चार्थप्रकृतयः पञ्चावस्थाः पञ्च, संस्थाः पञ्च, समवस्थाः पञ्च, सन्धयः पञ्च, चतुर्विंशतिः प्रवृत्तय इत्येका चतुष्षष्टिः, दशास्याङ्गानि, त्रयोदश वीथ्यङ्गानि, षोडश वृत्त्यङ्गानि, एकविंशतिः सन्ध्यन्तराणि, चत्वारि पताकास्थानानीति द्वितीया चतुष्षष्टिः, सन्ध्यङ्गानि तृतीया चतुष्षष्टिः, काव्यलक्षणानीति चतुर्थी, इमाश्चतस्रोऽपि चतुष्षष्टयः क्रमेण स्पष्टीक्रियन्ते । तत्र प्रथमचतुष्षष्टावितिहासाश्रयं, कथाश्रयमुत्पाद्येतिवृत्तमनुत्पाद्येतिवृत्तं प्रतिसंस्कार्येतिवृत्तमिति पञ्च प्रबन्धशरीराणि । इतिहासाश्रयमित्यनेन वृत्तदेवादिचरितसश्रितामाह, यथा कुमारसम्भव हयग्रीववधादयो महादेवादीनामैतिहासिकं चरितमावेदयन्ति । कथाश्रयमित्यनेन बृहत्कथादिप्रतिपन्नप्रख्यातोदात्तनायकचरितविषयतामपि महाकाव्यादेः प्रबन्धस्याभिधत्ते, यथा बृहत्कथया कथामुखचन्द्रं प्रति वत्सेश्वरचरितमुदयनोदये । उत्पाद्येतिवृत्तमित्यनेन कविमनीषाप्रकल्पितचतुर्वर्गावबोधहेतुदिव्यादिप्रकारत्वं ब्रूते, यथा चन्द्रापीडपुण्डरीकादिचरितवर्णन कादम्बर्याम् । अनुत्पाद्येतिवृत्तमित्यनेन यथावगतवर्तमानातीतमहाराजादिवृत्तवर्णन विषयतामस्याचष्टे, यथा हर्षवर्धनराज्यवर्धनादीनां च वर्णनं हर्षचरिते । प्रतिसंस्कार्येतिवृत्तमित्यनेनेतिहासेषु यथास्थितवृत्तोपनिबन्धने न्यायप्रवृत्तेरप्यफलत्वमनिष्टावाप्तिफलत्वं च दृश्यते । अन्यथा यत्प्रवृत्तेरपि फलयोगो अवधार्यते तत्र तथा प्रतिसंस्कारो विधेय, यथा न्यायप्रवृत्तेरेव फलयोगान्निवृत्तिविपरीतस्य निष्फलत्वानिष्टावाप्ती भवत इति व्युत्पादयति । ते च धर्मशृङ्गारार्थशृङ्गारकामशृङ्गारमोक्षशृङ्गाराधिकारिणः धीरोदात्तधीरललितधीरोद्धतधीरप्रशान्तसात्त्विकराजसतामसोत्तममध्यमकनिष्ठसाधारणानुकूलदक्षिणशठधृष्टादिभेदभिन्ना नायकानुनायकोपनायकप्रतिनायकादयोऽमतः

प्रबन्धेन प्रतिपादयिष्यन्त इति नेह प्रतन्यन्ते । प्रमाणं, प्रमेयं, विमर्शः, निर्णयः, प्रवृत्तिः इत्येताः पञ्चारम्भविषयः । ताश्च प्रत्येकं पञ्चप्रकारत्वात् पञ्चविंशतिर्भवन्ति । तत्र युक्तिशक्ति- दृष्टं निदर्शनमर्थापत्तिनिघर्मोऽर्थक . . . लोको लोकयात्रेति प्रमेयाणि । कर्मणामारम्भोपायः पुरुषद्रव्यसंपद्देशकालविभागो विनिपातप्रतीकारः कार्यसिद्धिश्चेति विमर्शाः । अनुपलब्धस्य ज्ञानमुपलब्धस्य निश्चयबलाधानमद्वैधस्य संशयोच्छेदनमेकदेशदृष्टस्य शेषोपलब्धिर्विपर्ययचिकि- त्सा चेति निर्णयाः । अलब्धलाभार्था, लब्धपरिरक्षार्था, रक्षिताभिवृद्ध्यर्था, वर्धितोपयोगार्था, उपयोगपर्याप्त्यर्था चेति प्रवृत्तयः । प्रमाणेन प्रमेयमुपलभ्य विमृश्यावधार्य उपेक्षापूर्वकारिणो अभीष्टकर्माणि प्रारभन्ते । ता इमाः पञ्चविंशतिरारम्भविषयः कथ्यन्ते ।

अथैतासु कथाशरीरोपादानकारणभूताः पञ्चार्थप्रकृतयो भवन्ति । चतसृषु हि विधासु तत्त्वं परिसमाप्यते कर्ता कर्म करणं क्रियेति । ताश्च प्रकृतिपञ्चकोपलक्षणेन प्रतिपाद्यन्ते । तद्यथा—

बीजं बिन्दुःपताका च प्रकरी कार्यमेव च । अर्थप्रकृतयःपञ्च कथादेहस्य हेतवः ॥

कथाशरीरव्यापिनि नायके कर्तरि कर्मणि वावतिष्ठमान आरम्भो बीजमित्युच्यते, यथा रामचरितं शिशुपालवध इति । एतेन नायिका अपि व्याख्याताः, यथा लक्ष्मीस्वयंवरः, सुभद्रा- हरणमिति । उक्तं च,

अल्पमात्रमुपक्षिप्तं बहुधा यद्विसर्पति । फलावसानं यच्च स्यात्तद्बीजमिति संज्ञितम् ॥

बीजमिव च बीजम् । यथा बीजमुप्तमंकुरमूलप्रकाण्डपत्रस्कन्धशाखाप्ररोहपल्लवपुष्पादिना प्रकारेण बहुधा विसर्पद्भ्ते फलाय कल्पते तथा यो महावाक्यार्थो नायकोपनायकानुनायक- प्रतिनायकसुहृत्सहायादिव्यापारभेदाद्बहुधा विसर्पन्न्ते फलाय जायते स बीजमित्युच्यते । कथाशरीरव्यापिषु गुरुज्ञातिपुरोहितामात्यभृत्यदासपीठमर्दविटविदूषकशकारसिद्धतापसादिनायक- प्रतिनायकसहायेषु कर्तृभूतेषु पर्यस्तमान आरम्भो बीजमित्युच्यते । स हि विष्कम्भप्रवेशकादि- भिरसंबद्धः संबद्धो वा कथाशरीराद्विच्छेदहेतुतयावतिष्ठमानो बिन्दुरित्याख्यायते । उक्तं च,

प्रयोजनानां विच्छेदे यदविच्छेदकारणम् । यावत्समाप्ति यद्बन्धः स बिन्दुरिति कीर्तितः ॥

बिन्दुरिव च बिन्दुः । यथा पयोबिन्दुरव्योतन्पयोऽभिष्यन्दलक्षणायाः क्रियाया अविच्छेदहेतुः । यथा वा घृतबिन्दुरग्निज्वलनलक्षणाया, एवं विच्छिन्नाविच्छिन्नेषु कथाशरीरेषु योऽनुसन्धाता स बिन्दुरित्युच्यते । कथाशरीरव्यापिनि पुनः साहाय्यविशेषे साधकतमत्वे करणभूते वर्तमान आरम्भः पताकेत्युच्यते । कथाशरीरव्यापिनो हि नायकस्य प्राधान्येन यदुपकारकं स्वेन च फलेन च फलवत् सा पताका । उक्तं च,

यस्या वृत्तं परार्थं स्यात्प्रधानस्योपकारकम् । तत्सम्बन्धाच्च फलवत्सा पताकेति कीर्तिता ॥

यथा हि पताका कस्यचिच्चिह्नरूपेण प्रकर्षशोभायै भवति एवं तेषु यदुपनायकादेश्चरितं तत्प्रधानस्यात्मनश्च शोभाप्रकर्षाय जायमानं पताकेत्युच्यते । कथाशरीरव्यापिनि पुनः सहायविशेष एवासाधकत्वात् करुणाभासभूते वर्तमान आरम्भः प्रकरीत्युच्यते । पताकैव ह्यफलवत्यनुबन्धविहीना च प्रकरी । यथोच्यते,

फलं प्रकल्पते यस्याः परार्थायैव केवलम् । अनुबन्धविहीनां तां प्रकरीति विनिर्दिशेत् ॥

प्रकरी च प्रकरी लघुर्हि प्रकारः प्रकरीत्युच्यते । स हि पुष्पादीनामेव स्यात् । यथा च पुष्पप्रकरः परार्थोऽपवरकादेः शयनस्थानस्य अन्यस्य वा शोभायै भवति एवं महाप्रबन्धस्य ऋतुवर्णनादिः अन्यो वा कोऽपि तद्विधो व्यापारः सा प्रकरीति कथ्यते । कथाशरीरव्यापिन्यां नायकसहायादिक्रियायामुपलभ्यमानं प्रधानसंबन्धी प्रारम्भफलविशेषः कार्यमित्युच्यते । धर्मार्थकामानामन्यतमं हि पुरुषार्थकार्यमित्यामनन्ति । तदाह,

यदाधिकारिकं वस्तु सम्यक्प्राज्ञैः प्रयुज्यते । यदर्थश्च समारम्भस्तत्कार्यमिति कीर्तितम् ॥

अथैतेषामुदाहरणानि । बीजस्य यथा—

प्राचेतसो मुनिवृषा प्रवरः कवीनां यत्पावनं रघुपतेः प्रणिनाय वृत्तम् ।
भक्तस्य तत्र समरन्त ममापि वाचः ताः सुप्रसन्नमनसः कृतिनो भजन्ताम् ॥

बिन्दोः यथा—

हा वत्साः खरदूषणत्रिशिरसो वध्याःस्थ पापस्य मे
हा हा वत्स विभीषण त्वमपि मे कार्येण हेयः स्थितः ।
हा मद्वत्सल वत्स रावण महत् पश्यामि ते संकटं
वत्से कैकसि हा हतासि न चिरं त्रीन् पुत्रकान् द्रक्ष्यसि ॥

पताकायाः यथा—

मूर्ध्ना जाम्बवतोऽभिवाद्य चरणावापृच्छ्य सेनापती-
नाश्वास्याश्रुमुखान्प्रियसखान्प्रेष्यान् समादिश्य च ।
आरम्भं जगृहे महेन्द्रशिखरादम्भोनिधेर्लङ्घने
रंहस्वी रघुनाथपादरजसामुच्चैः स्मरन्मारुतिः ॥
मैनाकः किमयं रुणद्धि गगने मन्मार्गमव्याहतं
शक्तिस्तस्य कुतः स वज्रपतनाद्भीतो महेन्द्रादपि ।

तार्क्ष्यः सोऽपि समं निजेन विभुना जानाति मां रावणं
आः ज्ञातं स जटायुरेष जरसा क्लिष्टो वधं वाञ्छति ॥ इति प्रकरी.
नीतो विक्रमबाहुरात्मसमतां प्राप्तेयमुर्वीतले
सारं सागरिका ससागरमहीप्राप्त्येकहेतुः प्रिया ।
देवी प्रीतिमुपागता च भगिनीलाभाज्जिताः कोसलाः
किं नास्ति त्वयि सत्यमात्यवृषभे यस्मिन्करोमि स्पृहाम् ॥

इति कार्यस्येति । कार्यार्थे च दैवपौरुषप्राधान्यमध्यास्ते । तस्य तस्य दैवपौरुषोभयप्राधान्यात् अवस्था सख्या समवस्थास्त्रयो व्यपदेशा जायन्ते । अवस्थादीनां च तिसृणामप्यारम्भप्रसवादीनि पञ्च पञ्च पर्वाणि भवन्ति । तत्र दैवप्राधान्ये अवस्थास्तासामारम्भादयः पञ्च पर्वाणि ।

आरम्भप्रसवोद्भेदकिञ्चिच्छेषसमाप्तयः । निर्दिष्टाः सूरिभिरेते तु तेषां लक्षणमुच्यते ॥
प्रयत्नः फलयोगस्य स खल्वारम्भ इष्यते। अपश्यतः फलप्राप्तिं यो व्यापारः फलं प्रति ॥
परं त्वौत्सुक्यगमनं प्रसवः स उदाहृतः । ईषत्प्राप्तिर्यदा काचित्फलस्य परिकल्प्यते ॥
भावमात्रेण तं प्राहुरुद्भेदमिह सूरयः । नियता तु फलप्राप्तिं यदा भावेन पश्यति ॥
किञ्चिच्छेषां समाप्तिं तामाक्षिपन्तः प्रचक्षते । अभिप्रेतं समग्रं च प्रतिरूपं निगद्यते ॥

पौरुषे प्राधान्ये सख्या । तासां तु प्रारम्भादयः पञ्च पर्वाणि ।

प्रारम्भश्च प्रयत्नश्च तथा वै प्राप्तिसम्भवः । नियता तु फलप्राप्तिः फलयोगश्च पञ्चमः ॥

अत्र प्रत्येकं प्रोपसर्गयोगात् पौरुषप्रकर्षोऽवभासते । पुरुषव्यापारेण बलात्कार्यसिद्धिः सख्याप्यते । इमाः सख्या उच्यन्ते, अर्थस्तु यः पूर्वेषां स एषामपीति ।

प्रार्थनादयः पञ्चैव पर्वाणि । प्रार्थनालाभसंयोगौ नाशस्संप्राप्तिरेव च ॥

अत्र लाभनाशयोर्दैवस्य प्राधान्यं प्रार्थनासंयोगयोः पौरुषस्य समाप्तौ दैवपौरुषयोरिति न सर्वत्र प्रकर्षवाचि । प्रोपसर्गयोगे भवति । तत्र आरम्भप्रसवादयो अवस्था उदाहरणादिषु प्रारम्भप्रसवादयः सख्याश्चतुर्दारिकालाभादिषु प्रबन्धेपूपवीथयो गृह्यन्ते ।

अथैतदुपाधेः कथाशरीरमागाना मुखादयः पञ्च व्यपदेशा भवन्ति । मुखं प्रतिमुखं गर्भो विमर्शो निर्वहणमिति । ते च बीजबिन्द्वादीनामर्थप्रकृतीनां सन्धानात्सन्धय उच्यन्ते । तदाह—

मुखं प्रतिमुखं गर्भो विमर्शश्च तथैव हि । तथा निर्वहणं चेति सन्धयः पञ्च नाटके ॥

तत्राधिकारिणो नायकादेर्यत्र निरूपणं तत्र रससम्भवः ।

कथाशरीरानुगतं तन्मुखं परिकीर्तितम् ।

यत्र फलार्थायाः प्रवृत्तेरुपक्रमस्कन्धे निरूपणं तत्प्रतिमुखम् । यथोच्यते–

बीजस्योद्घाटनं यत्र दृष्टनष्टमिव क्वचित् । मुखे न्यस्तस्य दृश्येत तद्वै प्रतिमुखं स्मृतम् ॥

यत्र क्रियाफलस्योद्भेदलाभनाशान्वेषणादयो जायन्ते तत्र गर्भ इति स्मृतम् । यथोच्यते–

उद्भेदः कार्यबीजस्य प्राप्तिरप्राप्तिरेव वा । अन्विष्यते तु यस्तत्र स वै गर्भ इतीरितः ॥

क्रियाफलावाप्तये विचारनिर्णयो विमर्शः । यथोच्यते—

गर्भनिर्भिन्नबीजार्थः क्रोधव्यसनजोऽपि वा । विप्रलम्भकृतो वापि विमर्श इति संज्ञितः ॥

इति । क्रियाफलेन सम्यग्योगो निर्वहणम् । यथोच्यते,

यत्रानयनमर्थानां मुखाद्यानां महौजसाम् । फलोपबृंहितानां स्याज्ज्ञेयं निर्वहणं तु तत् ॥

एते च महावाक्येषु रत्नावल्यादिषूपक्षेपपरिकराद्यङ्गचतुष्षष्टिप्रविभागप्रस्तावादन्यत्र विस्तराद्दुदाहरिष्यन्त इति नेह प्रतन्यते । तथा चोपक्षेपादयः प्रबन्धेष्वाधिकारिकाः आनुषङ्गिकाः प्रासङ्गिका वा प्रयोक्तव्याः । यथा सन्दर्भस्य शोभायै भवन्ति तेनानुसन्ध्यादीनामपि समावेशो व्याख्यातः । तत्र किमाधिकारिकं किमानुषङ्गिकं किं प्रासङ्गिकमिति चेत्,

यत्कार्यं हि फलप्राप्तौ समर्थं परिकल्प्यते । तदाधिकारिकं ज्ञेयमन्यत्स्यादानुषङ्गिकम् ॥

कारणात्फलयोगस्य वृत्तं स्यादाधिकारिकम् । तस्योदाहरणार्थं तु प्रासङ्गिकमिहोच्यते ॥

एवमेते पञ्चसन्धयः परिपूर्णप्रबन्धे भवन्ति । तदुक्तम्–

एते तु सन्धयः कार्या नाटकेषु प्रयोक्तृभिः । तथा प्रकरणेष्वेवं कथास्वाख्यायिकासु च ॥

महाकाव्येषु चम्पूषु तथैवाख्यानकेषु च । क्रियन्ते यत्र नैते तु सर्वे ते स्युर्डिमादयः ॥

एकलोपे चतुर्थस्य द्विलोपे त्रिचतुर्थयोः । द्वितृतीयचतुर्थानां त्रिलोपे लोप इष्यते ॥

मुखादिसन्धिषु च व्याप्रियमाणा नायकोपनायकादीनां मनोवाक्कायकर्मनिबन्धनाः पञ्च वृत्तयो भवन्ति, भारती, आरभटी, कैशिकी, सात्त्वती, विमिश्रा चेति । तासु,

या वाक्प्रधाना नृवरप्रयोज्या स्त्रीवर्जिता संस्कृतपाठ्ययुक्ता ।
स्वनामधेयैर्भरतप्रयोज्या सा भारती नाम भवेत्तु वृत्तिः ॥

प्रस्तावपातप्लुतलङ्घनानि छेद्यानि मायाकृतमिन्द्रजालम् ।
चित्राणि युद्धानि च यत्र वृत्ति तां तादृशीमारभटीं वदन्ति ॥

या श्लक्ष्णनेपथ्यविशेषचित्रा स्त्रीसंयुता या बहुनृत्तगीता ।
कामोपभोगप्रभवोपचारा तां कैशिकीवृत्तिमुदाहरन्ति ॥

या सात्त्वतेनेह गुणेन युक्ता त्यागेन वृत्तेन समन्विता च ।
हर्षोत्कटा संहितशोकभावा सा सात्त्वती नाम भवेत्तु वृत्तिः ॥
यत्रारभट्यादिगुणास्समस्ताः मिश्रत्वमाश्रित्य मिथः प्रथन्ते ।
मिश्रेति तां वृत्तिमुशन्ति धीराः साधारणीमर्थचतुष्टयस्य ॥

सोऽयं पञ्चप्रकारोऽपि चेष्टाविशेषविन्यासक्रमो वृत्तिरित्याख्यायते । वेषविन्यासक्रमः प्रवृत्तिः । सापि चतुर्धा, पौरस्त्या, मागधी, दाक्षिणात्या, आवन्त्या च । तासां च लक्षणान्यग्रतो वक्ष्यामः । अन्ये पुनरन्यथा प्रवृत्तिं व्याचक्षते, दशविधा पुण्यप्रवृत्तिः, दशविधा पापप्रवृत्तिरिति । सा चाग्रतो व्याकरिष्यते । केचित्तु तामप्यन्यथा आहुः, पञ्च बुद्धीन्द्रियाणि, पञ्च कर्मेन्द्रियाणि तद्व्यापारिका च धर्मा च वाद्स्थाने च पृथक्पृथक् दशप्रकारा प्रवृत्तिः भवति ।

अथान्यन्मतं प्रवृत्तिर्वाग्बुद्धिशरीरारम्भा । तत्र वागारम्भा द्वादश आलापप्रलापादयः, बुद्ध्यारम्भा द्वादश भावहावादयः, शरीरारम्भा द्वादश विलासादयः । त एते षट्त्रिंशदप्यग्रत उदाहरिष्यन्ते । अस्मत्तु दर्शने वेषविन्यासक्रमः प्रवृत्तिरित्युक्तम् । तत्र च पौरस्त्यौड्रमागधीत्यादिना देशोपलक्षणेन देशकालपात्रवयोऽवस्थाशक्तिसाधनाभिप्रायप्रत्ययविपरिणामनिमित्तासिगमसङ्ग्रामविहारोपहारच्छलच्छद्मप्रथमजातिवृत्तिविभवप्रकीर्णसंकीर्णविप्रकीर्णादयो वेषविशेषप्रवृत्तिहेतवः संगृह्यन्ते । तत्र देशो यथा—

ताटङ्कवल्गनतरङ्गितगण्डलेखमानाभिलम्बि दरदोलिततारहारम् ।
आश्रोणिगुल्फपरिमण्डलितान्तरीयं वेषं नमस्यत महोदयसुन्दरीणाम् ॥

कालो यथा—

कर्णे स्मेरं शिरीषं शिरसि विचकिलस्रग्लताः पाटलिन्यः
कण्ठे मार्णालहारो वलयितबिसिनीमूलकाण्डाः कलाच्योः ।
सामोदं चन्दनाम्भः स्तनभुवि नयने म्लानमाञ्जिष्ठपृष्ठे
गात्रे लोलज्जलार्द्रं जयति मृगदृशां ग्रैष्मिको वेष एषः ॥

पात्रं यथा—

छणपिट्ठधूसरत्थणि महुमअअम्बच्छि कुवलआहरणे ।
कस्स कए चूअमञ्जरि पुत्ति तुए मण्डिओ गामो ॥
[क्षणपिष्टधूसरस्तनि मधुमदताम्राक्षि कुवलयाभरणे ।
कस्य कृते चूतमञ्जरि पुत्रि त्वया मण्डितो ग्रामः ॥]

वयो यथा—

विरचितविशेषकाणां शेखरिणामिक्षुकाण्डहस्तानाम् ।
वृन्दैः कुमारकाणां विहितवतंसा इव ग्रामाः ॥

अवस्था यथा—

वसने परिधूसरे वसाना नियमक्षामतनुः कृशैकवेणी ।
अतिनिष्करुणस्य शुद्धशीला मम दीर्घां विरहव्यथां बिभर्ति ॥

शक्तिर्यथा—

आर्द्रस्रजो मलयजोदकमच्छमेकं वासश्च वासवरिपुर्ममृषेऽलसाङ्गः ।
सश्चिक्लिशे कलितरुद्रनिकेतनाद्रिभारेण तत्क्षणमसौ मणिभूषणानाम् ॥

साधनं यथा—

वासो जाम्बवपल्लवानि जघने गुञ्जास्रजो भूषणं
हस्तस्वस्तिकदानमंशुकविधिर्धातुद्रवो मण्डनम् ।
उत्तंसः शितिकण्ठपिञ्छलतिकावेषोऽयमल्पैर्दिनैः
यस्यारातिवधूजनेन शवरीसंवासतः शिक्षितः ॥

अभिप्रायो यथा—

सिहिपिंछकण्णऊरा वहुआ वाहस्सगव्विरीभमइ ।
गअमोत्तिअरइअ पसाहणाण मज्झे सवत्तीणं ॥

[शिखिपिञ्छकर्णपूरा वधूर्व्याधस्य गर्विणी भ्रमति । गजमौक्तिकरचितप्रसाधनानां मध्ये सपत्नीनाम् ॥]

व्यत्यासो यथा—

प्रतिमूर्धजं निहितकर्णपूरका रभसेन नारपददत्तकाञ्च्यः ।
परिवर्तिताम्बरयुगा रसाय तद्वलयीकृतश्रवणकुण्डलाः स्त्रियः ॥

विपरिणामो यथा—

बभूव भस्मैव सिताङ्गरागः कपोलमेवामलशेखरश्रीः ।
उपान्तभागेषु च रोचनाङ्कः सिंहाजिनस्येव दुकूलभावः ॥

निमित्तं यथा—

प्रत्यग्रमज्जनविशेषविविक्तमूर्तिः कौसुम्भरागरुचिरस्फुरदंशुकान्ता ।
विभ्राजते मकरकेतनमर्चयन्ती बालप्रभावविटपिप्रभवा लतेव ॥

अभिगमो यथा–

गोरङ्गउ तरुणीअणो जोह्लाइं अहिसरइ सिअणेवच्छ पडिच्छेओ वह्लहवद्धरइ ।
तच्छाआहिं पुण चलिअउ सामलगत्तो तह मअणु मन्तिअहिम् ॥

[ गौराङ्गस्तरुणीजनो ज्योत्स्नायामभिसरति सितनेपथ्यपरिच्छन्नो वल्लभवद्धरतिः ।
तच्छायासु पुनश्चलितः श्यामलाङ्गस्तत्र मदनो मन्त्रभूत् ॥ ]

सङ्ग्रामो यथा–

अथाभिपश्यन्निव विद्विषः पुरः पुरोधसारोपितहेतिसंहतिः ।
बभार रम्योऽपि वपुः स भीषणं गतः क्रियां मन्त्र इवाभिचारिकीम् ॥

विहारो यथा–

शृङ्गाणि द्रुतकनकोज्ज्वलानि गन्धाः कौसुम्भं पृथुकुचकुम्भसङ्गि वासः ।
मार्द्वीकं प्रियतमसन्निधानमासन्नारीणामिति जलकेलिसाधनानि ॥

व्यवहारो यथा–

न्यस्तालक्तकरक्तमाल्यवसना पाषण्डचण्डालयोः
पापारम्भवतोर्मृगीव वृकयोर्भीरुर्गता गोचरम् ।
सेयं भूरिवसोर्वसोरिव सुता मृत्योर्मुखे वर्तते
हा धिक्कष्टमनिष्टमस्तकरुणः कोऽयं विधेः प्रक्रमः ॥

छलं यथा–

अथाजिनाषाढधरः प्रगल्भवाग्ज्वलन्निव ब्रह्ममयेन वर्चसा ।
विवेश कश्चिज्जटिलस्तपोवनं शरीरबद्धः प्रथमाश्रमो यथा ॥

छद्म यथा–

जातं मे परुषेण भस्मरजसा तच्चन्दनोद्धूलनं
हारो वक्षसि यज्ञसूत्रमुचितं चीनांशुकं वल्कलम् ।
रुद्राक्षः स किलेतरौ भ्रुकुटिवलयक्लिष्टा जटाकुन्तला-
रसीताकुन्तलहारि कल्पितमहो रम्यं वपुः कामिनाम् ॥

आश्रमो यथा–

चूडाचुम्बितकङ्कपत्रमभितस्तूणीद्वयं पृष्ठतः
भस्मस्तोकपवित्रलाञ्छनमुरो धत्ते त्वचं रौरवीम् ।

मौर्व्या मेखलया नियन्त्रितमधो वासश्च माञ्जिष्ठकं
पाणौ कार्मुकमक्षसूत्रवलये दण्डोऽपरः पैप्पलः ॥

जातिर्यथा—

गलनिहित . . चर्चार्चितसन्निस्रावइ । . प्रविशति हृष्टः कुटीरकं हट्टकुटुम्बिन्याः ॥

व्यक्तिर्यथा—

अथ हिमरुचिभस्मभूषितं शिरसि विराजितमिन्दुलेखया ।
स्ववपुरतिमनोहरं हरं दधतमुदीक्ष्य ननाम पाण्डवः ॥

विभवो यथा—

शिरसि जण्डीलो अडीगणिमणिअडाणगीसतो । विगोधडाकराविआमुद्धएउ ईररस ॥

प्रकीर्णं यथा—

मलिणवसणाण कअवे णिआण आवं डुगण्डपालीणा सणाण ।
पुप्फवइआण कामो अंगेसु कआउहोवसइ ॥

सङ्कीर्णं यथा—

क युवतिमार्दवं क च महाहवदारुणता क च वलयी करः क करिदन्तजमुष्टिरसिः ।
क च नवयौवनं क कुसुमायुधनिस्पृहता तव ललनाविचेष्टितविरुद्धमहो ललितम् ॥

विप्रकीर्णं यथा—

अथ स ललितयोषिद्भ्रूलताचारुशृङ्गं रतिवलयपदाङ्के चापमासज्य कण्ठे ।
सहचरमधुहस्तन्यस्तचूताङ्कुरास्त्रः शतमखमुपतस्थे प्राञ्जलिः पुष्पधन्वा ॥

एवमियं प्रथमा चतुष्पदिः । अथ द्वितीया । तस्यां गेयपदं स्थितपाठ्यं आसीनं पुष्पगन्धिका, प्रच्छेदकत्रिमूढकं सैन्धवं द्विमूढकं उत्तमोत्तमकमुक्तप्रत्युक्तमिति लास्याङ्गानि । एतेषु,

आसनेषूपविष्टैर्यद्भाण्डवाद्योपबृंहितम् । गायनैर्गीयते शुष्कं तद्गेयपदमुच्यते ॥

यथा नागानन्दे प्रथमेऽङ्के वीणां वादयन्ती मलयवती गायति,

उत्फुल्लकमलकेसरपरागगौरद्युते मम हि गौरि ।
अभिवाञ्छितं प्रसिध्यतु भगवति युष्मत्प्रसादेन ॥

प्रतिपक्षनियुक्ते तु पठेदासनसंस्थिता । मदनानलतप्ताङ्गी स्थितपाठ्यं तदुच्यते ॥

यथा रत्नावल्यां द्वितीयेऽङ्के सागरिका विश्वस्य, हिअअ, पसीद, पसीद । किं इमिणा आआसमत्तफलएण दुल्लहजणप्पत्थणाणुबंधेण । अण्ण च जेण एव दिट्ठेण दे ईदिसो संदावो णं

वट्टदि । पुणोवि तं जेव पेक्खिदुं अहिलससित्ति अहो दे मूढदा । अइ णिसंस हिअअ, जम्मदो पहुदि सह संवढ्ढिअ इमं जणं परिहरिअ क्खणमत्तदंसणपरिचिदं जणं अणुगच्छंतो कधं ण लज्जेसि। अहवा अणंगसरपडणभीदेण तुए एव्वं अज्ज ववसिदं । भअवं कुसुमाउह, णिज्जिअसअलसुरासुरो भवीअ कहं इत्थिआजणं पहरंतो ण लज्जेसि । अहवा अणंगो सि सव्वधा इमिणा उवट्ठिदं । ताजाव इह कोवि ण आअच्छदि दाव आलेक्खसमप्पिदं तं अभिमदं जणं पेक्खिअ जहा समीहिदं करिस्सं ' इति ।

[ हृदय, प्रसीद प्रसीद । किममुनायासमात्रफलकेन दुर्लभजनप्रार्थनानुबन्धेन । अन्यच्च । येनैव दृष्टेन त ईदृशः सन्तापो ननु वर्धते । पुनरपि तमेव प्रेक्षितुं अभिलषसीत्यहो ते मूढता । अयि नृशंस हृदय, जन्मतः प्रभृति सह संवर्ध्येमं जनं परिहृत्य क्षणमात्रदर्शनपरिचितं जनमनुगच्छन् कथं न लज्जसे ? अथवा अनंगशरपतनभीतेन त्वयैवमद्य व्यवसितम् । भगवन् कुसुमायुध, निर्जितसकलसुरासुरो भूत्वा स्त्रीजनं प्रहरन् न लज्जसे । सर्वथा मम अनेन निमित्तेन उपस्थितम् । तद्यावदिह कोऽपि न आगच्छति तावदालेख्यसमर्पितं तमभिमतं जनं प्रेक्ष्य यथा समीहितं करिष्यामि । ]

आसीनमास्यते यत्र सर्वातोद्यविवर्जितम् । अप्रसारितगात्रं च चिन्ताशोकसमन्वितम् ॥

यथा रत्नावल्यां तृतीयेऽङ्के राजा आसनस्थ एव प्रविष्टः पठति,—

संतापो हृदय स्मरानलकृतः संप्रत्ययं सह्यतां
नास्त्येवोऽपशमोऽस्य तां प्रति पुनः किं त्वं मुधा ताम्यसि ।
यन्मूढेन मया तदा कथमपि प्राप्तो गृहीत्वा चिरं
विन्यस्तस्त्वयि सान्द्रचन्दनरसस्पर्शो न तस्याः करः ॥

न तथाहमेवंविधावस्थमात्मानमनुचिन्तयामि यथान्तर्गूढकोपसंभारया देव्या लोचनगोचरगतां तामेव तपस्विनीं सागरिकाम् । तथाहि ।

ह्रिया सर्वस्याधो नयति विदितास्मीति वदनं द्वयोर्दृष्ट्वाऽऽलापं कलयति कथामात्मविषयाम् ।
सखीषु स्मेरासु प्रकटयति वैलक्ष्यमधिकं प्रिया प्रायेणास्ते हृदयनिहितातङ्कविधुरा ॥ इति ॥

वृत्तानि विविधानि स्युर्गेयं चातोद्यसंश्रितम् । चेष्टा च विविधा पुंसां यत्र सा पुष्पगण्डिका ॥

यथा रत्नावल्यां द्वितीयेऽङ्के विदूषकेण नलिनीपत्रशयने दर्शितो राजा,—

वयस्य, निगुणमुपलक्षितम् । तथा हि,

परिम्लानं पीनस्तनजघनसङ्गादुभयतस्तनोर्मध्यस्यान्तः परिमिलनमप्राप्य हरितम् ।
इदं व्यस्तन्यासं श्लथभुजलताक्षेपवलनैः कृशाङ्ग्याः सन्तापं वदति नलिनीपत्रशयनम् ॥

अपिच, स्थितमुरसि विशालं पद्मिनीपत्रमेतत्कथयति न तथान्तर्मन्मथोत्थामवस्थाम् ।
अतिशयपरितापग्लापिताङ्ग्या यथास्यास्तनयुगपरिणाहं मण्डलाभ्यां ब्रवीति ॥
प्रच्छेदकस्स विज्ञेयो यत्र चन्द्रातपाहताः । स्त्रियः प्रियेषु सज्जन्ते अपि विप्रियकारिषु ॥

यथा रासकाङ्के,— विदूषकादेव प्रभृतिमिदमवगम्य तथाकृतापराधमपि चन्द्रातपाहता प्रियमभिससार राधा, यत्र सा लतिका गतेति ।

अनिष्ठुरश्लक्ष्णपदं समवृत्तैरलंकृतम् । नाट्यं पुरुषभावाढ्यं त्रिमूढकमुदाहृतम् ॥

यथा रत्नावल्यां द्वितीयेऽङ्के राजा सागरिकामेवावलोक्याह,

दृशःपृथुतरीकृता जितनिजाब्जपत्रत्विष श्चतुर्भिरपि साधु साध्विति मुखैः समं व्याहृतम् ।
शिरांसि चलितानि विस्मयवशाद्ध्रुवं वेधसो विधाय ललनां जगत्त्रयललामभूतामिमाम् ॥
दृष्टिं रुषा क्षिपसि भामिनि यद्यपीमां स्निग्धेयमेष्यति तथापि न रूक्षभावम् ।
त्यक्त्वा त्वरां व्रज पदैः स्खलितैरयं ते खेदं गमिष्यति गुरुर्नितरां नितम्बः ॥
श्रीरेषा पाणिरप्यस्याः पारिजातस्य पल्लवः । कुतोऽन्यथा स्रवत्येष स्वेदच्छद्मामृतद्रवम् ॥
रूपादिवाद्यसंयुक्तं पाठ्येन च विवर्जितम् । नाट्यं हि तत्तु विज्ञेयं सैन्धवं नाट्यकोविदैः॥

रत्नावल्यां द्वितीयेऽङ्के विदूषकः, 'भो वअस्स जिदं अम्हेहिं' (भो वयस्य, जितं अस्माभिः ।) इत्युक्त्वा बाहू प्रसार्य नृत्यति । कक्षायाः चित्रफलकं पतति, तद् दृष्ट्वा राजा विषादं नाटयति । अपवार्य विदूषकं अङ्गुल्या तर्जयतीति ।

मुखप्रतिमुखे मूढे घटिते तु पदक्रमम् । स्पष्टभावरसोपेतं चित्रार्थं चेद्द्विमूढकम् ॥

रत्नावल्यां द्वितीयेऽङ्के राजा चित्रगतां सागरिकां दृष्ट्वा आह—

लीलावधूतपद्मा कथयन्ती पक्षपातमधिकं नः । मानसमुपैति केयं चित्रगता राजहंसीव ॥

इत्याद्यभिहितं यावत्सुसङ्गता आगच्छेति । एतन्मुखोपक्षिप्तबीजोद्भेदान्मुखमिव मुखम् । तथा सुसङ्गतायामागतायां राजनि साशङ्के विच्छिन्नमिव तद्बीजमिति दृश्यते ।

'बीजस्योद्घाटनं यत्र दृष्टनष्टमिव क्वचित् ।' इति । अत एवाभिहितं राज्ञा सुसङ्गते क्रीडामात्रकमेवैतदित्यादि । अत एव द्वे मुखप्रतिमुखे मूढे घटिते यत्र तद्द्विमूढकमिति ।

उत्तमोत्तमकं विद्यादनेकरससंश्रयम् । विचित्रश्लोकबन्धैश्च हेलाहावविभूषितम् ॥

यथा रत्नावल्यां तृतीयेऽङ्के, राजा सागरिकाबुद्ध्या वासवदत्तामाह— प्रिये सागरिके,

शीतांशुर्मुखमुत्पले तव दृशौ पद्मानुकारौ करौ
रम्भागर्भनिभं तवोरुयुगलं बाहू मृणालोपमौ ।

इत्याह्लादकराखिलाङ्गि रभसान्निश्शङ्कमालिङ्गय मा-
मङ्गानि त्वमनङ्गतापविधुराण्येह्येहि निर्वापय ॥ इत्यादि ।

कोपप्रसादजनितमधिक्षेपसमाश्रयम् । उक्तप्रत्युक्तमेवं स्याल्लास्याङ्गं दशमं त्विह ॥

यथा रत्नावल्यां तृतीयेऽङ्के, राज्ञा प्रत्यभिज्ञातायां वासवदत्तायां प्रिये वासवदत्ते इत्याद्यभिहिते वासवदत्ता सकोपमाह, 'अज्जउत्त, मा एवं भण । अदिक्कदाइं दाणिं एदाइं अक्खराइं ।' (आर्यपुत्र, मा एवं भण । अतिक्रान्तानीदानीमेतान्यक्षराणि ।) एवमुक्ते तदा विज्ञापनानन्तरं पादयोः पतन्तं राजानं दृष्ट्वा वासवदत्ता पुनरनुभावान्नायकप्रसादमुररीकृत्य प्रविष्टाह, 'कंचणमाले, तं तहा चरणनिवडिदं अज्जउत्त अवधीरिअ आअच्छंतीए मए अदिणिट्ठुरं किदं । ता दाणिं सअं गदुअ अलक्खिदा एव्व कंठे गेण्हिअ पसादइस्सं ।' (काञ्चनमाले, तं तथा चरणनिपतितमार्यपुत्रमवधीर्यागच्छन्त्या मयातिनिष्ठुरं कृतम् । तदिदानीं स्वयं गत्वा अलक्षितैव कण्ठे गृहीत्वा प्रसादयिष्ये ।) इत्यादि ।

अथ वीथ्यङ्गानि उद्घातकं, अवलुण्ठितं, अन्वस्यन्दितं, असंप्रलापः, नालिका, वाक्केलिः, अधिबलं, छलं, व्याहारः, त्रिगतं, गण्डः, मृदवं, प्रपञ्च इति । पदानि स्वगतार्थानि तदर्थगत्येन . . . . । यथा वेणीसंहारे,

सत्पक्षा मधुरगिरः प्रसाधिताशा मदोद्धतारम्भाः ।
निपतन्ति धार्तराष्ट्राः कालवशान्मेदिनीपृष्ठे ॥

इति सूत्रधारेण पठिते संभ्रान्तः पारिपार्श्वकः, 'भाव, शान्तं पापं, प्रतिहतममङ्गलम् ।'

सूत्रधारः– ननु शरत्समयवर्णनाशंसया हंसान्धार्तराष्ट्रानिति व्यपदिशामि ।

पारिपार्श्वकः– भाव, न खलु न जाने । किन्त्वमङ्गलाशंसयास्य वो वचनस्य यत्सत्यं कम्पितमिव मे हृदयमिति ।

यत्रान्यस्मिन्समावेश्य कार्यमन्यत्प्रसाध्यते । तच्चावलगितं नाम विज्ञेयं नाट्ययोक्तृभिः ॥

यथा रत्नावल्यां द्वितीयेऽङ्के. सुसङ्गता– सहि, जस्स किदे तुमं आअदा सो अअं चिट्ठदि । (सखि, यस्य कृते त्वमागता सोऽयं तिष्ठति ।)

सागरिका— (सासूयं) सहि, कस्स किदे अअं आअदा । (सखि, कस्य कृतेऽहमागता ।)

सुसङ्गता— (विहस्य), अइ अण्णसंकिदे । णं चित्तफलअस्स ता गेण्हत ।
अयि अन्यशङ्किते, ननु चित्रफलकस्य कृते आगताहमिति प्रतिपादयन्त्या छायान्तरेण राजार्थोऽपि प्रतिपादित इत्यवलगितम् ।

आकाङ्क्षि तु कस्मिंश्चिच्छुभाशुभसमुत्थिते। कौशलादुच्यतेऽन्योऽर्थस्तदवस्यन्दितं भवेत् ॥

यथा वेणीसंहारे प्रथमेऽङ्के सूत्रधारः–

निर्वाणवैरदहनाः प्रशमादरीणां नन्दन्तु पाण्डुतनयाः सह माधवेन ।

रक्तप्रसाधितभुवः क्षतविग्रहाश्च स्वस्था भवन्तु कुरुराजसुताः सभृत्याः ॥

इति सूत्रधारवचनमसूयमाणः क्रुध्यन् भीमसेनः प्राह– आः दुरात्मन्वृथा मङ्गलपाठक शैलूषापसद ।

लाक्षागृहानलविषान्नसभाप्रवेशैः प्राणेषु वित्तनिचयेषु च नः प्रहृत्य ।

आकृष्टपाण्डववधूपरिधानकेशाः स्वस्था भवन्ति मयि जीवति धार्तराष्ट्राः ॥

इति भीमसेनेनोक्ते सहदेव आह– आर्यानुमतमेवास्य नो भरतपुत्रवचनम् । तथाहि, निर्वाणवैरदहना इत्यन्यथास्य व्याख्यानमित्युक्त्वा, रक्तप्रसाधितभुवः क्षतविग्रहाः स्वर्गस्था भवन्त्विति अन्यथा व्याचष्टे ।

मूर्खजनसन्निकर्षे हितमपि यत्र प्रभाषते विद्वान् ।

न च गृह्यतेऽस्य वचनं विज्ञेयोऽसंप्रलापी ऽसौ ॥

यथा रामाभ्युदये द्वितीयेऽङ्के रावणः– प्रायः श्रुतमेव भवता यथा कलत्रसामीप्येऽपि तापसस्तदपहार एव तापसाय निरूप्यताम् । न च कलत्रापहरणादृते पुरुषस्यापरं परिभवस्थानमस्ति । तत्र च मारीचेन साहाय्यकं क्रियमाणमिच्छामि ।

मारीचः– स्वामिन्, जीवतो रामस्य परिभव इत्यलम् । न खलु तापस इति नावज्ञातुमर्हति देवः । अन्यदेव किमपि वस्त्वन्तरं तत् ।

रावणः– सक्रोधम्, आः, किन्नाम वस्त्वन्तरं तन्मूढः ।

युक्तैव क्षत्रबन्धो परिभवमञ्जीयतः कर्तुमिच्छन्

मायासाहाय्यके त्वं निपुणतम इति .... येनासमर्थः ।

यच्चान्यत्तत्र वज्रप्रहतिमसृणितस्फारकेयूरभाजः

सज्जा त्रैलोक्यलक्ष्मीहठहरणसहा बाहवो रावणस्य ॥

यत्रात्मनः परस्य च वचनं स्यादुत्तरोत्तरप्रभवम् ।

अन्योन्यार्थविशेषकवाक्यमिति तद्बुधैर्ज्ञेयम् ॥

यथा कृत्यारावणे— हा भ्रातर्लक्ष्मण परित्रायस्व मां परित्रायस्वेति ।

श्रुत्वा सीतावेषधारिणीं शूर्पणखामुपागतां तस्यां च मूढायां,

लक्ष्मणः– आर्ये, समाश्वसिहि, समाश्वसिहि । इत्यादि ।

अन्यार्थमेव वाक्यं छमति .... सन्धानहास्यरोषकरम् ।

यथा रत्नावल्यां चित्रफलके राजानं सागरिकां चावलोक्य, 'कस्स एदं विण्णाणं ?' (कस्येदं विज्ञानम् ?) इति वासवदत्ताप्रश्ने, राजा– *अलमन्यथा सम्भावितेन । इयं हि मया स्वचेतसैव परिकल्प्यालिखिता । न तु दृष्टपूर्वा ।*

विदूषकः — सच्चं सवामि बम्हसुत्तेण जइ कदावि अम्हेहिं ईदिसी दिट्ठपुव्वा । (*सत्यं शपे ब्रह्मसूत्रेण यदि कदाप्यस्माभिरीदृशी दृष्टपूर्वा ।*) इति ।

राजा – वयस्य, कथं दर्शनमपि भविष्यति प्रियायाः ।

विदूषकः — (साहंकारं) भोः, किं त्ति ण भविस्सदि जस्स दे उवहसिदविहप्पदि बुद्धिविहवो अअं भमच्चो । (*भोः, किमिति न भविष्यति यस्य त उपहसितबृहस्पतिबुद्धिविभवोऽयममात्यः ।*) अत्र विदूषकेणानुभूतस्यार्थस्य हास्यलेशाय व्याहार इति ।

श्रुतिसारूप्याद्यस्मिन् बहवोऽर्थाः युक्तिभिर्निरूपिताः तत् त्रिगतमिति ज्ञायते ।

यथेन्दुलेखायां वीथ्याम्, राजा– वयस्य,

किन्नु कलहंसनादो मधुरो मधुवाचिनानुसङ्करः ।
हृदयगृहदेवतायास्तस्या नु सनूपुरं चरणम् ॥

यदि वा— यत्रानुदात्तवचनं त्रिधा विभक्तं भवेत्प्रयोगे तु ।
हास्यरससंप्रयुक्तं तत्त्रिगतं नाम विज्ञेयम् ॥

यथा पुल्लसके रूपके— तरलं हि भट्टा तुहपअं भवरंसो ऊण चिम्हा भमामाडळहराओ आगदेहिंसि धत्थवरेण्णो . . . कुरुवचमालाइ आए मालं सअंवरत्थेण विरइअं गहऊण, एसा देवी इह एआमाअदेत्ति ।

संरम्भसम्भ्रमयुतं विवादयुक्तं तथापवादकृतम् ।
बहुवचनाक्षेपकृतं गण्डमिति वदन्ति तत्त्वज्ञाः ॥

यथा वेणीसंहारे द्वितीयेऽङ्के दुर्योधनो भानुमतीमुद्दिश्य,

लोलांशुकस्य पवनाकुलितांशुकान्तं त्वद्दृष्टिहारि मम लोचनबान्धवस्य ।
अध्यासितुं तव चिरं जघनस्थलस्य पर्याप्तमेव करभोरु ममोरुयुग्मम् ॥

कञ्चुकी— देव भग्नम् । राजा— किं नाम । कंचुकी— भग्नं भीमेन ।

राजा— आः किमेवं प्रलपसि । कंचुकी— (सभयं) ननु भग्नं भीमेन भवतः ।

राजा— हा धिक् प्रलापिन् वृद्धापसद, कोऽयमद्य ते व्यामोहः ।

कंचुकी— देव न खलु कश्चिद्व्यामोहः। सत्यमेव ब्रवीमि।

भग्नं भीमेन भवतो मरुता रथकेतनम्। पतितं किङ्किणीक्वाणबद्धाक्रन्दमिव क्षितौ॥ इति।

ननु च यद्वौ वक्ष्यमाणस्याशुभवार्ताबहुमत्यर्थो बहुवचनाक्षेपकृतं गण्डमित्यनेनोच्यते। तच्च पताकास्थानकस्यापि आगामिवस्तुसूचनात्मकत्वात् ततोऽस्य को भेदः? उच्यते। पताकास्थानकेन धर्मादेर्नाटकशरीरभूतस्य साध्यस्य वस्तुनः साधनभूतानामुपक्षेपः क्रियते। अत एव तद्विभ्रमूतानामिति विशेषः। अत एव गण्ड इव गण्ड .... । यथा हि गण्डो गण्डरूपः प्रथममुद्भिद्यमानः व्यावर्तको गण्डो ज्ञेयः। तदाह बहुवचनसंयन्धानामन्ते यत्पदं च संबद्धम्। संबद्धमिवाभाति च तद्गण्डं नाम वीथ्यां स्यात्।

हास्येनोपगतार्था प्रहेलिका नालिकेति विज्ञेया॥

यथा— कोऽयं द्वारि हरिः प्रयाह्युपवनं शाखामृगस्यात्र किं
कृष्णोऽहं दयिते बिभेमि सुतरां कृष्णादहं वानरात्।
राधेऽहं मधुसूदनो व्रज लतां तामेव पुष्पान्विता-
मित्थं निर्वचनीकृतो दयितया ह्रीणो हरिः पातु वः॥

यथा मृच्छकटिकायां —

वसन्तसेना — कधं परिअणोत्ति मं अवगच्छदि। (कथं परिजन इति मामवगच्छति।) अणुदासीणं से जोव्वणं पडिहासेदि। (अनुदासीनमस्य यौवनं प्रतिभासते।) प्रावारकं गृहीत्वा समाघ्राय च, अपवारितकेन प्रावृणोति।

चारुदत्तः — ननु रदनिके रोहसेनं गृहीत्वा आभ्यन्तरं प्रविश।

वसन्तसेना— मन्दभाइणी क्खु अहं तुह अब्भन्तरस्स। (मन्दभागिनी खल्वहं तवाभ्यन्तरस्य।)

कार्यहेतोः स्वरूपविज्ञानादिप्रच्छादनं नर्मगर्भः। यथा—

चारुदत्तः — ननु रदनिके प्रतिवचनमपि नास्ति। कष्टम्।

यदा तु भाग्यक्षयपीडितां दशां नरः कृतान्तोपहितां प्रपद्यते।
तदास्य मित्राण्यपि यान्त्यमित्रतां चिरानुरक्तोऽपि विरज्यते जनः॥

.... हेतुवचनार्थैस्तन्मृदवं नाम विज्ञेयम्।

यथा शाकुन्तले —

मेदश्छेदकृशोदरं लघु भवत्युत्थानयोग्यं वपुः
सत्त्वानामपि लक्ष्यते विकृतिमच्चित्तं भयक्रोधयोः।

उत्कर्षः स च धन्विनां यदिषवः सिध्यन्ति लक्ष्ये चले—
मिथ्या हि व्यसनं वदन्ति मृगयामीदृग्विनोदः कृतः ॥

गुणस्य दोषीकरणं यथा मालतीमाधवे —

पुरश्चक्षूरागस्तदनुमनसोऽनन्यपरता तनुग्लानिर्यस्य त्वयि समभवद्यत्र च तव ।
युवा सोऽयं प्रेयानिह सुवदने मुञ्च जडतां विधातुर्वैदग्ध्यं विलसतु सकामोऽस्तु मदनः ॥

इति कामन्दकीवचनादनन्तरं लवङ्गिका — भअवदि किसणचउद्दसीरअणि मसाणसचारणिव्वूढ-विसमववसाअ णिट्ठाविदचण्डपासंडदोदंडसाहसो साहसिओ खु एसो । अदो खु मे पिअसही उक्कंपिदा । [ भगवति कृष्णचतुर्दशीरजनीश्मशानसञ्चारनिर्व्यूढविषमव्यवसायनिष्ठापितचण्ड-पाषण्डदोर्दण्डसाहसस्साहसिकः खल्वेषः । अतः खलु मे प्रियसख्युत्कम्पिता ।

कामंदकी — साधु लवङ्गिके साधु स्थाने खलु अनुरागोपकारयोर्गरीयसोरुपन्यासः ।

एकस्य वा अर्थहेतोर्यथा मृच्छकटिकायाम् —

चारुदत्तः — (मैत्रेयं दृष्ट्वा) दिष्ट्या भवान् दृश्यते । वयस्य स्वागतम् । आस्यताम् ।

विदूषकः — उवविट्ठम्हि । (उपविष्टोऽस्मि ।)

चारुदत्तः — वयस्य, कथय तत् कार्यम् ।

विदूषकः — तं क्खु कज्जं विणट्ठं । (तत् खलु कार्यं विनष्टम् ।)

चारुदत्तः — किं तया न गृहीता सा रत्नावली ?

विदूषकः — कुदो अम्हाणं एत्तिअं भाअधेअं । णवणलिणकोमलं अञ्जलिं मत्थए कदुअ पडिच्छिआ । (कुतोऽस्माकमेतावद्भागधेयम् । नवनलिनकोमलमञ्जलिं मस्तके कृत्वा गृहीता ।)

## अथ प्रत्यङ्गानि.

उद्घात्यकादीनामङ्गानां प्रवृत्तिः वीथी उद्घात्यक कथोद्घातः प्रयोगातिशयः प्रवर्तकोऽव-लगितमिति । तत्रोद्घात्यको यथा —

को जयति जयति शर्वः केन जितं जितमनङ्गदहनेन ।
त्रिपुरारिणा भगवता बालशशाङ्काङ्कितजटेन ॥

कथोद्घातो यथा —

सार्कं पङ्कजजन्मना सुरपतेरभ्यर्थनाया यशा-
दिक्ष्वाकोः शरदिन्दुबिम्बविमले वंशेऽवतीर्य स्वयम् ।
निःशेषात्तपदं त्रयीपथजुषां विद्वेषिणं राक्षसं
यः पौलस्त्यमहन् स पातु भवतो रामाभिधानो हरिः ॥

प्रयोगातिशयो यथा—

यूथयितमत्र तु हरेः क्ष्मामुद्धरतो वराहवपुषो वः । शेषफणरत्नदर्पणसहस्रसंक्रान्तबिम्बस्य ॥

प्रवर्तको यथा —

आसादितप्रकटनिर्मलचन्द्रहासः प्राप्तः शरत्समय एष विशुद्धकान्तः ।
उत्साद्य गाढतमसं घनकालमुग्रं रामो दशास्यमिव सम्भृतबन्धुजीवः ॥

अवलगितं यथा— अमुमेव शरत्समयमाश्रित्य गीयताम् । तथा ह्यस्याम्.

सत्पक्षा मधुरगिरः प्रसाधिताशा मदोद्धतारम्भाः ।
निपतन्ति धार्तराष्ट्राः कालवशान्मेदिनीपृष्ठे ॥

संक्षिप्तिका, अवपातः, वस्तूत्थापनं, संस्फोटः, इति चत्वारि आरभट्यङ्गानि । तेषु माहेन्द्रजालनेपथ्यादिभिर्वस्तुसंक्षेपः संक्षिप्तिका । यथा—

रक्षसा मृगरूपेण वञ्चयित्वा सराघवौ । जहार सीतां पक्षीन्द्रप्रयासक्षणविघ्नितः ॥

भयादिभिर्विद्रवादिकर्मानुप्रवेशनिर्गमनमवपातः । यथा —

मृगरूपं परित्यज्य विधाय विकटं वपुः । नीयते रक्षसा तेन लक्ष्मणो युधि संशयम् ॥

अविद्रवः सविद्रवो वा सर्वरसभावसमासो वस्तूत्थापनम् । यथा—

राहोश्चन्द्रकलामिवाननचरीं दैवात् समासाद्य मे
दस्योरस्य कृपाणपातविषयादाच्छिन्दतः प्रेयसीम् ।
आतङ्काद्विकलं द्रुतं करुणया विक्षोभितं विस्मयात्
क्रोधेन ज्वलितं मुदा विकसितं चेतः कथं वर्तताम् ॥

नानाशस्त्रयुद्धनियुद्धादिभिः ससंरम्भसंप्रहारः संस्फोटः । यथा—

कृष्टा येन शिरोरुहेषु पशुना पाञ्चालराजात्मजा
येनास्याः परिधानमप्यपहृतं राज्ञां गुरूणां पुरः ।
यस्योरःस्थलशोणितासवमहं पातुं प्रतिज्ञातवान्
सोऽयं मद्भुजपञ्जरे निपतितः संरक्ष्यतां कौरवैः ॥

नर्म, नर्मस्फिञ्जः, नर्मस्फोटः, नर्मगर्भ इति चत्वारि कैशिक्यङ्गानि । तेषु स्थापितशृङ्गारं वचो विचेष्टितं वा सपरिहासं नर्म । यथा—

वयं तथा नाम यथात्थ किं वदाम्ययं त्वकस्माद्विकलः कथान्तरे ।
कदम्बगोलाकृतिमाश्रितः कथं विशुद्धमुग्धः कुलकन्यकाजनः ॥

प्रथमसम्भोगे नवावस्थानं संभोगाश्रयवाक्यादि कर्म नर्मस्फिञ्जः। यथा—

प्राप्तासौ वृषपर्वणः प्रियसुता सङ्केतखण्डे नवे
वृष्टिः सेयमनम्बुदाऽमृतमयी गात्राणि मे सिञ्चति।
किं स्नानासि विनोदयिष्यति मनः संतप्तमेवाद्य मे
दुर्वात्येव निवर्तयिष्यति न भो स्तां देवयानीं प्रति॥

आविर्भूताभिलाषानुभावयोरकाण्डसम्भोगभङ्गो नर्मस्फोटः। यथा—

इतः परानर्भकहार्यशस्त्रान् वैदर्भि पश्यानुमता मयासि।
एवंविधेनाहवचेष्टितेन, त्वं प्रार्थ्यसे हस्तगता ममैभिः॥

कार्यहेतोः स्वरूपविज्ञानादिप्रच्छादनं नर्मगर्भः। यथा—

अयाजिनाषाढधरः प्रगल्भवाक् ज्वलन्निव ब्रह्ममयेन तेजसा।
विवेश कश्चिज्जटिलस्तपोवनं शरीरबद्धः प्रथमाश्रमो यथा॥

उत्थापकः, परिवर्तकः, संलापकः, संघात्यकः, इति चत्वारि सात्वत्यङ्गानि। तेषु परस्परीभूतार्थमुत्थापनमुत्थापकः। यथा—

प्रहर मम तु कायं प्राक् प्रहारप्रियोऽहं मयि तु कृतविघाते किं विदध्याः परस्मात्।
झटिति विततवहुङ्कारभास्वत्कुठारप्रविघटितकठोरस्कन्धबन्धः कबन्धः॥

प्रस्तुतार्थत्यागादन्यार्थभजनं परिवर्तकः। यथा—

मुनिमभिमुखतां निनीषवो याः समुपययुः कमनीयतां गुणेन।
मदनमुपदधे स एव ताभ्यो दुरधिगमा हि गतिः प्रयोजनानाम्॥

सदसि नानावाक्यैर्मिथोऽधिक्षेपः संलापकः। यथा—

कथमपि न निषिद्धो दुःखिना भीरुणा वा द्रुपदतनयपाणिस्तेन पित्रा ममाद्य।
तव भुजबलदर्पध्मायमानस्य वामः शिरसि चरण एष न्यस्यते धारयैनम्॥

कार्यमन्त्रानुभावदैवादिभिः संघातभेदः संघात्यकः। यथा—

अपश्यद्भिरिवेशानं रणान्निववृते गणैः। मुह्यत्येव हि कृच्छ्रेषु संभ्रमाधिगतं मनः॥

अथ सन्ध्यन्तराण्येकविंशतिः। तद्यथा— साम, भेदः, दण्डः, प्रदानं, वधः, प्रत्युत्पन्नमतित्वं, गोत्रस्खलितं, साहसं, भयं, ह्रीः, माया, क्रोधः, ओजः, संवरणं, भ्रान्तिः, हेत्ववधारणं, दूतः, लेखः, स्वप्नः, चित्रं, मद इति।

तत्र साम यथा— पार्थविजये, भगवान् वासुदेवो दूत्येन गतो दुर्योधनमाह,

क्षीरोदादमृतद्युतिः क्षितिभुजां वंशस्ततो भारतः

श्लाघ्यः श्लाघ्यगुणश्च किञ्च बहुना यत्रोद्भवस्तादशाम् ॥ इत्यादि ।

भेदो यथा मुद्राराक्षसे, चाणक्येन तन्मुद्रालाञ्छितलेखालङ्कारादिदर्शनेन राक्षसान्मलयकेतुर्भेदितः । दण्डो यथा— तत्रैव राक्षससङ्ग्रहार्थं वधबन्धादिकं तन्मित्रे श्रेष्ठिनि चन्दनदासे प्रयुक्तः । प्रदानं यथा— मृच्छकट्यां, शकारो गणिकां वसन्तसेनां व्यापादयितुं विटमुपन्यस्तवान् । शकारः— भावे भावे, अदिच्छशे लम्बदशाविशालं पावालअ शुत्तशदेहि जुत्तम् । मंशं च खादुं तह तुट्टि कादुं चुहू चुहू चुक्कु चुहू चुहूत्ति ॥ (भाव भाव, यदीच्छसि लम्बदशाविशालं प्रावारक सूत्रशतैर्युक्तम् । मांस च खादितुं तथा तुष्टिं कर्तुं चुहू चुहू चुक्कु चुहू चुहू इति ॥) विटः — ततः किम् ।

शकारः — मम पिअ कलेहि । (मम प्रियं कुरु ।)

विटः — बाढं करोमि वर्जयित्वा त्वकार्यम् ।

शकारः — भावे अकज्जाह गन्धे वि णत्थि । लक्खशि कावि णत्थि ।

(अकार्यस्य गन्धोऽपि नास्ति । राक्षसी कापि नास्ति ।)

विटः — उच्यतां तर्हि ।

शकारः — मालेहि वशन्तशेणिअं । (मारय वसन्तसेनाम् ।)

विटः — कर्णौ पिधाय ।

शकारः — अहं ते पडकं दइश्शं । अण्णं च विवित्ते उज्जाणे इध मालन्तं को तुमं पेक्खिश्शदि । (अहं त पडकं दास्यामि । अन्यच्च विविक्त उद्यान इह मारयन्तं कस्त्वां प्रेक्षिष्यते ।) तथा मम स्वामिना अनेनार्येण वसन्तसेना व्यापादिता, न चारुदत्तेनेति ब्रुवते । स चेटाय कटकं प्रयच्छन्नाह, इत्यादि ।

वधो यथा— रामायणीयेषु नाटकेषु ताटकाविराधवालिजटायुप्रभृतीनां, भारतीयेषु बकहिडिम्बकीचकाभिमन्युप्रभृतीनामिति ।

प्रत्युत्पन्नमतित्वं यथा— तापसवत्सराजे, वसन्तकेन राजा मौतिकनैष्ठिकवृत्तयोर्विशेषं पृष्टः कथयित्वाऽऽह । किं च भवान्नैष्ठिकं प्रपन्नः ?

विदूषकः— भो णा हं भोदिअ जाणामि, ण हि णटिअ, जदा तुमं एदं . . . परिच्चअसि तदा . . . जा (उण) एसा दासीए . . . एदं परिव्वाअअमण्डिअं सदसकार ण इम त . . उेच्च देवीए वासवदत्ताए सहत्थोवणीदमोद . . . पढम विअ अच्चुवं विलसिस्सं । [भो नाहं मौतिकं जानामि न नैष्ठिकं, यदा त्वमेतत्पारिव्रज्यं परित्यजसि तदा अहमपि । या पुनरेषा

पुत्री सस्त्वप्रियघाता ? दुहितेव क्षणं स्कन्धावारावतरति, एतत्परिव्राजमाण्डकं शतसत्कारं नीत्वा तत्रैव देव्या वासवदत्तया स्वहस्तोपनीतमोदकमश्नन् प्रथमकालतोऽपि अद्भुतं विलसिष्यामि । ]

राजा — (ससंभ्रमौत्सुक्य) वयस्य, कथमिव ।

विदूषकः — (प्रकाशितदाहाया वासवदत्ताया रमसाज्जीवनोच्छेदं कृत्वा हस्तमवधूय आत्मगतं) किं दाणिं एद्थ करिस्सं अहवा एव्वं दाव । (प्रकाशं) भो वयस्स, किं ण सुमरदि भवं जं भणिदं तेण भअवदा देवीं सरिसा किदीए कण्णआए पाणिग्गहं . . . देवी समाअमो दे हुविस्सदित्ति । [ किमिदानीमिह करिष्ये, अथवा एवं तावत् । भो वयस्य किं न स्मरति भवान् यत्तेन भगवता सिद्धेन भणितं यथा देवीसदृश्याः कन्यकायाः पाणिग्रहणं निर्वर्त्य देवीसमागमस्ते भविष्यतीति । इति । ]

गोत्रस्खलितं यथा— विक्रमोर्वश्याम्, अप्सरसा अन्यस्यै कथितं उर्वश्या शक्रसदसि प्रेक्षणीये पुरुषोत्तम इति वक्तव्ये तद्गतमनसा पुरूरवा इत्यभिहितमिति प्रवेशकसूचितम् ।

साहसं यथा— चन्द्रगुप्ते, स्त्रीवेषनिह्नुतश्चन्द्रगुप्तः शत्रोः स्कन्धावारमलिपुरं शकपतिवधायागमत् इति प्रयोगे दर्शितम् । शकपतिमघातयदिति च वृत्तं सूचितम् ।

भयं यथा— वेणीसंहारे, नेपथ्ये सूचितं भो भो भयस्खलितकार्मुककृपाणतोमरशक्तिकौरवबलपक्षपाततृणीकृतद्रविणसञ्चया नरपतयः सस्तभ्यतां निहितदुःशासनपीतशेषशोणितस्नपितबीभत्सवृकोदरदर्शनपरिस्खलत्प्रहराणि रणाद्विद्रवन्ति बलानि । पुनश्च मूर्छितदुर्योधनमपवाहयता सूतेनोक्तम्— कथमासन्न एवायं दुरात्मा कौरवद्रुमोत्पातमारुतो मारुतिः । अनुपलब्धसंज्ञश्च तावदत्र महाराजः। भवतु सुदूरमपहरामि स्यन्दनमित्येवं प्रयोग एव दर्शितम् ।

ह्रीर्यथा— तापसवत्सराजे, पद्मावती प्रत्याख्यानदुःखादुद्बध्यात्मानं व्यापादयन्ती वत्सराजेन निवारिता ह्रिया युक्ता । तत्र हि विदूषकः— भोदि अअं दाव धोमगुग्गुलु निबद्धओ उप्फोदृएण जडाओ विच्छोलिअ तादिसो एव्व, अह अणवराहमुंडिदो कुदो तादिसे चण्डु . . . लहिस्सं । पद्मावती लज्जावनतमुखी स्मितं करोति । पुनश्च कञ्चुकिविज्ञापनया, अनुज्ञाता राज्ञा सलज्जा अधोमुखी कञ्चुकिना सह निष्क्रान्ता ।

तथा पुंसोऽपि ह्रीर्यथा— पार्थविजये, गन्धर्वैः पराजित्य बद्धस्यार्जुनेन विक्रम्य मोचितस्य दुर्योधनस्य । तथाहि, दुर्योधनमर्जुन आह । न चाहमस्मिन् काले पाण्डवेनाहत इति मनसि सम्भावनीयम् । यस्मादभिन्नमेवार्यंयुधिष्ठिरमहाराजमवगच्छामो विशेषतोऽस्मिन्काले । पश्यतु महाराजः ।

स्वैरं कुरुपाण्डवान्तरकृतो यस्मिन्विशेषोऽस्ति नः
तस्मिंस्तत्किमसाधु यच्च कथमित्यार्या विजानन्ति तत् ।

यत्रैकाभिजनान्वये त्वभिभवः क्षत्रस्य तस्मिन्पुनः
भ्रातॄणां पुरतोऽभियोगसमये पञ्चोत्तरं न. शतम् ॥

दुर्योधनः — (सवैलक्ष्यमात्मगतम्) हृदय शिक्षयोत्तरम् । कथमिवैनमालपामि ।

भ्राताहमित्यसदृशं मम दुष्कृतैस्तै र्द्रेष्टा भवानिति तदत्र दशाविरुद्धम् ।
यद्यद्ब्रवीमि वचनं लघु तत्तु तत्र कामं भवेच्छरणमप्रतिपत्तिरेव ॥

तदत्र वैलक्ष्यमत्र लज्जानिमित्तमेव ।

माया यथा— देवीचन्द्रगुप्ते, चन्द्रगुप्तस्य कृतकोन्माद इति मानुषी माया । कृत्यारावणादिषु, कनकमृगादिरचनात्मिका त्वमानुषी ।

क्रोधो यथा— श्रीविशाखदेवकृते अभिसारिकावञ्चिते, वत्सराजः संभावितपुत्रवधायै पद्मावत्यै क्रुद्धस्तथा चाभ्यधात् ।

प्रदुष्टोग्रग्राहां सरितमवगाढः श्रमवशादुपालीनः शाखां फलकुसुमलोभाद्विपतरोः ।
फणालीढेनार्थी च्युतपरिचयां क्रौर्यनिरतां विषज्वालागर्भां चिरमुरगकन्यामनुसृतः ॥

योऽसौ पुरुषार्थसिद्धिहेतुः क्रोधस्थायीभावः, सोऽयं न भवतीत्युदाहृतम् । पुरुषार्थसिद्धिहेतुस्तु स्थायिभावो न सन्ध्यन्तरम् । ओजो यथा— देवीचन्द्रगुप्ते, विदूषकः शकपतेः शिबिरमभिप्रस्थितस्सन् नायकमाह,— भो कह दाणिं तुमं सुबहुदाणं अमच्चाण मज्झे एआई संचरिस्ससि । [ भो कथमिदानीं त्वं सुबहूनां अमात्यानां मध्ये एकाकी संचरिष्यसि ? ]

नायकः — अहं मूर्ख सत्त्वमुत्सृज्य सङ्ख्यायां बहुमानो भवतः । पश्य,

सद्वंशान्पृथुवर्ष्मविक्रमबलान्दृष्टाद्भुतान्दन्तिनो
हासस्येव गुहामुखादभिमुखं निष्क्रामतः पर्वतान् ।
एकस्यापि विधूतकेसरसटाभारस्य भीता मृगा
गन्धादेव हरेर्द्रवन्ति बहवो वीरस्य किं सख्यया ॥

एतदोजसाभिहितम् । संवरण यथा, तापसवत्सराजे,— पद्मावत्या स्विकायां वत्सराजप्रतिकृतौ दर्शितायां स्वगतमाह— कह अय्यउत्तो ? अह हदहिअअ आलिममहाणुभाव उत्त मंथेरत्तं सग्त सिवन्त ? मन्दभाइणि आआसेसि । इति ससंवरणमास्ते ।

पद्मावती — पिअसहि किं भणामि ण लज्जावेदि पिअसही एस मे जडापरिग्गहो ।
[ प्रियसखि, किं भणामि लज्जयति प्रियसखीं एष मे जटापरिग्रह. । ]

वासवदत्ता — कहं ते एसा आकिदी अणणुरूए अहिरमदि । [ कथं तव एषा आकृतिः अननुरूपे अभिरमते ? ]

सांकृत्यायनी — (सखेदमात्मगतं) अहो धैर्यं वत्सायाः, येनेयं-

दयितं विलोकयन्ती तद्गतमनसोऽपि हस्तगतमस्याः ।
अन्तर्नियमितदुःखा न मनागपि विकृतिमायाति ॥

भ्रान्तिर्यथा — रत्नावल्यां, रात्रावुद्यानसङ्केतस्थानस्थितेन राज्ञा नैपथ्यसादृश्यनिमित्तया भ्रान्त्या सागरिकेति तन्नाम्ना वासवदत्ता समाभाषिता, वासवदत्तानाम्ना सागरिका ।

हेत्ववधारणं यथा— मुद्राराक्षसे, नेपथ्ये, वैतालिकाभ्यां देवतारूपकेण प्रवृत्तशरद्गुणप्रख्यापकाशीर्वचने पठितेऽनन्तरं श्लोकद्वयं पठितम् ।

सत्त्वोत्कर्षस्य धात्रा निधय इव कृताः केऽपि कस्यापि हेतो-
र्जेतारः स्वेन धाम्ना मदसलिलमुचां नागयूथेश्वराणाम् ।
दंष्ट्राभङ्गं मृगाणामधिपतय इव त्यक्तमानावलेपाः
नाज्ञाभङ्गं सहन्ते नृवर नृपतयस्त्वादृशास्सार्वभौमाः ॥

अपि च,

भूषणाद्युपभोगेन प्रभुर्भवति न प्रभुः । परैरपरिभूताज्ञ स्त्वमिव प्रभुरुच्यते ॥

एतदाकर्ण्य चाणक्यश्चन्द्रगुप्तेनादिष्टस्य कौमुदीमहोत्सवस्य स्वयं कृतं प्रतिषेधमनुसन्धाय चन्द्रगुप्तसमुत्तेजनपरमेतदित्यवधारयन् तथा हि स्वगतमाह,— प्रथमं तावद्विशिष्टदेवतास्तुतिरूपेण प्रवृत्तशरद्गुणप्रख्यापनमाशीर्वचनमपरं किमित्यवधारयामि । (विचिन्त्य), आः, भवतु ज्ञातम् । राक्षसस्यायं प्रयोगः । आकाशे लक्ष्यं बध्वा, राक्षस राक्षस दृश्यसे भो दृश्यसे । जागर्ति खलु कौटिल्यः । अत्र राक्षसप्रयुक्ते हेतोरवधारणम् ।

दूतो यथा — पार्थविजये, भगवान् वासुदेवो दुर्योधनस्य दूतो गतः ।

लेखो यथा— तापसवत्सराजे, प्रद्योतेन वासवदत्तायाः प्रहितलेखे, 'वत्से त्वां स्वजनाशिवामविषयं पत्युःप्रसादैर्गतां श्रुत्वाहं सुखितः ।'

वासवदत्ते पद्मावतीमस्वस्थां दृष्ट्वा राजा समुद्रगृहकं गतः । पद्मावतीरहितं च तदवलोक्य तस्या एव शयनीये सुष्वाप । वासवदत्तां च स्वप्नवदस्वप्नेदृदर्श । स्वप्नायमानश्च वासवदत्तामाबभाषे । स्वप्नशब्देन चेह स्वापो वा स्वप्नदर्शनं वा स्वप्नायितं वा विवक्षितं, सर्वत्रेदमेवोदाहरणम् । सर्वेषां संभवात् ॥ चित्रं यथा, रत्नावल्यां,— चित्रगतां सागरिकां दृष्ट्वा

वत्सराजस्य कामरसमुत्पन्नः । . . मानिनो भवस्य चेतिहासेषु दर्शितं रावणस्यापि नाटकेषु कविभिर्निबन्धः । यथा कृत्यारावणे,— विमानस्थो रावणो मदादाह—

भीता ... किममरारसमराभिमानमुत्सृज्य तिष्ठति रिपौ न हि मेऽस्ति वैरम् ।
स्वश्रोऽरुगत्रजविकृष्टखलीनपाशः प्रेष्येषु किं दशशिराः प्रहिणोति शस्त्रम् ॥

अथ पाननिमित्तो यथा मालविकाग्निमित्रे । तत्र हि, इरावती प्रविश्य युक्तिमत्ता प्रविश्य . . . विसेसमंडनं इत्थिआ अणरसत्ति अविसस चोलो अप्पवादो ।

चेटी— पढमं लोअप्पवादो पद्य । अज्ज उण सच्चो संउत्तो ।

अथ पताकास्थानानि चत्वारि ।

यत्रार्थे चिन्तितेऽन्यस्मिंस्तल्लिङ्गोऽन्यः प्रयुज्यते ।
आगन्तुकेन भावेन पताकास्थानकं तु तत् ॥

तच्चतुर्धा,

सहसैवार्थसम्पत्तिर्गुणवत्युपकारतः । पताकास्थानकमिदं प्रथमं परिकीर्तितम् ॥

कृच्छ्रमापतितं रामगुप्तस्कन्धावारमनुजिघृक्षुरुपायान्तरागोचरे प्रतिकारे निशि वेतालसाधनमध्यवस्यत् । कुमारचन्द्रगुप्ते, आत्रेयेण विदूषकेणोक्तम् ।

विदूषकः— भो सक्कं दाणिं भवदा इमाए वेलाए ममंदारआणं ■ आसादो पदादो पदं वि गंतुं ॥ नायकः— स्वगतम्, अत्रोपायश्चिन्तनीयः ।

प्रविश्य पठलकहस्ता चेटिका ॥ चेटी— जअजअदु कुमारो कुमार कहिं अज्जु मा . . अज्जखु अज्जआ केण विकारणेण अअ विमणा कुमार पेक्खामित्ति भणंती रामउलादो णिक्कंता । इमं च सेदेवीए धुवदेवीए ससरीरपरिभुत्तं वसाहणअ पसादीकिदं गाहिअकुठारं ससमीपे अज्जुअ . मण्णा आगदंधिअ पत्तेअसोमि इमं जाव अज्जुअ अण्णेसामि । (निष्क्रान्ता.)

विदूषकः — आ दासीए धीटे कितव अह भडागारिओ गच्छ वेच्छि इति यवनिकान्तरितः स्त्रीवेषं कृत्वा निष्क्रान्तः । तदेवमन्यथा निर्गमनोपाये चिन्त्यमाने स्त्रीवेषः साधनमुपगतमिति सामान्यलक्षणानुगमात्तद्भेदश्चेटीवचनप्रयुक्तमेकं पताकास्थानकमिति ।

वचः सातिशयं श्लिष्टं काव्यबन्धसमाश्रयम् । पताकास्थानकमिदं द्वितीयं परिकल्पितम् ॥

यथा रामाभ्युदये, तृतीयेऽङ्के सुग्रीवः संदिशति ।

बहुनात्र किमुक्तेन पारेऽपि जलधेः स्थिताम् । अचिरादेव देवि त्वामार्यः प्रश्वासयिष्यति ॥

अत्र जलधेः पारस्य दुर्गत्वात् दुष्कर प्रश्वासं मन्यमानो रामपराक्रमस्य तत्राप्रतिघातादतिशयमुपवर्णयंश्चिन्त्यमानेषु देशान्तरेषु सुकरतां प्रश्वासने भाविनीं ख्यापयति, नतु जलधेः पारे स्थितां ज्ञात्वैव ।

अर्थप्रक्षेपणं यत्र हीनं सविनयं भवेत् । श्लिष्टप्रत्युत्तरोपेतं तृतीयमिदमिष्यते ॥

यथा मुद्राराक्षसे— चाणक्येन स्वचरितात् प्रयोगाद्राक्षसग्रहणे सन्देहादाशंसिते सिद्धार्थवचनसङ्घट्टनया निश्चय उपक्षिप्तः । तत्र चाणक्यः – अपि नाम दुरात्मा राक्षसो गृह्येत ।

सिद्धार्थकः — अयं गहीदो ।

चाणक्यः — सहर्षमात्मगतं, हन्त गृहीतो दुरात्मा राक्षसः । (प्रकाशं) भद्र, अथ कोऽयं गृहीतः । सिद्धार्थकः — गहीदो अय्यसदेसोत्ति ।

द्व्यर्थे वचनविन्यासः सुश्लिष्टः कार्ययोजितः । उपन्याससुयुक्त वं तच्चतुर्थमुदाहृतम् ॥

यथा रत्नावल्यां, राजा नवमालिकोपन्यासादाह,

उद्दामोत्कलिकां विपाण्डुररुचं प्रारब्धजृम्भां क्षणा-
दायासं श्वसनोद्गमैरविरतैरातन्वतीमात्मनः ।
अद्योद्यानलतामिमां समदनां नारीमिवान्यां ध्रुवं
पश्यन्कोपविपाटलद्युति मुखं देव्याः करिष्याम्यहम् ॥

अत्र वत्सराजस्य वासवदत्तया सह नवमालिकामाधवीलतयोः प्रथमकुसुमोद्गमनिमित्ते समाह्वये विषयसुखमभिलषतः सागरिकासंदर्शनं सुखनिमित्तद्वितीयार्थाभिधानादागामि प्रयुक्तं, अयं च वचनविन्यासः सुश्लिष्टो नितरामुपक्षेपणार्थेनालिङ्गितः प्रसङ्गादुक्तः, सेयं द्वितीया चतुष्पष्टिः ।

अथ तृतीया सन्ध्यङ्गचतुष्षष्टिरित्याचक्षते ।

सन्धीनां यानि वृत्तानि पुनरुक्तानि पूर्वशः । सुसम्पद्गुणयुक्तानि तान्यङ्गान्यपराधयेत् ॥
इष्टस्यार्थस्य रचना वृत्तान्तस्यानुपक्षयः । अनुरागप्रयोगस्य गुह्यानां च निगूहनम् ॥
आश्चर्यवदभिख्यानं प्रकाश्यानां प्रकाशनम् । अङ्गानां षड्विधं ह्येतद्दृष्टं शास्त्रे प्रयोजनम् ॥
अङ्गहीनो नरो यश्च नैवारम्भक्षमो भवेत । अङ्गहीनस्तथा कार्यं न प्रयोगक्षमं भवेत् ॥
काव्यं पद्विहीनार्थं सम्यगङ्गैः समन्वितम् । भाभामेति न संशयः ॥
उदात्तकार्यं यत्तत्र स्यादङ्गैः परिवर्जितम् । हीनत्वाद्धि प्रयोगस्य न सतां रञ्जयेन्मनः ॥
तस्मात्सन्धिप्रयोगेषु यथाकाव्यं यथारसम् । कार्याण्यङ्गानि तेषां नु प्रविभागः प्रदश्यते ॥
आक्षेपश्च परीकर्म परिन्यासो विलोभनम् । युक्तिःप्राप्तिस्समाधानं विधानं परिभावना ॥
उद्भेदः कारणं भेदः ॥ इति ॥

मुखसन्धौ द्वादशाङ्गानि । विलासः, परिसर्पः, विधूतं, तापनं, नर्म, नर्मगर्भः, नर्मस्फोटः, नर्मद्युति, पर्युपासनं, पुष्पं, वज्रं, वर्णसंहार इति । प्रमतिमुखसन्धावपि द्वादशाङ्गानि । अभूता॰,

हरणं, मार्गः, रूपं, उदाहरणं, क्रमं, सङ्ग्रहः, अनुमानं, प्रार्थना, आक्षिप्तिः, तोटकं, अधिबलं, उद्वेग इति। गर्भसन्धौ त्रयोदशाङ्गानि। विद्रवः, अपवादः, संस्फोटः, शक्तिः, व्यवसायः, प्रसङ्गः, कान्तिः, खेदः, प्रतिषेधः, विरोधनं, आदानं, साधनं, प्ररोचनेति। विमर्शसन्धावपि त्रयोदशैवाङ्गानि। विशेषण, द्युतिः, प्रसादः, आननं, समयः, उपगूहनं, भाषणं, पूर्ववाक्यं, वाक्यसंहारः, प्रशस्तिरित्यादि। निर्वहणसन्धौ चतुर्दशाङ्गानि। सैषा सन्ध्यङ्गचतुष्षष्टिर्नाटकादिषु महाकाव्यादिषु च पूर्वसंख्यादिषु निबन्धनीयानि। प्रतिसन्धि च यान्यङ्गानि पठितानि तावतामेव क्रमेण निबन्धः कार्य इत्येष प्रचुरः प्रयोगः। संविधानवशाच्च न्यूनाधिकभावेन व्युत्क्रमेण च प्रयोग इत्येतदप्यवगन्तव्यमिति। तेष्वथ मुखाङ्गानि तावत्

काव्यार्थस्य समुत्पत्तिरुपक्षेप इति स्मृतः ॥

यथा रत्नावल्यां, यौगन्धरायणः सूत्रधारानन्तरं,– एवमेतत्। कस्सन्देहः !

द्वीपादन्यस्मादपि मध्यादपि जलनिधे र्दिशोऽप्यन्तात्।
आनीय झडिति घटयति विधिरभिमुखमभिमुखीभूतः ॥

यथा च वेणीसंहारे सूत्रधारः –

निर्वाणवैरदहनाः प्रशमादरीणां नन्दन्तु पाण्डुतनयाः सह माधवेन।
रक्तप्रसाधितभुवः क्षतविग्रहाश्च स्वस्था भवन्तु कुरुराजसुताः सभृत्याः ॥

समुत्पन्नार्थबाहुल्याज्ज्ञेयः परिकरस्तु सः ॥

यथा वेणीसंहारे, भीमः – सहदेव, उच्यतां मद्वचनादार्यः।

युष्मच्छासनलङ्घनांभसि मया मग्नेन नाम स्थितं
प्राप्ता नाम विगर्हणा स्थितिमतां मध्येऽनुजानामपि।
क्रोधोल्लासितशोणितारुणगदस्योच्छिन्दतः कौरवा-
नद्यैकं दिवसं ममासि न गुरु र्नाहं विधेयस्तव ॥

तन्निष्पत्तिः परिन्यासो विज्ञेयः कविभिः सदा ॥

यथा रत्नावल्यां, यौगन्धरायणः – तदेवं निष्पन्नप्रायमपि प्रभुप्रयोजनं न मे धृतिमावहतीति कष्टोऽयं खलु भृत्यभावः। इति यावत्। यथा च वेणीसंहारे –

चञ्चद्भुजभ्रमितचण्डगदाभिघातसंचूर्णितोरुयुगलस्य सुयोधनस्य।
स्त्यानावनद्धघनशोणितशोणपाणिरुत्तंसयिष्यति कचांस्तव देवि भीमः ॥

गुणनिर्वर्णनं चैव विलोभनमिति स्मृतम् ॥

यथा रत्नावल्याम्, यौगन्धरायणः रत्नावलीतो विलोभनार्थमाह—

विश्रान्तविग्रहकथो रतिमाञ्जनस्य चित्ते वसन् प्रियवसन्तक एव साक्षात् ।
पर्युत्सुको निजमहोत्सवदर्शनाय वत्सेश्वरः कुसुमचाप इवाभ्युपैति ॥

यथा च वेणीसंहारे—

मन्थायस्तार्णवाम्भःप्लुतकुहरवलन्मन्दरध्मानधीरः
कोणाघातेषु गर्जन्प्रलयघनघटान्योन्यसङ्घट्टचण्डः ।
कृष्णाक्रोधाग्रदूतः कुरुकुलनिधनोत्पातनिर्घातवातः
केनास्मत्सिंहनादप्रतिरसितसखो दुन्दुभिस्ताड्यतेऽयम् ॥

सम्प्रधारणमर्थानां युक्तिरित्यभिधीयते ॥

यथा रत्नावल्यां, राजा—

राज्यं निर्जितशत्रु योग्यसचिवे न्यस्तः समस्तो भरः
सम्यक्पालनलालिताः प्रशमिताशेषोपसर्गाः प्रजाः ।
प्रद्योतस्य सुता वसन्तसमयस्त्वं चेति नाम्ना धृतिं
कामः काममुपैत्वयं मम पुनर्मन्ये महानुत्सवः ॥

यथा वेणीसंहारे, सहदेवः— आर्य किं महाराजस्य सदेशोऽभ्युत्पन्न इव गृहीतः ।
भीमः— का पुनरार्यस्य व्युत्पत्तिः सह ?
सहदेवः— एवमार्येण सन्दिष्टं सुयोधनस्य ।

इन्द्रप्रस्थं वृकप्रस्थं जयन्तं वारणावतम । प्रयच्छ चतुरो ग्रामान्कंचिदेकं तु पञ्चमम् ॥

तदेवमनया प्रतिनामग्रामप्रार्थनया पञ्चमस्य चाकीर्तनाद्विषभोजनजतुगृहदाहद्यूतसमाद्यपकार-स्थानोद्घाटनमेवेदं मन्ये । इति ॥

सुखार्तस्योपगमनं प्राप्तिरित्यभिधीयते ॥

यथा रत्नावल्यां, वसन्तकेन मदनमहोत्सवे वर्णितप्रकारमिदं वसन्तकेनानेकविधं मदनिकां नृत्यन्तीं पश्यन् सुखातिशयमनुभूतवान् ।

यथा च वेणीसंहारे, चेटी— (सानन्दं) भट्टिणि परिकुविदो विअ कुमालो लक्खीअदि ।
(भट्टिनि, परिकुपित इव कुमारः लक्ष्यते ।)

द्रौपदी— हञ्जे जइ एवं ता अवहीरणाधि एसा मं आसासअदि ता एत्थ उवविट्ठा भविअ सुणोमि दाव णाहस्स ववसिदं। (हञ्जे, यद्येव तदवधीरणाप्येषा मामाश्वासयति। तदुपविष्टा भूत्वा शृणोमि तावन्नाथस्य व्यवसितम्।) भीमसेनः —

मथ्नामि कौरवशतं समरे न कोपात् दुश्शासनस्य रुधिरं न पिबाम्युरस्तः।
संचूर्णयामि गदया न सुयोधनोरू सन्धिं करोतु भवतां नृपतिः पणेन॥

द्रौपदी— णाह अस्सुदपुव्वं क्खु दे एदिसं वअणं। ता पुणो विदाव भणाहि॥
(नाथ अश्रुतपूर्वं खलु ते ईदृशं वचनम्। तत्पुनरपि तावद्भण।)

बीजार्थस्योपगमनं समाधानमिति स्मृतम्॥

यथा रत्नावल्यां, चेट्यौ— णहि णहि विण्णवेदि। (नहि नहि, विज्ञापयति।)

राजा— (विहस्य सादरं) मदनिके, नन्वाज्ञापयतीत्येतदेव रमणीयम्। विशेषतोऽद्य मदनोत्सवे। तत्किमाज्ञापयति देवी?

चेट्यौ — एवं देवी विण्णवेदि। अज्ज खु मए मअरंदुज्जाणं गदुअ रत्तासोअपाअवतलसंट्ठाविदस्स भअवदो कुसुमाउहस्स पूआ णिव्वत्तइदव्वा। तहिं अज्जउत्तेण संणिहिदेण होदव्वं॥ (एवं देवी विज्ञापयति। अद्य खलु मया मकरन्दोद्यानं गत्वा रक्ताशोकपादपतलसंस्थापितस्य भगवतः कुसुमायुधस्य पूजा निर्वर्तयितव्या। तत्र आर्यपुत्रेण संनिहितेन भवितव्यम्।)

विदूषकः — भो वअस्स, ता उट्ठेहिं तहिं जेव्व गच्छम्ह जेण तहिं गदस्स बम्हणबालअस्स मे सोत्थिवाअणं किंपि भविस्सदित्ति। (भो वयस्य, तदुत्तिष्ठ। तत्रैव गच्छावः येन तत्र गतस्य ब्राह्मणबालकस्य मम स्वस्तिवायनं किमपि भविष्यतीति।)

यथा च वेणीसंहारे, द्रौपदी— णाह मा क्खु मा क्खु जण्णसेनीपरिहवुद्दीविदकोवाणला अणवेक्खिदसरीरा संचरिस्सध। जदो अप्पमत्तसंचरिणिज्जाइं रिउबलाइं सुणीअन्ति। (नाथ, मा खलु मा खलु याज्ञसेनीपरिभवोद्दीपितकोपानला अनवेक्षितशरीराः संचरिष्यथ। यतोऽप्रमत्तसंचरणीयानि रिपुबलानि श्रूयन्ते।)

भीमसेनः — अयि सुक्षत्रिये,

अन्योन्यास्फालभिन्नद्विपरुधिरवसामांसमस्तिष्कपङ्के
मग्नानां स्यन्दनानामुपरिकृतपदन्यासविक्रान्तपत्तौ।
स्फीतासृक्पानगोष्ठीरसदशिवशिवातूर्यनृत्यत्कबन्धे
संग्रामैकार्णवान्तःपयसि विचरितुं पण्डिताः पाण्डुपुत्राः॥

सुखदुःखान्वितो योऽर्थस्तद्विधानमिति स्मृतम् ॥

यथा रत्नावल्यां, काञ्चनमाला— देवि, अअ सो रत्तासोअपाअवो जहिं देवी अणंगस्स पूअं णिवट्टइस्सदि। (देवि, अयं स रक्ताशोकपादपो यत्र देवी अनङ्गस्य पूजां निर्वर्तयिष्यति।)

वासवदत्ता— तेण हि उवणेहि मे पूआणिमित्ताइं उवअरणाइं। (तेन हि उपानय मे पूजानिमित्तानि उपकरणानि।)

सागरिका— (उपसृत्य) भट्टिणि, एदं सव्वं सज्जम्। (एतत्सर्वं सज्जितम्।)

वासवदत्ता— (निरूप्य स्वगतं), अहो पमादो परिअणस्स। जस्स जेव्व दंसणपधादो पअत्तेण रक्खीअदि तस्स ज्जेव दिट्ठिगोअरे पडिदा भवे। भोदु। एवं दाव भणिस्सं। (प्रकाशं) हञ्जे साअरिए, कीस तुमं अज्ज मअणमहूसववराहीणे परिअणे सारिअं उज्झिअ इहागदा। ता तहिं ज्जेव लहु गच्छ। एदं वि सव्वं पूओवअरणं कंचणमालाए हत्थे समप्पेहि।
(अहो प्रमादः परिजनस्य। यस्यैव दर्शनपथात्प्रयत्नेन रक्ष्यते तस्यैव दृष्टिगोचरे पतिता भवेत्। भवतु। एवं तावद्भणिष्यामि। हञ्जे सागरिके, कस्मात्त्वमद्य मदनमहोत्सवपराधीने परिजने सारिकामुज्झित्वेहागता। तत्तत्रैव लघु गच्छ। एतदपि सर्वं पूजोपकरणं काञ्चनमालाया हस्ते समर्पय।)

सागरिका— जं भट्टिणी आणवेदि। (इति कतिचित्पदानि गत्वा आत्मगतम्) सारिआ मए उण सुसंगदाए हत्थे समप्पिदा। एदं वि अत्थि मे पेक्खिदुं कोदूहलं। किं जहा तादस्स अन्तेउरे भअवं अणंगो अच्चिअदि। इह वि तह ज्जेव अण्णहेत्ति। ता अलक्खिआ भविअ पेक्खिस्सम्। [यद्भट्टिन्याज्ञापयति। सारिका मया पुनः सुसङ्गताया हस्ते समर्पिता। एतदप्यस्ति मे प्रेक्षितुं कौतूहलम्। किं यथा तातस्यान्तःपुरे भगवाननङ्गोऽर्च्यते अत्रापि तथैव किमन्यथेति। तदलक्षिता भूत्वा प्रेक्षिष्ये।]

यथा च वेणीसंहारे, द्रौपदी— अण्णं च णाह पुणोवि तुम्हेहिं समरादो आअच्छिअ अहं समासासइदव्वा। [अन्यच्च, नाथ पुनरपि युष्माभिः समरादागत्याहं समाश्वासयितव्या।]

भीमसेनः— ननु पाञ्चालराजतनये किमद्याप्यलीकाश्वासनया।

भूयःपरिभवक्लान्तिलज्जाविधुरिताननम्। अनिःशेषितकौरव्यं न पश्यसि वृकोदरम् ॥

कुतूहलोत्तरावेघः प्रोक्ता तु परिभावना ॥

यथा रत्नावल्यां, सागरिका— कहं पचेक्खो य्वेव मअवंतकुसुमाउहो पच्चीअदि।

यथा वेणीसंहारे, द्रौपदी— किं दाणिं एसो। (किमिदानीमेषः।)

.... प्ररोहो य उद्भेदः स तु कीर्तितः ॥.

यथा रत्नावल्यां नेपथ्ये वैतालिकः —

अस्तापास्तसमस्तभासि नभसः पारं प्रयाते रवा-
वास्थानीं समये समं नृपजनस्सायन्तने सम्पतन् ।
सम्प्रत्येत्र सरोरुहद्युतिमुषः पादांस्तवासेवितुं
प्रीत्युत्कर्षकृतो दृशामुदयनस्येन्दोरिवोद्वीक्षते ॥

सागरिका — (सहर्षं परिवृत्य सस्पृहं पश्यन्ती) कहं अअं सो राआ उदअणो जस्स अहं तादेण दिण्णा । (कथमयं स राजा उदयनो यस्याहं तातेन दत्ता ।)

यथा च वेणीसंहारे, भीमसेनः — रणयज्ञः । तथाहि ।

चत्वारो वयमृत्विजः स भगवान्कर्मोपदेष्टा हरिः
संग्रामाध्वरदीक्षितो नरपतिः पत्नी गृहीतव्रता ।
कौरव्याः पशवः प्रियापरिभवक्लेशोपशान्तिः फलं
राजन्योपनिमन्त्रणाय रसति स्फीतं यशोदुन्दुभिः ॥

प्रकृतार्थसमारम्भं कारणं परिचक्षते ॥

यथा रत्नावल्यां, सागरिका — कहं अअं सो राआ उदअणो जस्स अहं तादेण दिण्णा । तापरप्पेसणकरिसिदं वि मे सरीरं एदस्स दंसणेण दाणीं बहुमदं संवुत्तम् । [कथमयं स राजा उदयनो यस्याहं तातेन दत्ता । तत्परप्रेषणकलुषमपि मे शरीरमेतस्य दर्शनेनेदानीं बहुमतं संवृत्तम् ।]

यथा वेणीसंहारे —

सहदेवः – आर्य, गच्छामो वयमिदानीं गुरुजनेनानुज्ञाता विक्रमानुरूपमाचरितुम् ।

भीमसेनः – वत्स एते वयमुद्यता एवार्यस्यानुज्ञामनुष्ठातुम् । (उत्थाय), देवि, गच्छामो वयमिदानीं कुरुकुलक्षयायेति ।

सङ्घातरूपभेदो यः स भेद इति कीर्तितः ॥

यथा रत्नावल्यां, सागरिका— दिट्ठं जं दिट्ठव्वं (दृष्टं यद्द्रष्टव्यं) इत्यादि भणित्वा निर्गता।

यथा च वेणीसंहारे– वासुदेवोपक्रान्तः सन्धिप्रयत्नो निरस्तः ।

यत्सत्यव्रतभङ्गभीरुमनसा यत्नेन मन्दीकृतं
यद्विस्मर्तुमपीहितं शमवता शान्तिं कुलस्येच्छता ।

तद्द्यूतारणिसम्भृतं नृपवधूकेशाम्बराकर्षणैः
क्रोधज्योतिरिदं महत्कुरुवने यौधिष्ठिरं जृम्भते ॥

भीमसेनः – (आकर्ण्य, सहर्षं) जृम्भतां जृम्भतामप्रतिहतप्रसरमार्यस्य क्रोधज्योतिरिति ।

अथ प्रतिमुखाङ्गानि द्वादश । . . . हा रतिभोगार्थो विलासः परिकीर्तितः ॥

यथा रत्नावल्यां, चित्रगतेनापि नायकेन सह सम्भोगसुखमवगच्छन्त्या सागरिकया यदुक्तम् ।

यथा वेणीसंहारे, राजा— विनयन्धर अद्य खलु भानुमती यथापूर्वं मामनामन्त्र्यैव वास-भवनात्प्रातरेव निष्क्रान्तेति व्याक्षिप्तं मे मनः ।

. . . . . नुसरणं परिसर्पः ॥

यथा रत्नावल्यां, सागरिका राजानमालिखन्ती दृष्टा सुसङ्गतयाऽभ्यधायि ।

किं पुण एसा गुरुअणुराओवित्तहिअआ किं पि आलिहंती मं पि ण पेक्खदि । भोदु । ता जाव इमाए दिट्ठिपहं परिहरिअ णिरूवइस्सं किं एसा आलिहदित्ति । [किं पुनरेषा गुर्वनुरागो-त्क्षिप्तहृदया किमप्यालिखन्ती मामपि न प्रेक्षते । भवतु । तद्यावदस्या दृष्टिपथं परिहृत्य निरूप-यिष्यामि किमेषाऽऽलिखतीति ।]

यथा वेणीसंहारे, कञ्चुकी— साधु पतिमते साधु स्त्रीस्वभावेऽपि वर्तमाना वरं भवती न पुनर्महाराजः योऽयमुद्यतेषु बलवत्स्वबलवत्सु वा वासुदेवसहायेषु पाण्डुपुत्रेष्वरिष्वद्याप्यन्तः-पुरविहारमनुभवति । इदमपरमयथातथं स्वामिनश्चेष्टितम् । कुतः,

आशस्त्रग्रहणादकुण्ठपरशोस्तस्यापि जेता मुने-
स्तापायास्य न पाण्डुसूनुभिरयं भीष्मः शरैः शायितः ।
प्रौढानेकधनुर्धरारिविजयश्रान्तस्य चैकाकिनो
बालस्यायमरातिलूनधनुषः प्रीतोऽभिमन्योर्वधात् ॥

कृतस्य विनयस्यादौ विधूतं ह्यपरिग्रहः ॥

यथा रत्नावल्यां, सुसङ्गता— (सागरिकाया हृदये हस्तं दत्त्वा), सहि समस्सस सम-स्सस । जाव इमाए दिग्घिआए णलिणीपत्ताइं मुणालिआइं अ गेण्हिअ लहुं आअच्छामि । [सखि, समाश्वसिहि समाश्वसिहि । यावदस्या दीर्घिकाया नलिनीपत्राणि मृणालिकां च गृहीत्वा लघ्वागच्छामि ।] उत्थाय परिक्रम्योपसृत्य नलिनीपत्राणि मृणालिकानि च नाट्येन हृदयेऽस्या ददाति ।

सागरिका— (पत्राणि विक्षिपन्ती), सहि, अवणेहि इमाइं णलिणीपत्ताइं मुणालिआइं अ । अलं एदिणा । कीस अआरणे अत्ताणं आआसेसि । [सखि, अपनयेमानि नलिनीपत्राणि मृणालिकानि च । अलमेतेन । किमकारण आत्मानमायासयसि ।]

यथा च वेणीसंहारे, द्वितीये अङ्के, राजा— अयि प्रिये,

विकिर धवलदीर्घापाङ्गसंसर्पि चक्षुः परिजनपथवर्तिन्यत्र किं सम्भ्रमेण ।
स्मितमधुरमुदारं देवि मामालपोच्चैः प्रभवति मम पाण्योरञ्जलिः सेवितुं त्वाम् ॥

भानुमती— अज्जउत्त अब्भणुण्णादाए तुए अत्थि मे कस्सिं वि णिअमे अहिलासो । ता अणुमण्णदु मं अज्जउत्तोत्ति । [आर्यपुत्र अभ्यनुज्ञातायास्त्वया अस्ति मे कस्मिन्नपि नियमेऽभिलाषः । तदनुमन्यतां मामार्यपुत्रः । इति ॥

अपायदर्शनं यत्तु तापनं नाम तद्भवेत् ॥

यथा रत्नावल्यां सागरिका—

दुल्लहजणअणुराओ लज्जा गुरुई परव्वसो अप्पा ।
पिअसहि विसमं प्पेम्मं मरणं सरणं णु वरमेक्कम् ॥

[दुर्लभजनानुरागो लज्जा गुर्वी परवश आत्मा । प्रियसखि विषमं प्रेम मरणं शरणं नु वरमेकम् ॥]

यथा च वेणीसंहारे, सुवदना— सहि भाणुमदि कीस दाणीं तुमं सिविणअदंसणमेत्तस्स किदे अहिमाणिणो महाराअदुज्जोहणस्स महिसी भविअ एवं विअलिअधीरभावा अतिमेत्तं संतप्पसि । [सखि भानुमति, कस्मादिदानीं त्वं स्वप्नदर्शनमात्रस्य कृते अभिमानिनो महाराजदुर्योधनस्य महिषी भूत्वैवं विगलितधीरभावातिमात्रं संतप्यसे ।]

भानुमती— हञ्जे एवं ण्णेदम् । किंदु एदं सिविणअं अदिमेत्तं अकुसलदंसणं मे पडिभादि । [हञ्जे एवमेतद् । किंत्वयं स्वप्नोऽतिमात्रकुशलदर्शनो मे प्रतिभाति । ]

क्रीडाविलोभनार्थं च हास्यं नर्मेति कीर्तितम् ॥

यथा रत्नावल्यां, विदूषकः— (कर्णं दत्वा, ससंभ्रमं राजानं हस्ते गृहीत्वा,) भो वयस्स, एहि पलाअम्ह । एदस्सिं बउलपाअवे को वि भूदो पडिवसदि । जई मम वअणं ण पत्तिआअसि ता अग्गदो भवीअ सअं आअण्णेहि । [भो वयस्य, एहि पलायावः । एतस्मिन् बकुलपादपे कोऽपि भूतः प्रतिवसति । यदि मम वचनं न प्रत्याययसि तदग्रतो भूत्वा स्वयमेवाकर्णय ।]

राजा— आकर्ण्य, वयस्य, शारिकेयमिति ।

यथा च वेणीसंहारे, राजा कृतावकुण्ठनश्चेत्या हस्तं गृहीत्वा भानुमत्या अर्घ्यपात्रमुपनयति ।

भानुमती — स्पर्शमभिनीय सोत्कम्पमर्घ्यपात्रं धारयति । सखाध्वसाया हस्तात्पुष्पाणि पतन्ति । राजानमनवलोक्य, सरोषं, अहो पमादो परिअणस्स । कधं अज्जउत्तो ।
[अहो प्रमादः परिजनस्य । कथमार्यपुत्रः ।]

राजा— देवि, अनिपुणः परिजनोऽयमेवंविधे सेवावकाशे । तदत्रभवत्यत्रानुशासने देवी ।

दोषप्रच्छादनार्थं तु हास्यं नर्मद्युतिः स्मृता ॥

यथा रत्नावल्यां, विदूषकः — ऊर्ध्वं विलोक्य, कहं सच्चं एव्व सारिआ। (दण्डकाष्ठमुद्यम्य) आः दासीए धीए तुमं जाणासि किं सच्चं एव्व वसन्तओ भाअदित्ति। ता चिट्ठ चिट्ठ दाव मुहुत्तं जाव इमिणा पिसुणजणहिअअकुटिलेण दंडअट्ठेण परिपक्कं विअ कइत्थफलं इमादो वउळपाअवादो पाडइस्समित्ति। [कथं सत्यमेव शारिका। आः दास्याः पुत्रि, त्वं जानासि सत्यमेव वसन्तको बिभेतीति। तत्तिष्ठ तिष्ठ तावन्मुहूर्तं यावदेतेन पिशुनजनहृदयकुटिलेन दण्डकाष्ठेन परिपक्वमिव कपित्थफलमस्माद्बकुलपादपादात्मानं पातयिष्यामीति।

यथा च वेणीसंहारे, राजा — सपरिहासम्, श्रुत वेत्सि त्वमवत्याः स्वप्नवृत्तान्तं प्रति। तदलमेवं प्रकृतिसुकुमारमात्मानं खेदयितुम्।

उत्तरोत्तरवाक्यं तु भवेत्प्रशमनं तथा ॥

यथा रत्नावल्यां विदूषकः — भो वयस्स, एसा क्खु सारिआ दासीए दुहिदा चउव्वेदी बह्मणो विअ रिचाइं भणिदुं पउत्ता। [भो वयस्य, एषा खलु शारिका दास्या दुहिता चतुर्वेदी ब्राह्मण इव ऋचो भणितुं प्रवृत्ता।]

राजा — कथय किमप्यन्यचेतसा मया नावधारितं, किमनयोक्तम्।

विदूषकः — भो एवाए मंतिदं। (भो एतया मन्त्रितं),

दुल्लहजणाणुराओ॥ (दुर्लभजनानुरागो) इत्यादि पठति।

राजा — (सहासं) महाब्राह्मण, भवन्तं मुक्त्वा कोऽन्य एवमृचामभिज्ञः।

विदूषकः — तदो किं णु खु एदं। (ततः किं नु खल्विदम्?)

राजा — वयस्य, ननु गाथा। इदं कयापि श्लाघ्ययौवनया प्रियतममनासादयन्त्या जीवितनिरपेक्षयोक्तम्।

विदूषकः — किं एदेहिं वक्कभणिदेहिं। उज्जुअं एव्व किं ण भणसि जह मं अणासाअअन्तीए त्ति। अण्णहा को अण्णो कुसुमचावव्ववदेसेन णिण्हवीअदि। [भो किमेतैर्वक्रभणितैः। ऋजुकमेव किं न भणसि यथा मामेवानासादयन्त्येति। अन्यथा कोऽन्यः कुसुमचापव्यपदेशेन निह्नूयते।]

यथा च वेणीसंहारे, प्रविश्य कञ्चुकी— भग्नम्। दुर्योधनः— केन? कञ्चुकी— भीमेन।

दुर्योधनः — कस्य? कञ्चुकी — भवतः। दुर्योधनः — किमुक्तं प्रलपसि?

कञ्चुकी — (सभयं) देव, भग्नं भीमेन भवतो मरुता रथकेतनम्॥ इति॥

सुखानां सन्निवेशो यः स निरोधः प्रकीर्तितः ॥ ६८

यथा रत्नावल्यां, राजा — धिङ्मूर्ख। किमुच्चैर्हसता त्वयेयं त्रासिता? येनोड्डीयान्यत्र क्वापि गतेति।

यथा वेणीसंहारे, भानुमत्या सह सुखासीने राजनि प्रविश्य जयद्रथमाता दुःशला च ।

माता — परित्ताअदु परित्ताअदु कुमालो । (परित्रायतां परित्रायतां कुमारः ।)

राजा — (ससंभ्रममुत्थाप्य) अम्ब समाश्वसिहि समाश्वसिहि । अपि कुशलं समराङ्गणेष्वप्रतिरथस्य जयद्रथस्य ।

माता — जाद कुदो कुसलम् । (जात कुतः कुशलम्) इत्यादि ॥

क्रुद्धस्याननुयोगस्तु भवेत्तत्पर्युपासनम् ॥

यथा रत्नावल्यां, विदूषकः — भो एसा खु कअलीहरं एव गदा । ता एहि तुरिअमणुसरेह्म । (भो वयस्य, एषा कदलीगृहमेव गता । तदेहि त्वरितमनुसरावः ।)

यथा च वेणीसंहारे, राजा — कञ्चुकिनमुद्दिश्य, विनयन्धर किमाह भवान् एको बहुभिर्बालो लूनशरासनश्च निहत इत्यत्र का श्लाघा कुरुपुङ्गवानामिति । मूढ पश्य ।

हते जरति गाङ्गेये पुरस्कृत्य शिखण्डिनम् । या श्लाघा पाण्डुपुत्राणां सैवास्माकं भविष्यति ।

विशेषवचनं यत्तु तत्पुष्पमिति संज्ञितम् ॥

यथा रत्नावल्यां, विदूषकः — भो एदं तं जं मए भणिदं तुमं जेव्व एत्थ आलिहिदो । अण्णहा को अण्णो कुसुमचावव्ववदेसेण णिण्हवीअदि त्ति । (भो, एतत्तद्यन्मया भणितं त्वमेवात्राऽऽलिखितः । अन्यथा कोऽन्यः कुसुमचापव्यपदेशेन निह्नूयत इति ।)

यथा च वेणीसंहारे, राजा — भद्रे विकल्पेन । स्वप्नदर्शनमेवैतदनया वर्णितम् । मया पुनर्मन्दधियाऽन्यथैव संभावितम् ।

प्रत्यक्षरूक्षं यद्वाक्यं तद्वज्रमिति कीर्तितम् ॥

यथा रत्नावल्यां, राजा — सुसङ्गते, कथमहमिहस्थो भवत्या विज्ञातः ।

सुसङ्गता — जअदु भट्टा । ण केवलं देवो । चित्तफलएण सह सव्वो वुत्तन्तो वि मए विण्णादो । ता देवीए गदुअ णिवेदइस्समिति । (जयतु भर्ता । न केवलं देवः । चित्रफलकेन सह सर्वो वृत्तान्तोऽपि मया विज्ञातः । तद्देव्यै गत्वा निवेदयिष्ये ।)

यथा च वेणीसंहारे, राजा कञ्चुकिनमाह — आः वृद्धापसद, महता रथस्य केतुर्भग्नः । तत्किमाकुलं प्रलपसीति ।

वर्णितार्थतिरस्कारो वर्णसंहार उच्यते ॥

यथा रत्नावल्यां विदूषकः — अपवार्य, भो वअस्स, सव्वं संभाविअदि । सुदरा खु एसा गब्भदासी । ता परितोसेहि णं । (भो वयस्य, सर्वं संभाव्यते । सुतरां खल्वेषा गर्भदासी । तत्परितोषयैनाम् ।)

राजा— युक्तमभिहितम् । सुसङ्गते, क्रीडामात्रमेवैतत् । तथा अकारणे देवी न खेदयितव्या । तद्गृहाण कर्णाभरणम् । इदं ते पारितोषिकम् ।

सुसङ्गता — एदिणा भट्टिणो पसादेण अग्ग कीळिदं जेव । ता किं कण्णाभरणेण । एसो एव मे गुरुओ पसादो जं किं त्ति तुए अहं एत्थ चित्तफलए आलिहिदत्ति भणिअ परिकुविदा मे पिअसही साअरिआ वट्टदि । ता गदुअ पसादिअदु ।

(एतेन भर्तुः प्रसादेन त्वया क्रीडितमेव । तत्किं कर्णाभरणेन, एष एव मे गुरुः प्रसादः यत् किमिति त्वयाऽत्र चित्रफलकेऽहमालिखितेति भणित्वा कुपिता मे प्रियसखी सागरिका वर्तते । तद्गत्वा प्रसादयतु ।)

यथा च वेणीसंहारे, कञ्चुकिना रथकेतनपतन आवेदिते भानुमती— अज्जउत्त परिहरी-अदु एदं अणिमित्तं पसण्णबम्हणवेआणुघोसेण होमेण अ । [आर्यपुत्र, परिहार्यतामेतदनिमित्तं प्रसन्नब्राह्मणवेदानुघोषेण होमेन च ।]

अथ गर्भाङ्गानि त्रयोदश । तेषु,

अभूताहरणं तत्स्याद्वाक्यं यत्कपटाश्रयम् ॥

यथा रत्नावल्यां, विदूषकः— सुसङ्गदे, णहु साअरिअं वज्जिअ अण्णं पिअवअस्सस्स किं पि असत्थदाए कारणं । ता एत्थ पडिआरं चिंतेहि । अज्ज खु देवीए चित्तफळअवुत्तंतसंकि-दाए साअरिअं मम हत्थे समप्पअंतीए जं णेवत्थं मे पसादीकिदं तदो तस्सिं एव्व विरइदभट्टिणी वेसं साअरिअं गेह्णिअ अहं पि कंचणमालावेसधारिणी भविअ पदोसकाले आगमिस्सं । तुमं पि इध माहिदो पडिवालइस्ससि । तदो माहवीलदामंडवे भट्टिणो ताए सह समाअमो हविस्सदि । (सुसंगते, न हि सागरिकां वर्जयित्वा प्रियवयस्यस्यान्यत्किमप्यस्वस्थतायाः कारणम् । तदत्र प्रतीकारं चिन्तय । अद्य खलु देव्या चित्रफलकवृत्तान्तशंकितया सागरिकां मम हस्ते समर्पयन्त्या यन्नेपथ्यं मे प्रसादीकृतं ततस्तस्मिन्नेव विरचितभर्त्रीवेषां सागरिकां गृहीत्वाऽऽहमपि काञ्चनमालावेषधारिणी भूत्वा प्रदोषकाले भर्तुरागमिष्ये । त्वमपीहाऽऽस्थितः प्रतिपालयिष्यसि । ततो माधवीलतामण्डपे तया सह भर्तुः समागमो भविष्यति ।)

यथा च वेणीसंहारे, द्रौपदीमुद्दिश्य सूतोऽश्वत्थामानमाह—

अश्वत्थामा हत इति पृथासूनुना स्पष्टमुक्त्वा स्वैरं शेषे गज इति किल व्याहृतं सत्यवाचा ।
तच्छ्रुत्वासौ दयिततनयः प्रत्ययात्तस्य राज्ञः शस्त्राण्याजौ नयनसलिलं चापि तुल्यं मुमोच ॥

तत्त्वार्थवचनं चैव सत्यमित्यभिधीयते ॥

यथा रत्नावल्यां तृतीयेऽङ्के, काञ्चनमालया सुसङ्गतावसन्तकयोः कपटप्रपञ्चो राजस्य स्वस्थावस्थाप्रच्छादनं तत्त्वत उपलभ्य मदनिकायै पुनश्च वासवदत्तायै निवेदितमिति ।

यथा च वेणीसंहारे राजा– कथं पुनराचार्यः शस्त्रग्रहणसमये शस्त्रमुज्झितवान् ।

कर्ण. – अयमपि प्रायस्तस्यात् । अश्वत्थामा मया पृथिवीराज्ये अभिषेक्तव्य इति । तस्यैवाभावाद्वृद्धस्य मे ब्राह्मणस्य वृथा शस्त्रग्रहणमिति तथा कृतवान् । साधु निपुणमुपलक्षितम् । अत एवं समर्थोऽपि कुरुकुलक्षयमुपेक्षितवानिति ।

चित्रार्थसमवाये तु तच्चित्रं रूपमुच्यते ॥

यथा रत्नावल्यां तृतीये अङ्के, राजा— अहो महदाश्चर्यम् ।

मनश्चलं प्रकृत्यैव दुर्लक्ष्यं च तथापि मे । कामेनैतत्कथं विद्धं समं सर्वैः शिलीमुखैः ॥

यथा च वेणीसंहारे, राजा– अङ्गराज,

तेजस्वी रिपुहतबन्धुदुःखपारं बाहुभ्यां व्रजति धृतायुधप्लवाभ्याम् ।
आचार्यः सुतनिधनं निशम्य संख्ये किं शस्त्रग्रहसमये विशस्त्र आसीत् ॥

यत्रातिशयवद्वाक्यं तदुदाहरणं स्मृतम् ॥

यथा रत्नावल्यां, विदूषकः — ही ही भोः, कोसंबीरज्जलाहेणावि ण तादिसो पिअ-वअस्सस्स हिअआभिलासो आसी जादिसो मम अज्ज सआसादो पिअवअणं सुणिअ हविस्सदित्ति तक्केमि । [ही ही भोः । कौशाम्बीराज्यलाभेनापि न तादृशः प्रियवयस्यस्य हृदयाभिलाषः आसीद्यादृशो मत्सकाशादद्य प्रियवचनं श्रुत्वा भविष्यतीति तर्कयामि ।]

यथा च वेणीसंहारे, अश्वत्थामा– अङ्गराज, किमाह भवान् किमत्र क्रियत इति । श्रूयतां यत्क्रियते ।

यो यः शस्त्रं बिभर्ति स्वभुजगुरुमदः पाण्डवीनां चमूनां
यो यः पाञ्चालगोत्रे शिशुरधिकवया गर्भशय्यां गतो वा ।
यो यस्तत्कर्मसाक्षी चरति मयि रणे यश्च यश्च प्रतीपः
क्रोधान्धस्तस्य तस्य स्वयमपि जगतामन्तकस्यान्तकोऽहम् ॥

भावतत्त्वोपलब्धिस्तु तम इत्यभिधीयते ॥

यथा रत्नावल्यां तृतीयेऽङ्के, विदूषकः — उपसृत्य, भो वअस्स दिट्ठिआ वड्ढसे तुमं समीहिदकज्जसिद्धीए । (भो वयस्य, दिष्ट्या वर्धसे त्वं समीहितकार्यसिद्ध्या ।)

राजा— वयस्य, अपि कुशलं प्रियायाः सागरिकायाः ?

विदूषकः — वअस्स, अइरेण सअं एव्व पेक्खिअ जाणिस्ससि ।
(वयस्य, अचिरेण स्वयमेव प्रेक्ष्य ज्ञास्यसि ।)

राजा — (सपरितोषं) वयस्य, कथं दर्शनमपि भविष्यतीति ।

यथा च वेणीसंहारे, तृतीयेऽङ्के, कृपः — राजन्, सुमहान्खलु द्रोणपुत्रेण वोढुमध्यवसितः समरभारः। तदहमेवं मन्ये मयता कृतपरिकरोऽयमुच्छेत्तुं लोकत्रयमपि समर्थः किं पुनर्युधिष्ठिरबलम्। अतोऽभिषिच्यतां सैनापत्ये।

दुर्योधनः — सुष्ठु युज्यमानमभिहितं युष्माभिः। किंतु प्राक्प्रतिपन्नोऽयमर्थोऽङ्गराजस्य।

सामदानार्थसम्पन्नः संग्रहः परिकीर्तितः ॥

यथा रत्नावल्यां, तृतीयेऽङ्के, राजा – (सहर्षं) वयस्य, साधु। इदं च ते पारितोषिकम्। हस्तादपसार्य कटकं प्रयच्छति।

यथा च वेणीसंहारे, अश्वत्थामा– राजन् कौरवेश्वर किमद्यापि युक्तायुक्तविचारणया।

प्रयत्नपरिबोधितः स्तुतिभिरद्य शेषे निशामकेशवमपाण्डवं भुवनमद्य निस्सोमकम्।
इयं परिसमाप्यते रणकथाद्य दोःशालिना व्यपैतु नृपकाननातिगुरुरद्य भारो भुवः॥

रूपानुरूपगमनमनुमानमिति स्मृतम् ॥

यथा रत्नावल्याम्, विदूषकः– निरूप्य, भो एदं खु समासण्णं बहलपादवदाए पिंडीकदंधआरं विअ मअरंदुज्जाणं। ता कधं एत्थ मग्गो लक्खीअदि। (भो एतत्खलु समासन्नं बहलपादपतया पिण्डीकृतान्धकारमिव मकरन्दोद्यानम्। तत्कथमत्र मार्गो लक्ष्यते।)

राजा – वयस्य, सुज्ञातमेवैतत्। तथा हि,

पानीयं चम्पकानां नियतमयमसौ सुन्दरः सिन्दुवारः
सान्द्रा वीथी तथेयं वकुलविटपिनां पाटला पंक्तिरेषा।
आघ्रायाघ्राय गन्धं त्रिविधमधिगतैः पादपैरेवमस्मिन्
व्यक्तिं पन्थाः प्रयाति द्विगुणतरतमो निह्नुतोऽप्येष चिह्नैः॥

यथा च वेणीसंहारे, अश्वत्थामा — (अग्रतोऽवलोक्य), मातुल हा धिक्कष्टम्। एष खलु भ्रातुः प्रतिज्ञाभङ्गभीरुः किरीटी समं दुर्योधनराधेयौ शरवर्षैर्दुर्वारैरभिद्रवति। सर्वथा पीतं दुःशासनशोणितं भीमेनेति।

अभ्यर्थनापरं वाक्यं प्रार्थनेत्यभिधीयते ॥

यथा रत्नावल्यां तृतीयेऽङ्के, विदूषकः — भोदि साअरिए, वीसद्धा भविअ पिअवअस्सं आलावेहि। अज्जवि दाव णिक्करुणाए देवीए वासवदत्ताए दुव्वअणेहिं कडुइदा कण्णा। सुहावेदु मउमहुरवअणोवण्णासो। (भवति सागरिके, विश्रब्धा भूत्वा प्रियवयस्यमालापय। अद्यापि तावन्निष्करुणाया देव्या वासवदत्ताया दुर्वचनैः कटूकृताः कर्णाः। सुखयतु मृदुमधुरवचनोपन्यासः।)

यथा च वेणीसंहारे, अश्वत्थामा — राजन्कौरवनाथ, अभीष्मद्रोणं संप्रति कौरवबलमालोडयन्तौ,भीमार्जुनौ राधेयेनैवंविधेनान्येन वा न शक्येते निवारयितुम् । अतः स्वयमेव भ्रातुः प्रतीकारपरो भव ।

गर्भस्योद्भेदनं यत्तु संक्षिप्तिरिति गीयते ॥

यथा रत्नावल्यां, राजा – (मुखमुत्पाट्य, विलोक्य च सविषादं) कथं देवी वासवदत्ता! (विदूषकमुद्दिश्य) मूर्ख किमेतत् ।

विदूषकः – (सभयं) भो वअस्स, किं अवरं ? अह्माणं जीविदसंसयो जादो एसो ।

(भो वयस्य, किमपरम् ? अस्माकं जीवितसंशयो जात एषः ।)

यथा च वेणीसंहारे, चतुर्थेऽङ्के, सुन्दरकः — अह वा किं एत्थ देवं उवालहामि । तस्स क्खु एदं णिव्वच्छिअविउरवअणबीअस्स अवहीरिदपिदामहहिदोवदेसंकुरस्स सउणिप्पोत्साहणादिविरूढमूलस्स जदुगेहजूदविसस्साहिणो संभूदचिरआलसंवड्ढवेरालवालस्स पञ्चालीकेसग्गहणकुसुमस्स फलं परिणमदि इति । (अथ वा किमत्र दैवमुपालभे । तस्य खलिवदं निर्भर्त्सितविदुरवचनबीजस्य अवधीरितपितामहहितोपदेशांकुरस्य शकुनिप्रोत्साहनादिविरूढमूलस्य जतुगृहद्यूतविषशाखिनः संभूतचिरकालसंवर्धवैरालवालस्य पाञ्चालीकेशग्रहणकुसुमस्य फलं परिणमति ।)

सम्भाववचनं चैव तोटकं समुदाहृतम् ॥

यथा रत्नावल्यां, राजा — (अञ्जलिं बध्वा), प्रिये वासवदत्ते, प्रसीद ।

वासवदत्ता — (अश्रूणि धारयन्ती), अज्जउत्त, मा एवं भण । अदिक्कंदाइं दाणिं एदाइं अक्खराइं । (आर्यपुत्र, मा एवं भण । अतिक्रान्तानीदानीमेतान्यक्षराणि ।)

यथा च वेणीसंहारे, राजा – अये सुन्दरक, कच्चित्कुशलमङ्गराजस्य ?

सुन्दरकः — देव कुसलं सरीरमेत्तेण । (देव कुशलं शरीरमात्रेण ।)

राजा – किञ्चास्य किरीटिनास्य निहता धौरेया हतस्सारथि र्भग्नो वा रथः ?

सुन्दरकः — देव, ण भग्गो रहो । से मणोरहो वि । [देव, न भग्नो रथः । अस्य मनोरथोऽपि ।]

राजा – ससंरम्भं, किमविस्पष्टकथितैराकुलमपि पर्याकुलयसि मे हृदयम् ।

कपटस्यान्यथाभावं ब्रुवतेऽधिबलं बुधाः ॥

यथा रत्नावल्यां, तृतीयेऽङ्के, राजा — एवं प्रत्यक्षदृष्टव्यलीकः किं ब्रवीमि । तथापि विज्ञापयामि ।

आताम्रतामपनयामि विवर्ण एष लाक्षाकृतां चरणयोस्तव देवि मूर्धा ।
कोपोपरागजनितां तु मुखेन्दुबिम्बे हर्तुं क्षमो यदि परं करुणा मयि स्यात् ॥

यथा च वेणीसंहारे, सुन्दरकः— तदो अ देव एदस्सिं अन्तरे सत्तिखण्डणामरिसिदेण गण्डीविणा भणिअम् — अरे रे दुज्जोहणप्पमुहा कुरुबलसेणापहुणो अरे अविणअणोकण्णधार कण्ण तुम्हेहिं मह परोक्खं बहुहिं महारहेहिं पडिवारिअ एआई मम पुत्तओ अहिमण्णु वावादिदो । अहं उण तुम्हाणं पेक्खन्ताणं एव्व एदं कुमालवेससेणं सुमरिदव्वसेसं करोमि ।

[ततश्च देवैतस्मिन्नन्तरे शक्तिखण्डनामर्षितेन गाण्डीविना भणितम्— अरे रे दुर्योधनप्रमुखाः कुरुबलसेनाप्रभवः अरे अविनयनौकर्णधार कर्ण युष्माभिर्मम परोक्षं बहुभिर्महारथैः परिवृत्यैकाकी मम पुत्रकोऽभिमन्युर्व्यापादितः । अहं पुनर्युष्माकं प्रेक्षमाणानामेवैतं कुमारवृषसेनं स्मर्तव्यशेषं करोमि ।] इति ।

भयं नृपादिजनित मुद्वेग रसंप्रकीर्तितः ॥

यथा रत्नावल्यां, तृतीयेऽङ्के, सागरिका— (सास्रं विमृश्य) वरं दाणिं सअं एव अत्ताणअं उब्बंधिअ उवरदा भविस्सं । जेण णउण जाणिद संकेदवुत्तंतए देवीए सुसंगदा विअ परिभूदम्हि । ता जाव अहं असोअपादवे गदुअ जधा समीहिदं करिस्सं ।

[वरमिदानीं स्वयमेवात्मानमुद्बध्योपरता भविष्ये । येन च पुनर्ज्ञातसंकेतवृत्तान्तया देव्या सुसङ्गतेव परिभूतास्मि । तद्यावदहमशोकपादपे गत्वा यथासमीहितं करिष्ये ।]

यथा च वेणीसंहारे, चतुर्थेऽङ्के, भो भोः असमद्दर्शनभयस्खलितकार्मुककृपाणतोमरशक्तयः कौरवचमूभटाः पाण्डवपक्षपातिनश्च योधाः न भेतव्यं न भेतव्यमित्यादि भीमसेनवचनं श्रुत्वा, सूतः— (सभयम्), अये आसन्न एव दुरात्मा कौरवराजपुत्रमहावनोत्पातमारुतो मारुतिः । अनुपलब्धसंज्ञश्च तावदत्र महाराजः । भवतु । सुदूरमपहरामि स्यन्दनम् । कदाचिद् दुःशासन इवास्मिन्नप्ययमनार्योऽनार्यमाचरिष्यतीति ।

शङ्का भयत्रासकृतो विद्रवः समुदाहृतः ॥

यथा रत्नावल्यां, विदूषकः— (उच्चैः,) भो वअस्स, परित्ताहि, परित्ताहि । एसा क्खु देवी वासवदत्ता अत्ताणअं उब्बंधिअ वावादेति । (भो वयस्य, परित्रायस्व, परित्रायस्व । एषा खलु देवी वासवदत्ता आत्मानमुद्बध्य व्यापादयति ।)

राजा — ससम्भ्रममुपसृत्य, वयस्य, क्वासौ क्वासौ ?

विदूषकः — हो एसा । (अहो एषा । )

राजा — अयि साहसकारिणि, किमिदमकार्यं क्रियते ।

मम कण्ठगताः प्राणाः पाशे कण्ठस्थिते तव । अतः स्वार्थप्रयत्नोऽयं त्यज्यतां साहसं प्रिये ॥

यथा वेणीसंहारे, पञ्चमेऽङ्के, सूतः — आयुष्मन्,

प्राप्तावेकरथारूढौ पृच्छन्तौ त्वामितस्ततः ॥

सर्वे — कथं कथम्

सूतः — स कर्णारिः स च क्रूरो वृककर्मा वृकोदरः ॥

गान्धारी — (सभयं) जाद, किं एत्थ पडिपज्जिदव्वम्। (जात, किमत्र प्रतिपत्तव्यम्।)

राजा — ननु संनिहितैवेयं गदेति।

अथ विमर्शाङ्गानि त्रयोदश।

दोषप्रख्यापनं यत्स्यात्सोऽपवादः प्रकीर्तितः ॥

यथा रत्नावल्यां तृतीयेऽङ्के, राज्ञि प्रियं वदत्यपि सागरिका— अय्यउत्त, किं एदिणा अलीअदक्खिण्णेण जीविदादो वि अधिअवल्लहाए पुणो वि अत्ताणअं अवराहिणं किं करेसि। (आर्यपुत्र, किमेतेनालीकदाक्षिण्येन। जीवितादप्यधिकवल्लभाया देव्याः पुनरप्यात्मानमपराधिनं किं करोषि।)

राजा — अयि मिथ्यावादिनी खल्वसि। कुतः,

श्वासोत्कम्पिनि कम्पितं कुचयुगे मौने प्रियं भाषितं
वक्त्रेऽस्याः कुटिलीकृतभ्रुणि तथा यातं मया पादयोः।
इत्थं नः सहजाभिजात्यजनिता सेवैव देव्याः परं
प्रेमाबन्धविवर्धिताधिकरसा प्रीतिस्तु या सा त्वयि ॥

यथा च वेणीसंहारे, युधिष्ठिरः —

तीर्णे भीष्ममहोदधौ कथमपि द्रोणानले निर्वृते
कर्णाशीविषभोगिनि प्रशमिते शल्ये च याते दिवम्।
भीमेन प्रियसाहसेन रभसात्स्वल्पावशेषे जये
सर्वे जीवितसंशयं वयममी वाचा समारोपिताः ॥

रोषग्रथितवाक्यं तु संस्फोट इति कीर्तितम् ॥

यथा रत्नावल्यां, तृतीयेऽङ्के, तदेव सागरिकावत्सराजयोर्वाक्यमलक्षिता निशम्योपसृत्य च देवी सरोषमाह— अज्जउत्त जुत्तं पदं, सरिसं पदं। [आर्यपुत्र, युक्तमेतत्। सदृशमेतत्।]
राजा सागरिकामुक्ता, ससम्भ्रमं— देवि, न खल्वकारणे मामुपालब्धुमर्हसि। सत्यं त्वामेव मत्वा वेषसादृश्याद्विप्रलब्धा वयमिहागताः। तथापि क्षम्यतामिति (पादयोः पतति।)

वासवदत्ता— अज्जउत्त, उट्ठेहि। किं अज्जेवि सहजाभिजादाए सेवाए दुक्खं अणुभवीअदि।
[आर्यपुत्र, उत्तिष्ठोत्तिष्ठ। किमद्यापि सहजाभिजातया सेवया दुःखमनुभाव्यते।]

राजा— कथितमिदमपि श्रुतं देव्या। इति।

यथा वेणीसंहारे, युधिष्ठिरः — भद्र पाञ्चालक कच्चिदासादिता तस्य दुरात्मनः कौरवाधमस्य पदवी ।

पाञ्चालकः — देव न केवलं पदवी । स एव दुरात्मा देवीकेशपाशाकर्षणमहापातकप्रधानहेतुरुपलब्ध इति ।

गुरुव्यतिक्रमो यस्तु स द्रवः परिकीर्तितः ॥

यथा रत्नावल्यां, तृतीयेऽङ्के, वसन्तकः — भोदि, तुमं किल अत्ताणअं उब्बंधिअ वावादेसि त्ति वेससारिस्समोहिदेण मए पिअवअस्सो एत्थ आणीदो । जइ मम वअणं ण पत्तिआअसि ता पेक्ख इमं लदापासं । (इति लतापाशं दर्शयति ।)
[भवति, त्वं किल आत्मानमुद्बध्य विपद्यस इति वेषसादृश्यमोहितेन मया प्रियवयस्योऽत्रानीतः । यदि मम वचनं न प्रत्याययसि तत्प्रेक्षस्वेमं लतापाशम् ।]

वासवदत्ता — (सकोपं) हंजे कंचणमाले, एदेण एव्व लदापासेण बंधिअ गेण्ह एदं बम्हणं । एदं अ दुट्ठकण्णअं अग्गदो करेहि । (हंजे काञ्चनमाले, एतेनैव लतापाशेन बद्ध्वा गृहाणैनं ब्राह्मणम् । एतां च दुष्टकन्यकामग्रतः कुरु ।)

कांचनमाला — जं भट्टिणी आणवेदि । (यद्भट्टिन्याज्ञापयति ।) इति विदूषकं बध्नाति ।

यथा वा वेणीसंहारे, युधिष्ठिरः — द्रौपदीमवलोक्य, मुखादस्या बाष्पमपनीय,

अयि सुक्षत्रिये,

गुरूणां बन्धूनां क्षितिपतिसहस्रस्य च पुरः पुराभूदस्माकं नृपसदसि योऽयं परिभवः ।
प्रिये प्रायस्तस्य द्वितयमपि पारं गमयति क्षयः प्राणानां नः कुरुपतिपशोर्वाद्य निधनम् ॥

। [illegible] विरोधप्रशमो यस्तु सा शक्तिः परिकीर्तिता ॥

यथा रत्नावल्यां, चतुर्थेऽङ्के, विदूषकः प्रविश्याह— हीही भो, अज्ज क्खु पिअवअस्सेण पसादिदाए तत्तभोदीए वासवदत्ताए बंधणादो मोचिअ सहत्थदिण्णेहिं मोदअलड्डुएहिं उदरं मे सुपूरिदं किदं अण्णं च एदं पट्टंसुअजुअलं कण्णाभरणं अ दिण्णं । ता जाव दाणिं पिअवअस्सं पेक्खिस्सं । [ही ही भोः ! अद्य खलु प्रियवयस्येन प्रसादितया तत्रभवत्या वासवदत्तया बन्धनान्मोचयित्वा स्वहस्तदत्तैर्मोदकलड्डुकैरुदरं मे सुपूरितं कृतम् । अन्यच्च एतत्पट्टांशुकयुगलं कर्णाभरणं च दत्तम् । तद्यावदिदानीं प्रियवयस्यं प्रेक्षिष्ये ।]

यथा च वेणीसंहारे, पाञ्चालको युधिष्ठिरमाह— अहं च देवेन चक्रपाणिना देवसकाशमनुप्रेषितः । आह च देवो देवकीनन्दनः । अपर्युषितप्रतिज्ञे च मारुतौ प्रनष्टे कौरवराजे महानासीद्वो विषादः । संप्रति पुनर्भीमसेनेनासादिते सुयोधने निष्कण्टकीभूतं भुवनतलं परिकलयतु भवान् । इति ।

व्यवसायश्च विज्ञेयः प्रतिज्ञाहेतुसम्भवः ॥

यथा रत्नावल्यां, ऐन्द्रजालिकः — देव,

किं धरणिए मिअंको आआसे महिअरो जले जलणो ।
मज्झण्हंमि पओसो दाविज्जइ देहि आण्णत्तिम् ॥

( किं धरण्यां मृगाङ्क आकाशे महीधरो जले ज्वलनः । मध्याह्ने प्रदोषो दर्शयामि देह्याज्ञप्तिम् ॥ )

अविभ, अपि च,

हरिहरबह्मप्पमुहं देवं दावेमि देवराअं अ । गअणेत्रि सिद्धविज्जाहरवहुसत्थं च णच्चंतं ॥
किं जप्पिदेण बहुणा जं जं हिअए समीहिदं दिट्ठुम् ।
तं तं दावेमि अहं गुरुणा मंतप्पहावेण ॥

हरिहरब्रह्मप्रमुखान्देवान्दर्शयामि देवराजं च । गगनेऽपि सिद्धविद्याधरवधूसार्थं च नृत्यन्तम् ॥
किं जल्पितेन बहुना यद्यद्धृदये समीहितं द्रष्टुम् । तत्तद्दर्शयाम्यहं गुरोर्मन्त्रप्रभावेन ॥

ईदिसो अवट्ठम्भो जेण सव्वं संभावीअदि । [ईदृशोऽवष्टम्भः येन सर्वमपि संभाव्यते ।] इति ।

यथा च वेणीसंहारे, युधिष्ठिरः — अश्रूणि मुञ्चन्,

सर्वथा कथय ब्रह्मन्संक्षेपाद्विस्तरेण वा । वत्सस्य किमपि श्रोतुमेष दत्तः क्षणो मया ॥

राक्षसः — श्रूयताम् ।

तस्मिन् कौरवभीमयोर्गुरुगदाघोरध्वनौ संयुगे

द्रौपदी — सहसोत्थाय, तदो तदो । ततस्ततः ।

राक्षसः — स्वगतम् . कथं पुनरप्यनया लब्धा संज्ञा । अयमपहराम्यस्याः प्राणान् ।

सीरी सत्वरमागतश्चिरमभूत्तस्याग्रतः सङ्गरः ।

कञ्चुकी — नूनं तत्कुतोऽत्र कश्चिदपराद्धो भविष्यति ।

राक्षसः — आलम्ब्य प्रियशिष्यतां तु हलिना संज्ञा रहस्याहिता
यामासाद्य कुरूत्तमः प्रतिकृतिं दुश्शासनारौ गतः ॥

अप्रस्तुतार्थवचनं प्रसङ्गः परिकीर्तितः ॥

यथा रत्नावल्यां, वासवदत्ता — हला कंचणमाले उज्जइणीदो आअदोत्ति अत्थि मे तस्सिं इंदजालिए पक्खवादो । [कांचनमाले, उज्जयिनीत आगतः इत्यस्ति मे तस्मिन् ऐन्द्रजालिके पक्षपातः ।]

कांचनमाला — भट्टिणि, णाभिउलबहुमाणो खु एसो देवीए ।
[ भट्टिणि, नाभिकुलबहुमानः खलु एष देव्याः । ]

यथा च वेणीसंहारे, युधिष्ठिरः — हा तात भीमसेन, कान्तारव्यसनबान्धव, हा मच्छरीरस्थितिविच्छेदकातर, जतुगृहविपत्समुद्रतरणयानपात्र, हा किर्मीरहिडिम्बासुरजरासन्धविजयैकमल्ल, हा कीचकसुयोधनानुजकमलिनीकुञ्जर, हा द्यूतपणप्रणयिन्, हा मदाज्ञासम्पादक, हा कौरववनदावानल,

निर्लज्जस्य दुरोदरव्यसनिनो वत्स त्वया सा तदा
भक्त्या मे समदद्विपायुतबलेनाङ्गीकृता दासता ।
किं नामापकृतं मयाऽधिकमतस्त्वय्यद्य यद्गम्यते
त्यक्त्वा नाथ सबान्धवं सपदि मां प्रीतिः क्व ते साऽधुना ॥

द्रौपदी — महाराअ, किं एदं ? महाराज, किमेतत् ?

युधिष्ठिरः — कृष्णे, किमन्यत् ।

स कीचकनिषूदनो बकहिडिम्बकिर्मीरहा मदान्धमगधाधिपद्विरदसन्धिभेदाशनिः ।
गदापरिघशोभिना भुजयुगेन तेनान्वितः प्रियस्तव ममानुजोऽर्जुनगुरुर्गतोऽस्तं किल ॥

वाक्यमाधर्षसंयुक्तं द्युतिस्तज्ज्ञैरुदाहृता ॥

यथा-रत्नावल्यां, चतुर्थेऽङ्के, विदूषकः — अपवार्य, आः दासीएउत्त, इंदआलिअ, किं एदेहिं देवेहिं किंवा अच्छराहिं । जइ दे इमिणा परितुट्ठेण पओअणं ता साअरिअं से दंसेहि । [आः दास्याः पुत्र, इन्द्रजालिक, किमेतैर्देवैरप्सरोभिश्च । यदि ते अनेन परितुष्टेन प्रयोजनं तद्दर्शय सागरिकाम् ।]

यथा च वेणीसंहारे, षष्ठे अङ्के, युधिष्ठिरः — भगवन् कामपाल कृष्णाग्रज सुभद्राभ्रातः,

ज्ञातिप्रीतिर्मनसि न कृता क्षत्रियाणां न धर्मो रूढं सख्यं तदपि गणितं नानुजस्यार्जुनेन ।
तुल्यः कामं भवतु भवतश्शिष्ययोस्स्नेहबन्धः कोऽयं पन्था यदसि विमुखो मन्दभाग्ये मयीत्थम् ॥

मनश्चेष्टाविनिष्पन्नः श्रमः खेद उदाहृतः ॥

यथा रत्नावल्यां, राजा — आर्य वसुभूते, अपि कुशलं तत्रभवतः सिंहलेश्वरस्य ?

वसुभूतिः — ऊर्ध्वमवलोक्य, निःश्वस्य च, देव, न जाने किं विज्ञापयामि मन्दभाग्यः ।

वासवदत्ता — सविषादमात्मगतं, हद्धि, किं दाणीं वसुभूदी कधइस्सदि ?
[हा धिक्, किमिदानीं वसुभूतिः कथयिष्यति ?]

राजा — कथय किमिति मां पर्याकुलयसि ।

बाभ्रव्यः — अपवार्य, अमात्य, सुचिरमपि स्थित्वा कथनीयमेवैतत् । कथ्यताम् ।

वसुभूतिः – देव, न शक्यते कथयितुम् । तथाप्येष मन्दभाग्यः कथयामि ।- या सा तत्रभवता सिंहलेश्वरेण स्वदुहिता रत्नावली नाम आयुष्मती देवी दग्धां वासवदत्तामुपश्रुत्य देवाय पूर्वं प्रार्थिता सती दत्ता ।

विदूषकः – तदो ताए किं सुउत्तं ? [ततस्तस्याः किं संवृत्तम् ?]

वसुभूतिः — सा आयुष्मदन्तिकमस्माभिरानीयमाना वहनभङ्गात्सागरे निमग्ना ।

वासवदत्ता – सास्र, हा बहिणिए, कहिं दाणीं सि । देहि मे पडिवअणं ।

[हा भगिनिके, केदानीमसि । देहि मे प्रतिवचनम् ।] इति ।

यथा च वेणीसंहारे, युधिष्ठिरः — युक्तमाह पाञ्चाली । कञ्चुकिन् क्रियतामियं पयस्विनी चितासंविभागेन सहवेदना । ममापि सज्जं धनुरुपनय । अलमथवा धनुषा ।

तस्यैव देहरुधिरोक्षितपाटलाङ्गी मादाय संयति गदामपविध्य चापम् ।
भ्रातृप्रियेण कृतमद्य यदर्जुनेन श्रेयो ममापि हि तदेव कृतं जयेन ॥

ईप्सितार्थप्रतीघातः प्रतिषेध इति स्मृतः ॥

यथा रत्नावल्यां, चतुर्थेऽङ्के, राजा — देव, समाश्वसिहि समाश्वसिहि । दुरवबोधा गतिर्दैवस्य । नन्वेतावेव वाहनभङ्गपतितोत्थितौ बाभ्रव्यवसुभूती निदर्शनम् ।

वासवदत्ता — अय्यउत्त, जुज्जदि एवं । परं कुदो मम एत्तिअं भाअहेअं ।

(आर्यपुत्र, युज्यत एवम् । परं कुतो ममैतावद्भागधेयम् ।)

राजा — वसुभूतिमपवार्य, बाभ्रव्य किमेतत् । सर्वं नावगच्छामि ।

बाभ्रव्यः — श्रूयताम् । नेपथ्ये,

हर्म्याणां हेमशृङ्गश्रियमिव निचयैरर्चिषामादधानः
सान्द्रोद्यानद्रुमाग्रग्लपनपिशुनितात्यन्ततीव्राभितापः ।
कुर्वन्क्रीडामहीध्रं सजलजलधरश्यामलं धूमपा -
रेषप्लोषार्तयोषिज्जन इह सहसैवोत्थितोऽन्तःपुरेऽग्निः ॥

सर्वे ससम्भ्रममुत्तिष्ठन्ति ।

यथा च वेणीसंहारे, युधिष्ठिरः — रे दुर्योधनमभियोजयितुं जिगमिषति ।

राक्षसः — राजन् रिपुजयविमुख ते यदि चेत् स्तदा यत्र तत्र वा प्राणत्यागं कुरु । वृथा तत्र गमनम् । इति ।

कार्यात्ययोपगमनं विरोधनमिति स्मृतम् ॥

यथा रत्नावल्यां, वासवदत्ता – अज्जउत्त, मए अत्तणो किदे ण भणिदं । किं दुणा एसा खु मए णिग्घिणाए इध णिअडे संजमिदा सामरिआ विवज्जेदि । परित्तामदु परित्तामदु

अज्ज‌उत्तो इति।'( आर्यपुत्र; मयात्मनः कृते न भणितम् । किं पुनरेषा खलु मया निर्घृणयेह निगडे संयमिता सागरिका विपद्यते । तत्परित्रायतामार्यपुत्रः । )

यथा च वेणीसंहारे, कञ्चुकी — प्रविश्य सम्भ्रान्तः, परित्रायतां परित्रायतां महाराजः । एष खलु दुरात्मा कौरवापसदः क्षतजाभिषेकपाटलिताम्बरशरीरः समुच्छ्रितदिग्धभीषणगदापाणिः रुचतकालदण्ड इव कृतान्तो ऽत्रभवतीं पाञ्चालराजतनयामितस्ततः परिमार्गमाण इत एवाभिवर्तते । इति ।

बीजकार्योपगमन मादानमिति संज्ञितम् ॥

यथा रत्नावल्यां, सागरिका विपद्यते तां परित्रायतां राजपुत्र इति वासवदत्तयोक्ते, राजा — एष गच्छामि । वसुभूतिः — किमयमकारणे पतङ्गवृत्तिः क्रियते ?

कञ्चुकी — युक्तमाह वसुभूतिः ।

विदूषकः — राजानमुत्तरीये गृहीत्वा, भो मा खु मा खु साहसं कारइस्ससि ।

[ भो मा खलु साहसं कुरु । ]

(उत्तरीयमुत्सृज्य), राजा — मूर्ख, सागरिका दह्यते । अहं प्राणान् विमर्शीत्यारभ्य सर्वेष्वग्निप्रवेशं नाटयत्सु, राजा — नन्वियमासन्ना वर्तते सागरिका । तत्त्वरितमेनं संभावयामीति यावत् ॥

यथा च वेणीसंहारे, कञ्चुकी बुद्धिमतिकामाह — भोः कष्टम् । एष दुरात्मा कौरवाधमो यथेष्टमित एवाभिवर्तते । सर्वथा सम्प्रत्ययमेव कालोचितः प्रतीकारः । चितासमीपमुपनयाम्यत्रभवतीं पाञ्चालराजतनयाम् । अहमप्येवमेवानुगच्छामि । (चेटीं प्रति) भद्रे त्वमपि देव्या भ्रातरं धृष्टद्युम्नं नकुलसहदेवौ वाऽवाप्नुहि । अथवा एवमवस्थिते महाराजेऽस्तमितयोर्भीमार्जुनयोः कुतोऽत्र परित्राणाशा । भो भोः समन्तपञ्चकसञ्चारिणः क्षतजासवमत्तयक्षराक्षसपिशाचभूतवेतालकङ्कगृध्रजम्बुकोलूकवायसभूयिष्ठा विरलयोधपुरुषाः कृतमसद्दर्शनत्रासेन । कथयत कस्मिन्नुद्देशे याज्ञसेनी सन्निहितेति । कथयाम्युपलक्षणं तस्याः ।

ऊरू करेण परिघट्टयतः सलीलं दुर्योधनस्य पुरतोऽपहृताम्बरा या ।
दुश्शासनेन कचकर्षणभिन्नमौलिः सा द्रौपदी कथयत क्व पुनः प्रदेशे ॥

प्ररोचना च विज्ञेया संहारार्थप्रदर्शिनी ॥

यथा रत्नावल्यां, राजा — अहो आश्चर्यम् । क्वासौ उज्जलद्भुतवहः । तदवस्थमेतदन्तःपुरम् । कथमवन्तिनृपात्मजेयम् ।

बाभ्रव्यः — एष वसुभूतिः, अयं वयस्यः ।

स्वप्ने मतिर्भ्रमति किन्त्विदमिन्द्रजालम् ॥

विदूषकः — भो मा संदेहं करेहि । भणिदं खु तेण दासीए उत्तेण इंदआलिएण । एक्को खेलनओ देवेन प्रेक्षिदव्वोत्ति । (भोः, मा सन्देहं कुरु । भणितं तेन दास्याः पुत्रेण एकः खेलनको देवेन प्रेक्षितव्य इति ।)

यथा च वेणीसंहारे, कञ्चुकी — (सहर्षं) महाराज, वर्द्धसे । अयं खल्वायुष्मान् कुमारभीमसेनः सुयोधनक्षतजारुणीकृतसकलशरीराम्बरो दुर्लक्ष्यव्यक्तिः। अलमधुना सन्देहेनेति ।

अथ निर्वहणाङ्गानि चतुर्दश । तेषु,

चमूर्बीजोपगमनं सन्धिरित्यभिधीयते ॥

यथा रत्नावल्यां चतुर्थेऽङ्के, वसुभूतिः अभिनिविश्याकन्तरं रत्नावलीं विलोक्याह— बाभ्रव्य, सदृशीयं राजपुत्र्याः । बाभ्रव्यः — ममाप्येतदेव मनसि वर्तते ।

यथा वेणीसंहारे, चेटी — द्रौपदीमालिङ्ग्य, देवी णिवट्टीअदु णिवट्टीअदु । एसो क्खु पूरिदपडिण्णाभारो णाहो दे वेणीसंहारं काडुं तुवं एव्व अण्णेसेदि । (देवि निवृत्यतां निवृत्यतां । एवं खलु पूरितप्रतिज्ञाभारो नाथस्ते वेणीसंहारं कर्तुं त्वामेवान्विष्यति ।)

अन्यस्यान्वेषणं युक्त्या निरोध इति कीर्तितः ॥

यथा रत्नावल्यां चतुर्थेऽङ्के, वसुभूतिः — देव, कुत इयं कन्यका ?

राजा — देवी जानाति ।

यथा च वेणीसंहारे, युधिष्ठिरः — (स्वैरमुक्ता भीमसेनमवलोकयन्नंसे परामृश्य) जयंधर, सत्यं कथयामि । नायमनुजवैरी । वत्स, बाष्पजलान्तरितनयनत्वान्न पश्यामि ते मुखचन्द्रमिति ।

उपक्षेपस्तु कार्याणां ग्रथनं परिकीर्तितम् ॥

यथा रत्नावल्यां, चतुर्थेऽङ्के, वासवदत्ता — अमच, एसा खु साअरादो पाविदेत्ति भणिअ अमच्चजोअन्धराअणेण मम हत्थे णिक्खित्ता । अदो एव्व साअरिआत्ति सद्दाईअदि । [अमात्य, एषा खलु सागरात्प्राप्तेति भणित्वा अमात्ययौगन्धरायणेन मम हस्ते निक्षिप्ता । अत एव सागरिकेति शब्द्यते ।]

वसुभूतिः — (जनान्तिकं) बाभ्रव्य, यथा वसन्तकस्य कण्ठे रत्नमाला, (सागरिकां निर्दिश्य) यथा चास्याः सागरात्प्राप्तिस्तथा व्यक्तमेवेयं सिंहलेश्वरदुहिता रत्नावलीति ।

यथा च वेणीसंहारे, भीमसेनः — देव अजातशत्रो भीमार्जुनगुरो कुतोऽद्यापि दुर्योधन हतकः। मया हि तस्य दुरात्मनः पाण्डुकुलपरिभाविनः —

भूमौ क्षिप्तं शरीरं निहितमिदमसृक्चन्दनाभं निजाङ्गे

लक्ष्मीरार्ये निषण्णा चतुरुदधिपयस्सीमया सार्धमुर्व्या ।

भृत्या मित्राणि योधाः कुरुकुलमखिलं दग्धमेतद्रणाग्नौ
नामैकं यद्ब्रवीषि क्षितिप तदधुना धार्तराष्ट्रस्य शेषम् ॥

अनुभूतार्थकथनं निर्णयः समुदाहृतः ॥

यथा रत्नावल्यां, वसुभूतिः – आयुष्मति रत्नावलि, त्वमेतामवस्थां प्राप्तासि ?
सागरिका — (सप्रत्यभिज्ञं) तुमं पि किं अमच्चवसुभूदी ? (त्वमपि किं ममात्यवसुभूतिः !)
वसुभूतिः — स एवाहं मन्दभाग्यः ।
सागरिका – सो खु अहं मंदभाइणी । (सा खल्वहं मन्दभागिनी ।)
वसुभूतिः – हा हतोऽस्मि । इति भूमौ पतति । सागरिका – हा तात, हा अम्ब ।
वासवदत्ता– अा किं एसा मे बहिणिच्चा रअणावली । (किमेषा मे भगिनिका रत्नावली !)
कञ्चुकी — देवि, एवम् ।
वासवदत्ता — रत्नावलि, समस्सस, समस्सस । (समाश्वसिहि, समाश्वसिहि ।)
राजा — कथमुदात्तराजवंशप्रसूतस्य सिंहलेश्वरस्य विक्रमबाहोरात्मजेयम् ।
विदूषकः — (आत्मगतं), पढममेव मए जाणिदं । (रत्नमालामपरामृश्य) णहु ईदिसो सामण्णजणस्स विहवो होदित्ति । '[प्रथममेव मया ज्ञातम् । न खलु ईदृशः सामान्यजनस्य विभवो भवतीति ।]

यथा वा वेणीसंहारे, युधिष्ठिरः — वत्स, बाष्पजलान्तरितनयनत्वान्न पश्यामि ते मुखचन्द्रम् । तत्कथय कश्चिज्जीवति भवान्समं किरीटिना ।
भीमसेनः – निहतसकलरिपुपक्षे त्वयि नराधिपे जीवति भीमोऽर्जुनश्च ।
युधिष्ठिरः — (पुनर्गाढमालिङ्ग्य),

रिपोरास्तां तावन्निधनमिदमाख्याहि शतशःप्रियो भ्राता सत्यं त्वमसि मम योऽसौ बकरिपुः ।
जरासन्धस्योरस्सरसि रुधिरासारसलिले तटाघातक्रीडाललितमकरस्संयति भवान् ॥

परिवादकृतं यत्स्यात्तदाहुः परिभाषणम् ॥

यथा रत्नावल्यां, चतुर्थेऽङ्के, वसुभूतिः — आयुष्मति, समाश्वसिहि । नन्वियं ज्यायसी ते भगिनी दुःखमास्ते । तत्परिष्वजस्वैनाम् ।
रत्नावली — (समाश्वस्य, राजानं निरीक्षमाणा, स्वगतं) किदावराहा खु अहं देवीए ण सक्कुणोमि मुहं दंसिदुं । [कृतापराधा खल्वहं देव्या । न शक्नोमि मुखं दर्शयितुम् ।] इति ।
यथा वेणीसंहारे, भीमसेनः – मुञ्चतु मामार्यः क्षणमेकम् ।
युधिष्ठिरः — किमपरमवशिष्टम् ?

भीमसेनः — आर्य, सुमहदवशिष्टम् । संयच्छामि तावदनेन दुश्शासनसुयोधनशोणितोक्षितेन पाणिना पाञ्चाल्या दुश्शासनावकृष्टं केशहस्तमिति ।

ईर्ष्याकोपप्रशमनं द्युतिमाचक्षते बुधाः ॥

यथा रत्नावल्यां, चतुर्थेऽङ्के, वासवदत्ता — वसुभूतिमपवार्य, अय्यउत्त, लज्जामि खु अहं इमिणा णिसंसत्तणेण । ता अवणेहि से बंधणं । [आर्यपुत्र, लज्जे खल्वहं नृशंसत्वेन । तदपनयास्या बन्धनम् । ]

राजा — सपरितोषं, यथाह देवी । इति मोचयति ।

वासवदत्ता — (वसुभूतिमुद्दिश्य,) अय्य, जोगन्धरायणेण एत्तिअं कालं दुज्जणीकिदह्मि । जेण जाणं तेणवि ण मे णिवेदिदं । [आर्य, यौगन्धरायणेनैतावत्कालं दुर्जनीकृतास्मि । येन जानतापि न मे निवेदितम् । ]

यथा च वेणीसंहारे, भीमः — राजपुत्रि, अलं मामालोक्य त्रासेन ।

कृष्टा येनासि राज्ञां सदसि नृपशुना तेन दुःशासनेन
स्त्यानान्येतानि तस्य स्पृश मम करयोः पीतशेषाण्यसृञ्जि ।
कान्ते राज्ञः कुरूणामपि सरसमिदं मद्गदाचूर्णितोरो-
रङ्गेऽङ्गेसृङ्निषक्तं तव परिभवजस्यानलस्योपशान्त्यै ॥

शुश्रूषाद्युपसम्पन्नः प्रसाद इति कीर्तितः ॥

यथा रत्नावल्यां, वासवदत्ता — अज्ज अमच्च, फुडं एव्व किं ण भणासि । अज्जउत्तं पडिवादेहि रअणावलींति । [आर्य अमात्य, स्फुटमेव किं न भणसि यथा आर्यपुत्रे प्रतिपादय रत्नावलीमिति । ] (इत्युक्त्वा रत्नावलीं स्वैराभरणैरलंकृत्य हस्ते गृहीत्वा राजानमुपसृत्य), देव पडिच्छ एदं रअणावलीं । [देव, प्रतीच्छैतां रत्नावलीम् । ]

यथा च वेणीसंहारे, भीमः — वेणीं बध्नन्, भवति संयम्यतामिदानीं क्षत्रियकालरात्रिः कुरुपतिविघटिता वेणी ।

द्रौपदी — णाह विसुमरिदह्मि एदं वावारम् । णाहस्स प्पसादेण पुणो वि सिक्खिस्सम् । (नाथ विस्मृतास्म्येतं व्यापारम् । नाथस्य प्रसादेन पुनरपि शिक्षिष्ये ।) इति ।

समागमस्तथार्थानामानन्दः परिकीर्तितः ॥

यथा रत्नावल्यां चतुर्थेऽङ्के, राजा — हस्तौ प्रसार्य, को देव्याः प्रसादं न बहुमन्यत इति ।

यथा च वेणीसंहारे षष्ठेऽङ्के, नेपथ्ये, महासमरानलदग्धशेषाय स्वस्ति भवतु राजन्यकुलाय। क्रोधान्धैर्यस्य मोक्षात्क्षतनरपतिभिः पाण्डुपुत्रैः कृतानि

प्रत्याशं मुक्तकेशान्यनुलभुजबलैः पार्थिवान्तःपुराणि।

कृष्णायाः केशपाशः कुपितयमसखो धूमकेतुः कुरूणां

सोऽयं बद्धः प्रजानां विरमतु निधनं स्वस्ति राज्ञां कुलेभ्यः॥

दुःखस्योपशमश्चैव समयोऽथ निगद्यते॥

यथा रत्नावल्यां, वासवदत्ता — अय्यउत्त, दूरे क्खु वदाए ण्णाभिउलम्। तातह करेदु जह एसा बन्धुजणं ण सुमरेदि। (आर्यपुत्र, दूरे खल्वेतस्या नाभिकुलम्। तत्तथा कुरु यथा एषा बन्धुजनं न स्मरति। राजा — यथाह देवी। इति।

यथा च वेणीसंहारे, युधिष्ठिरः — अये भगवान्पुण्डरीकाक्षः, वत्सश्च किरीटी। भगवन् किमस्य मे विजयादन्यत्स्यात्। यस्य भगवान् पुराणपुरुषो नारायणः स्वयं मङ्गलान्याशास्ते।

कृतगुरुमहदादिक्षोभसम्भूतमूर्तिं गुणिनमुदयनाशस्थानहेतुं प्रजानाम्।

अजममरमचिन्त्यं चिन्तयित्वापि न त्वां भवति जगति दुःखी किं पुनर्देव दृष्ट्वा॥

इति। अद्भुतस्य च संप्राप्तिर्भवेच्चदुपगूहनम्॥

यथा रत्नावल्यां, विदूषकः — ही ही भोः, पुहवी क्खु दाणिं हत्थे गदा पिअवअस्सस्स। (पृथ्वी खल्विदानीं हस्ते गता प्रियवयस्यस्य।)

यथा च वेणीसंहारे, कृष्णः — महाराज युधिष्ठिर

व्यासोऽयं भगवान्नमी च मुनयो वाल्मीकिरामादयो

धृष्टद्युम्नमुखाश्च सैन्यपतयो माद्रीसुताधिष्ठिताः।

प्राप्ता मागधमत्स्ययादवकुलैराज्ञाविधेयैः समम्

स्कन्धोत्तम्भिततीर्थवारिकलशा राज्याभिषेकाय ते॥

अद्य पुनर्दुरात्मना चार्वाकेण विप्रकृतं भवन्तमुपलभ्यार्जुनेन सह त्वरिततरमायात इति।

सामदानादिसम्पन्नं भूषणं ब्रुवते बुधाः॥

यथा रत्नावल्याम्, वसुभूतिः — देवि, स्थाने देवीशब्दमुद्वहसि।

यथा च वेणीसंहारे, भीम — क्वासौ धार्तराष्ट्रसभा पुण्यजनापवादो येनार्यस्य महानयं चित्तविभ्रमः कृतः।

कृष्णः — निगृहीतः स दुरात्मा नकुलेनेति।

पुनर्वाक्यं तु विज्ञेयं यथोक्ताक्षेपदर्शनम् ॥

यथा रत्नावल्यां, बाभ्रव्यः — देवि, इदानीं सफलपरिश्रमोऽसि संवृत्त इति ।

यथा च वेणीसंहारे, युधिष्ठिरः — भगवन्, किं नाम चार्वाकेण रक्षसा वयं विप्रलब्धाः ?

कृष्णः — अथ किम् । इति ।

वरप्रदानसम्प्राप्तिः काव्यसंहार इष्यते ॥

यथा रत्नावल्यां, यौगन्धरायणः — देव, तदुच्यतां किं ते भूयः प्रियमुपकरोमि ?

राजा – किमतःपरमपि प्रियमस्ति । यतः,

नीतो विक्रमबाहुरात्मसमतां प्राप्तेयमुर्वीतले
सारं सागरिका तथा च भुवनप्राप्त्येकहेतुः प्रिया ।
देवी प्रीतिमुपागता च भगिनीलाभाज्जिताः कोसलाः
किं नास्ति त्वयि सत्यमात्यवृषभे यस्मै विधेयं स्पृहाम् ॥ इति ।

यथा वेणीसंहारे, कृष्णः — तत्कथय महाराज, किमस्मत्तः प्रियमिच्छसि ?

युधिष्ठिरः – न खल्वतःपरमभ्यर्थयितुं क्षमः । पश्यतु देवः ।

क्रोधान्धैः सकलं हतं रिपुकुलं पञ्चाऽक्षतास्ते वयं
पाञ्चाल्या मम दुर्नयोपजनितस्तीर्णो निकारार्णवः ।
त्वं देवः पुरुषोत्तमः सुकृतिनं मामादृतो भाषसे
किं नामान्यदतः परं भगवतो याचे प्रसन्नादहम् ॥ इति ।

नृपदेवादिशक्तिश्च प्रशस्तिरभिधीयते ॥

यथा रत्नावल्यां, राजा — तथापीदमस्तु ।

उर्वीमुद्दामसस्यां जनयतु विसृजन्वासवो वृष्टिमिष्टां
इष्टैस्त्रैविष्टपानां विदधतु विधिवत्प्रीणनं विप्रमुख्याः ।
आकल्पान्तं च भूयात्समुपचितसुखस्सङ्गमस्सज्जनानां
निश्शेषं यान्तु शान्तिं पिशुनजनगिरो दुर्जया वज्रलेपाः ॥

यथा च वेणीसंहारे, युधिष्ठिरः — तथापि प्रीततरश्चेद्भगवांस्तदिदमस्तु ।

अकृपणमतिः कामं जीव्याज्जनःपुरुषायुषं भवतु भगवन्भक्तिर्द्वैतं विना पुरुषोत्तमे ।
दयितभुवनो विद्वद्बन्धुर्गुणेषु विशेषवि त्सततसुकृती भूयाद्भूपः प्रसाधितमण्डलः ॥

## अथ लक्षणानि

लक्षणानि चतुष्षष्टिरिति यत्प्रागुदीरितम्। नाटकादेरलङ्कारं लक्ष्म तदिदानीं विविच्यते ॥
भूषणाक्षरसङ्घातौ शोभोदाहरणे तथा । हेतुसंशयदृष्टान्ताः प्राप्तिराशय एव च ॥
निदर्शनं निरुक्तं च सन्धिराशिः विशेषणम्। गुणातिपातोऽतिशयस्तुल्यतर्कः पदोच्चयः॥
दिष्टं चैवोपदिष्टं च विचारोऽथ विपर्ययः। भ्रंशश्चैवानुनीतिश्च माला दाक्षिण्यगर्हणे ॥
अर्थापत्तिः प्रसिद्धिश्च पृच्छा सारूप्यमेव च। मनोरथश्च लेशश्च याच्ञा प्रोत्साहनं स्पृहा ॥
पश्चात्तापोऽनुवृत्तिश्च युक्तिर्निर्भासनं क्षमा। गुणानुवाद आक्रन्दः कपट परिवादनम्॥
उपपत्तिश्च कार्यश्च प्रतिषेधो मृषोद्यमः। छलोक्तिः काकुरुन्मादः परिहासो विकत्थनम्॥
यदृच्छायोगवैषम्यप्रतिज्ञातप्रवृत्तयः । आशीरुक्तिश्च सिद्धिश्च प्रियं वचनमेव च ॥
लक्षणानि चतुष्षष्टिं काव्येष्वेतानि निर्दिशेत् ॥

तत्र च, अलङ्कारैर्गुणैश्चैव बहुभिर्यदवेक्षितम् ॥

यथा रत्नावल्यां प्रथमेऽङ्के, यौगन्धरायणः –

विश्रान्तविग्रहकथो रतिमान् जनस्य चित्ते वसन्प्रियवसन्तक एव साक्षात्।
पर्युत्सुको निजमहोत्सवदर्शनाय वत्सेश्वरः कुसुमचाप इवाभ्युपैति ॥

अत्र श्लेषोपमाप्रत्यक्षादिभिरलङ्कारैः श्लेषप्रसादसौकुमार्यादिभिश्च गुणैरुपेतता द्रष्टव्या । एवं वक्ष्यमाणेष्वपि गुणालङ्कारा यथासम्भवमूहनीयाः । नाटककारैश्च नियमो नारभ्यते । सम्पक्षेषु तु गुणालङ्कारयोगो नापेक्ष्यत इति ।

यत्रार्थैरक्षरैः श्लिष्टैर्वैचित्र्यार्थोपवर्णनम् । तमत्राक्षरसङ्घातं विद्याल्लक्षणसंज्ञितम् ॥

यथाभिज्ञानशाकुन्तले सप्तमेऽङ्के, (प्रविश्य मृण्मयूरहस्ता तापसी — सव्वदमण, सउंद-लावण्णं पेक्ख । (सर्वदमन, शकुन्तलावण्य प्रेक्षस्व ।)

बाल. – (सदृष्टिक्षेपं), कहिं सा अज्जू । (कुत्र मे अम्बा ?)

उभे – विहस्य, णामसारिच्छेण छलिदोसि मादिवच्छलो ।
(नामसादृश्येन वञ्चितोऽसि मातृवत्सलः ।)

राजा — (आत्मगतं), किं शकुन्तलेति तस्य मातुराख्या !

सिद्धैरर्थैः समं कृत्वा यत्रासिद्धं प्रसाध्यते। श्लिष्टा श्लक्ष्णा विचित्रार्था सा शोभेत्यभिधीयते॥

यथा रत्नावल्यां, प्रथमेऽङ्के, यौगन्धरायणः —

द्वीपादन्यस्मादपि मध्यादपि जलनिधेर्दिशोऽप्यन्तात् ।
आनीय झटिति घटयति विधिरभिमतमभिमुखीभूतः ॥

अन्यथा क सिद्धादेशप्रत्ययप्रार्थितायाः सिंहलेश्वरदुहितुः समुद्रे प्रवहणभङ्गनिमग्नायाः फलकासादनं, क च कौशाम्बीयेन वणिजा सिंहलेभ्यः प्रत्यागच्छता तदवस्थायाः सम्भावनं रत्नमालाचिह्नायाश्च प्रत्यभिज्ञानाद्दिहानयनं च । सर्वथा स्पृशन्ति नस्स्वामिनमभ्युदया इति ।

तत्र तुल्यार्थयुक्तेन वाक्येनाभिप्रदर्शनात्। साध्यन्ते निपुणैरर्थास्तदुदाहरणं स्मृतम् ॥

यथा रत्नावल्यां, द्वितीयेऽङ्के, राजा विदूषकश्च शारिकावचनं निशमयतः । ततो विदूषकः — (आकाशे) किं अप्पारणे कुप्पसि । जादिसो तुए अयं कामदेवो आलिहिदो तादिसी मए इह आलिहिदेत्ति । भो वअस्स, किं णेदं । [किं अकारणे कुप्यसि । यादृशस्त्वयायं कामदेव आलिखितस्तादृशी मया रतिरालिखितेति । भो वयस्य, किं न्विदम् ?]

राजा — वयस्य, एवं तर्कयामि । कयापि हृदयवल्लभोऽनुरागादभिलिख्य कामदेवव्यपदेशेन निह्नुतस्तस्यापि प्रत्यभिज्ञाय वैदग्ध्यात्प्रतिभिन्दानया सापि तत्रैव लिखितेति ।

यःप्रयोजनसामर्थ्याद्वाक्यमिष्टार्थसाधकम्। समासोक्तमनोग्राहि स हेतुरिति संज्ञितः ॥

यथा रत्नावल्यां, द्वितीयेऽङ्के, विदूषकः — सच्चं सवामि बम्हसुत्तेण जइ कदावि अम्हेहिं ईदिसी दिट्ठपुव्वा । [सत्यं शपे ब्रह्मसूत्रेण यदि कदाप्यस्माभिरीदृशी दृष्टपूर्वा ।]

काञ्चनमाला — भट्टिणि, कदावि ईदिसं घुणक्खरं वि संभवदि एव्व । [भट्टिनि, कदापीदृशं घुणाक्षरं संभवत्येव ।]

वासवदत्ता — अयि उज्जुए, वसन्तओ एसो ण आणासि । एदं सव्वं क भणिदीओ । (अयि ऋजुके, वसन्तक एषो न जानासि । एतत्सर्वं भणति किं ?)

अपरिज्ञाततत्त्वार्थं यत्र वाक्यं समाप्यते। सोऽनेकत्वाद्विचाराणां संशयः परिकीर्तितः॥

यथा रत्नावल्यां, चतुर्थेऽङ्के, वसुभूतिः — (सागरिकां निर्वर्ण्य) सुसदृशीयं राजपुत्र्याः ।

बाभ्रव्यः — ममाप्येतदेव मनसि वर्तते ।

.... यस्तु वक्ष्यार्थसाधकः। हेतोर्निदर्शनकृत स्स दृष्टान्त इति स्मृतः॥

यथा च वेणीसंहारे, प्रथमेऽङ्के, चेटी — भट्ट जण्णसेणि पञ्च गामा पत्थीअन्ति त्ति सुणीअदि कीस दाणीं वि दे केसा ण संजमीअन्ति । (अयि याज्ञसेनि पञ्चग्रामाः प्रार्थ्यन्त इति श्रूयते । तत्कस्मादिदानीमपि ते केशा न संयम्यन्ते ।)

भीमसेनः — सहदेव, श्रुतम् ।

सहदेवः — आर्य किमिहोच्यते । दुर्योधनकलत्रं हि सा । पश्य ।

स्त्रीणां हि साहचर्याद्भवन्ति चेतांसि भर्तृसदृशानि ।
मधुरापि हि मूर्च्छयते विषविटपिसमाश्रिता वल्ली ॥ इति ।

.... .... जानीयाल्लक्षणं नाटकाश्रयम् ॥

यथा रत्नावल्यां, तृतीयेऽङ्के, कदलीगृहे चित्रगतां सागरिकां निर्वर्णयति राजनि,

विदूषकः – भो वअस्स, कीस उण एसा ओणदमुही आलिहिदा । [भो वयस्य, कस्मात् पुनरेषा अवनतमुख्यालिखिता ? (पताकास्थानकं सूचयति) सदि, जह वसन्तओ तक्केदि तह तक्केमि भट्टिणावि इह एव्व होदव्वं ति । [सखे, यथा वसन्तको तर्कयते तथा तर्कयामि भर्त्राप्यत्रैव भवितव्यम् ।

अनुभूतोऽप्यर्थो यस्सादृश्यात्परिकल्पितः। लोकस्य हृदयग्राही सोऽभिप्राय इति स्मृतः॥

यथा मुद्रा वेदेविलीपये —

.... .... दीवरवनम् ।

तनरन्नानक्रीडाजनितजडभावैरवयवैः कदाचिन्मुञ्चेयं मदनशिखिपीडापरिभवम् ॥

यत्रार्थानां प्रसिद्धानां क्रियते परिकीर्तनम्। परापेक्षाव्युदासार्थं तन्निदर्शनमुच्यते ॥

यथा मालतीमाधवे, कामन्दकी — अयि वत्से, विमृश भगवत्या शासनम् । प्रभवति प्रायः कुमारीणां जनयिता दैवं च । यच्च किल, कौशिकी शकुन्तला दुष्यन्तमप्सराः पुरूरवसं चकमे इत्येतदाख्यानविद आचक्षते इत्यादि तदपि साहसकल्पमित्यनुपदेश्यमेवेति ।

निरवद्यस्य वाक्यस्य पूर्वोक्तार्थप्रसिद्धये । यदुच्यते तु वचनं निरुक्तं तदुदाहृतम् ॥

यथाभिज्ञानशाकुन्तले, प्रियंवदा — हला सउन्दले इह एव्व दाव मुहुत्तअं चिट्ठ । तुए समीवट्ठिदाए लदासणाहो विअ अअं केसररुक्खओ पडिभाइ । [सखि शकुन्तले, अत्रैव तावत् मुहूर्तं तिष्ठ । यावत्त्वया उपगतया लता सनाथ इव केसरवृक्षः प्रतिभाति ।]

शकुन्तला — अदो खु सि पिअंवदा । (अतः खलु त्वं प्रियंवदा ।)

राजा — प्रियमपि तथ्यमाह ।

अधरः किसलयरागः कोमलविटपानुकारिणौ बाहू ।

कुसुममिव लोभनीयं यौवनमङ्गेषु सन्नद्धम् ॥

बहूनां तु प्रधानानां नाम यत्राभिकीर्तने। अभिप्रेतार्थनिर्वर्थ सा सिद्धिरिति कीर्तिता॥

यथा रत्नावल्यां, चतुर्थेऽङ्के, राजा —

ब्रह्मा जटं हुतवहस्तदवस्थनेतदन्तःपुरं कथमसन्निन्नृपात्मजेदम् ।

बाभ्रव्य एष वसुभूतिरयं वयस्यस्स्वप्ने मतिर्भ्रमति किन्त्विदमिन्द्रजालम् ॥

सिद्धान्बहून्प्रधानार्थानुक्त्वा यत्र प्रयुज्यते । विशेष .... ॥

यथा अभिज्ञानशाकुन्तले —

प्राणानामनिलेन वृत्तिरुचिता सत्कल्पवृक्षे वने
तोये काञ्चनपद्मरेणुकपिशे पुण्याभिषेकक्रिया ।
ध्यानं रत्नशिलातलेषु विबुधस्त्रीसन्निधौ संयमो
यद्वाञ्छन्ति तपोभिरन्यमुनयस्तस्मिंस्तपस्यन्त्यमी ॥

गुणाभिधानैर्विविधैर्विपरीतार्थयोजितैः । गुणातिपातो मधुरैर्निष्ठुरार्थं भवेत्स्फुटम् ॥

यथोत्तररामचरिते, लवः — राममुद्दिश्य,

वन्द्यास्ते ह्यविचारणीयचरितास्तिष्ठन्तु किं वर्ण्यते
सुन्दस्त्रीनिधनेऽप्यखण्डयशसो लोके महान्तो हि ते ।
यानि त्रीणि कुतोमुखान्यपि पदान्यासन्खरायोधने
यद्वा कौशलमिन्द्रसूनुदमने तत्राप्यभिज्ञो जनः ॥

बहून्गुणान्कीर्तयित्वा सामान्यजनसम्भवान् । विशेषः कीर्त्यते यस्तु ज्ञेयः सोऽतिशयो बुधैः ॥

यथा रत्नावल्यां, द्वितीयेऽङ्के, राजा चित्रलिखितां सागरिकां दृष्ट्वाऽऽह —

विधायापूर्वपूर्णेन्दुमस्या मुखमभूद्ध्रुवम् । धाता निजासनाम्भोजविनिमीलनदुःस्थितः ॥

रूप . . . स्तुल्यतर्कः प्रकीर्तितः ॥

यथोत्तररामचरिते, रामः —

अपि जनकसुतायास्तच्च तच्चानुरूपं स्फुटमिह शिशुयुग्मे नैपुणोन्नेयमस्ति ।
ननु पुनरिव तन्मे गोचरीभूतमक्ष्णोरभिनवशतपत्त्रश्रीमदास्यं प्रियायाः ॥

बहूनां तु प्रयुक्तानां पदानां बहुभिः पदैः । उच्चयस्सदृशार्थो यस्स विज्ञेयः पदोच्चयः ॥

यथा रत्नावल्यां, प्रथमेऽङ्के, राजा वासवदत्तां प्रत्याह —

कुसुमसुकुमारमूर्तिर्दधती नियमेन तनुतरं मध्यम् ।
आभाति मकरकेतोः पार्श्वस्था चापयष्टिरिव ॥

यथादेशं यथाकालं यथापात्रं च वर्ण्यते । यत्प्रत्यक्षं परोक्षं वा दिष्टं तद्वर्णकोऽपि वा ॥

यथा राघवानन्दे —

अङ्के न्यस्योत्तमाङ्गं प्लवगबलपतेः पादमक्षस्य हन्तुः
कृत्वोत्सङ्गे सलीलं त्वचि कनकमृगस्याङ्गशेषं निधाय ।

त्राणं रक्षःकुलघ्नं प्रगुणितमनुजेनादराचीक्ष्णमक्ष्णः
कोणेनवेक्षमाणस्त्वदनुजवचने दत्तकर्णोऽयमास्ते ॥

परिगृह्यतु शास्त्रार्थं यद्वाक्यमभिधीयते । विद्वन्मनोहरं स्वन्तमुपदिष्टं प्रकीर्त्यते ॥

यथा शाकुन्तले —

शुश्रूषस्व गुरून् कुरु प्रियसखीवृत्तिं सपत्नीजने
भर्तुर्विप्रकृतापि रोषणतया मास्म प्रतीपं गमः ।
भूयिष्ठं भव दक्षिणा परिजने भाग्येष्वनुत्सेकिनी
यान्त्येवं गृहिणीपदं युवतयो वामाः कुलस्याधयः ॥

पूर्वाशयसमानार्थैरप्रत्यक्षार्थसाधनैः । अनेकोपायसंयुक्तो विचारः परिकीर्तितः ॥

यथोत्तररामचरिते, लवचन्द्रकेतू परस्परं सस्नेहानुरागं निर्वर्ण्य,

निजो वा सम्बन्धो न विधिवशात्कोपविदितो मया तस्मिन्दृष्टे हृदयमवधानं रचयति ॥

विचारस्यान्यथाभावस्तथादिष्टोपदिष्टयोः । सन्देहाज्जायते यत्र स विज्ञेयो विपर्ययः ॥

यथा रत्नावल्यां, तृतीयेऽङ्के, वासवदत्ता — हला कंचणमाले, सच्चं जेव मह वेसधारिणी भविअ साअरिआ अय्यउत्तं अहिसरिस्सदि । [हञ्जे काञ्चनमाले! सत्यमेव मम वेषधारिणी भूत्वा सागरिका आर्यपुत्रं अभिसरिष्यति ।]

काञ्चनमाला — कधं अण्णधा भट्टिणीए णिवेदीअदि । अहवा चित्तसालीआदुवारे उवविट्ठो वसंतओ एव्व दे पच्चक्खं उप्पादइस्सदि । [कथमन्यथा भर्त्र्यै निवेद्यते । अथवा चित्रशालिकाद्वार उपविष्टो वसन्तक एव ते प्रत्यक्षमुत्पादयिष्यति ।]

(ततः प्रविशति कृतावकुण्ठनो वसन्तकः.)

वसन्तकः — जह अअ चित्तसालिआदुवारे पदसद्दो सुणीअदि तह तक्केमि आअदा साअरिआत्ति। [यथाय चित्रशालिकाद्वारे पदशब्दः श्रूयते तथा तर्कयाम्यागता सागरिकेति।]

काञ्चनमाला — भट्टिणि, इयं सा चित्तसालिआ । ता जाव वसंतअस्स सण्णं करेमि। (भर्त्रि, इयं सा चित्रशालिका । तद्यावद्वसन्तकस्य संज्ञां करोमि । ) इति छोटिकां ददाति ।

विदूषकः – (उपसृत्य अपवार्य), सुसङ्गदे सुसरिसो खु तुए किदो कंचणमालाए वेसो साअरिआ एव्व वासवदत्तेति । (सुसङ्गते, सदृशः खलु त्वया कृत. काञ्चनमालाया वेषः सागरिका एव वासवदत्तेति ।) यथा चात्रैवाग्रतः –

विदूषकः — (ससम्भ्रमं, दृष्ट्वा) भो वअस्स, परित्ताअहि परित्ताअहि । एसा खु देवी वासवदत्ता । अत्ताणं उब्बंधिअ वावादेति । (भो वयस्य, परित्रायस्व परित्रायस्व । एषा खलु

देवी वासवदत्ता आत्मानमुद्बध्य व्यापादयति ।)

राजा — (ससम्भ्रममुपसृत्य) वयस्य, कासौ ?

विदूषकः – भो एसा । (भो एषा ।)

राजा— (उपसृत्य, कण्ठात्पाशमपनयन्) अयि साहसकारिणि, किमिदमकार्यं क्रियते ?

मम कण्ठगताः प्राणाः पाशे कण्ठगते तव । अतस्स्वार्थप्रयत्नोऽयं त्यज्यतां साहसं प्रिये ॥

. . . रिष्टादिभिरनेकधा । अन्यस्मिन्नेव पतनादाशुभ्रंशस्स उच्यते ॥

यथा च वेणीसंहारे, द्वितीयेऽङ्के, दुर्योधनः –

सहभृत्यगणं सबान्धवं सहमित्रं ससुतं सहानुजम् ।
स्वबलेन निहन्ति संयुगे न चिरात्पाण्डुसुत स्सुयोधनम् ॥

कञ्चुकी — (कर्णौ पिधाय, सभयं) शान्तं पापम् । प्रतिहतममङ्गलम् ।

राजा – विनयन्धर, किं वा मयोक्तम् ?

कञ्चुकी – (दुर्योधनोक्तं पठित्वा) तदेतद्विपरीतमभिहितं देवेन ।

राजा — विनयन्धर, अद्य खलु भानुमती यथापूर्वं मामनामन्त्र्य वासभवनात्प्रातरेव निष्क्रान्तेति व्याक्षिप्तं मे मन इति ।

उभयोः प्रीतिजननो विरुद्धाभिनिवेशयोः । अर्थस्य साधकश्चैव विज्ञेयोऽनुनयो बुधैः ॥

यथा रत्नावल्याम्, तृतीयेऽङ्के, राजा सागरिकावृत्तान्तापराधे वासवदत्तायाः पुरो बद्धाञ्जलिस्तामनुनयन्नाह — प्रिये वासवदत्ते देवि, एवमपि प्रत्यक्षदृष्टव्यलीकः किं ब्रवीमि ? तथापि विज्ञापयामि ।

आताम्रतामपनयामि विवर्ण एष लाक्षाकृतां चरणयोस्तव देवि मूर्ध्ना ।
कोपोपरागजनितां नु मुखेन्दुबिम्बे हर्तुं क्षमो यदि परं करुणा मयि स्यात् ॥

अभिप्रेतार्थसिद्ध्यर्थं कीर्त्यते यत्र सूरिभिः । प्रयोजनान्यनेकानि सा मालेत्यभिसंज्ञिता ॥

यथा मालतीमाधवे मकरन्दो मालतीमुद्दिश्य कामन्दकीं प्रति, भगवति,

श्लाघ्यान्वयेति नयनोत्सवकारिणीति निर्व्यूढसौहृदमयीति गुणोज्ज्वलेति ।
एकैकमेव हि वशीकरणं गरीयो युष्माकमेवमियमित्यथ किं ब्रवीमि ॥

हृष्टैः प्रसन्नवदनैर्यत्परस्यानुपाधिका । . . . . दाक्षिण्यमुदाहृतम् ॥

यथा रत्नावल्यां, द्वितीयेऽङ्के, वासवदत्ता — (विदूषकमुद्दिश्य), अय्य मम उण एदं चित्तं पेक्खिअ सीसवेअणा समुप्पण्णा । ता गमिस्सं अहं । (आर्य, मम पुनरिदं चित्रं प्रेक्ष्य शीर्षवेदना समुत्पन्ना । तद्गमिष्याम्यहम् ।)

राजा — वासवदत्तां पटान्ते गृहीत्वा, प्रिये

प्रसीदेति ब्रूयामिदमसति कोपे न घटते करिष्याम्येवं नो पुनरिति भवेदभ्युपगमः ।
न मे दोषोऽस्तीति त्वमिदमपि च ज्ञास्यसि मृषा किमेतस्मिन्वक्तुं क्षममिति न वेद्मि प्रियतमे॥

विदूषकः — भोदि पसीद । (भवति, प्रसीद ।)

वासवदत्ता — अज्जउत्त, मा अण्णधा संभवेहि । सच्चं एव्व मे सीसवेअणा समुप्पण्णा । ता गमिस्सं । (आर्यपुत्र, माऽन्यथा सम्भावय । सत्यं मे शीर्षवेदना समुत्पन्ना । तद्गमिष्ये ।) इति निष्क्रान्ता सपरिवारा वासवदत्ता ।

विदूषकः — भो दिट्ठिआ वड्ढसे क्खेमेण अदिक्कन्ता वासवदत्ता अआलवादलिआ विअ । [भोः, दिष्ट्या वर्धसे क्षेमेणातिक्रान्ता वासवदत्ताऽकालवातलिकेव ।]

राजा — मूर्ख, अलं परिहासेन । आभिजात्याद्विनिगूढो न लक्षितस्त्वया कोपो देव्याः ।

भ्रूभङ्गे सहसोद्गतेऽपि वदनं नीतं परां नम्रता-
मीषन्मां प्रति भेदकारि हसितं नोक्तं वचो निष्ठुरम् ।
अन्तर्बाष्पजडीकृतं प्रभुतया चक्षुर्न विष्फारितं
कोपश्च प्रकटीकृतो दयितया मुक्तश्च न प्रश्रयः ॥

यत्र सङ्कीर्तयेद्दोषं गुणमर्थेन दर्शयेत् । गुणातिपाताद्दोषाद्वा गर्हणं नाम तद्भवेत् ॥

यथा चोत्तररामचरिते, चन्द्रकेतुः — सैनिकैरभियुज्यमानं लवमुद्दिश्य, भो भो राजानः,

संख्यातीतैर्द्विरदतुरगस्यन्दनस्थैः पदातावत्रैकस्मिन्कवचनिबिडैर्नद्धचर्मोत्तरीये ।
कालज्येष्ठैरपरवयसि ख्यातिकामैर्भवद्भिर्योऽसौ बद्धो युधि समभरस्तेन धिग्वो धिगस्मान् ॥

कथ [illegible] न्योऽर्थः प्रतीयते । वाक्यमाधुर्यसम्पन्ना सार्थापत्तिरुदाहृता ॥

यथा राघवानन्दे, कुम्भकर्णो रावणमुद्दिश्याह —

रामोऽयं जगतीह विक्रमगुणैर्यातः प्रसिद्धिं परा-
मस्मद्भाग्यविपर्ययाद्यदि परं देवो न जानाति तम् ।
वन्दी वैष यशांसि गायति मरुद्यस्यैकबाणाहति-
श्रेणीभूतविशालतालविवरोद्गीर्णैः स्वरैः सप्तभिः ॥

वाक्यरसातिशयश्च [illegible] । लोकप्रसिद्धैर्बहुभिः प्रसिद्धिरिति कीर्तिता ॥

यथा महावीरचरिते, रामः परशुराममुद्दिश्याह —

उत्पत्तिर्जमदग्नितः स भगवान्देवः पिनाकी गुरुः
वीर्यं यत्तु न तद्गिरां पथि ननु व्यक्तं हि तत्कर्मभिः।
त्यागस्सप्तसमुद्रमुद्रितमहीनिर्व्याजदानावधि-
र्ब्रह्मक्षत्रतपोनिधेर्भगवतः किं वा न लोकोत्तरम् ॥

यत्राकारोद्भवैर्वाक्यैरात्मानमथवा परम्। पृच्छन्निवाभिधत्ते .... ॥

यथा महावीरचरिते, हनूमान् सीतां दृष्ट्वा आह —

स्थानेऽवसीदसि रघूद्वह किं विधातरस्यास्त्वयेक्षितमलक्षणमङ्गकेषु।
अद्यापि जीवसि दशानन हे हनूमन् केयं तवाभिमुखवर्तिरिपोः प्रतीक्षा ॥

दृष्टश्रुतादिभूतार्थकथनादिसमुद्भवम्। सादृश्यं क्षोभजननं सारूप्यमिति संज्ञितम् ॥

यथा वेणीसंहारे, दुर्योधनेन भीमार्जुनौ हताविति चार्वाकादाकर्ण्य शोकाविताप्रवेशं अभिलषति सद्रौपदीके युधिष्ठिरे, (नेपथ्ये कलकलानन्तरं) भो भोः स्यमन्तपञ्चकसञ्चारिणः क्षतजासवमत्तयक्षराक्षसपिशाचभूतवेतालकङ्कजम्बुकोलूकवायसभूयिष्ठा विरलयोधपुरुषाः कृतमत्सद्दर्शनत्रासेन। कथयत कस्मिन्नुद्देशे याज्ञसेनी संनिहितेति। कथयाम्युपलक्षणं तस्याः।

ऊरू करेण परिघट्टयतस्सलीलं दुर्योधनस्य पुरतोऽपहृताम्बरा या।
दुःशासनेन कचकर्षणभिन्नमौलिस्सा द्रौपदी कथयत क्व पुनः प्रदेशे ॥

कञ्चुकी — हा देवि यज्ञवेदिसंभवे, परिभूयसे संप्रत्यनाथा कुरुकुलकलङ्केन।

युधिष्ठिरः — (ससम्भ्रममुत्थाय) देवि याज्ञसेनि, न भेतव्यं न भेतव्यम्। कः कोऽत्र भोः सनिषङ्गं मे धनुरुपानय। दुरात्मन्दुर्योधनहतक आगच्छागच्छ। अपनयामि ते गदाकौशलसंभूतं भुजदर्पं शिलीमुखासारेण। अन्यच्च रे कुरुकुलाङ्गार,

प्रियमनुजमपश्यंस्तं जरासन्धमल्लं कुपितहरकिरातायोधिनं तं च वत्सम्।
त्वमिव कठिनचेताः प्राणितुं नास्मि शक्तो ननु पुनरपहर्तुं बाणवर्षैस्तवासून् ॥

(ततः प्रविशति यथानिर्दिष्टो भीमसेनः।)

भीमसेनः — भो भोः स्यमन्तपञ्चकसंचारिणः सैनिकाः कोऽयमावेगः।

नाहं रक्षो न भूतो रिपुरुधिरजलप्लावितानङ्गः प्रकामं
निस्तीर्णोरुप्रतिज्ञाजलनिधिगहनः क्रोधनः क्षत्रियोऽस्मि।

भो भो राजन्यवीराः समरशिखिशिखादग्धशेषाः कृतं व-
स्त्रासेनानेन लीनैर्हतकरितुरगान्तर्हितैरास्यते यत् ॥

कथयन्तु भवन्तः कस्मिन्नुद्देशे पाञ्चाली तिष्ठति ।

कञ्चुकी — देवि पाण्डुस्नुषे, उत्तिष्ठोत्तिष्ठ ।

द्रौपदी — (सहसोत्थाय) कहं ण संभावेमि अज्जवि चिदासमीवम् ।

[कथं न संभावयाम्यद्यापि चितासमीपम् ।]

युधिष्ठिरः — कः कोऽत्र भोः । सनिषङ्गं धनुरुपनय । कथं न कश्चित्परिजनः । भवतु । बाहुयुद्धेनैव दुरात्मानं गाढमालिङ्ग्य ज्वलनमभिपातयामि । (इति परिकरं बध्नाति.)

कञ्चुकी — देवि पाण्डुस्नुषे, संयम्यन्तामिदानीं नयनोपरोधिनो दुःशासनावकृष्टा मूर्धजाः । अस्तमिता संप्रति प्रतीकाराशा । चितासमीपमेव द्रुततरं संभावय ।

युधिष्ठिरः — कृष्णे, न खल्वनिहते तस्मिन्दुरात्मनि दुर्योधने संहर्तव्याः केशाः ।

भीमसेनः — पाञ्चालि, न खलु मयि जीवति संहर्तव्या दुःशासनविलुलिता वेणिरात्मपाणिभ्याम् । तिष्ठतु तिष्ठतु । स्वयमेवाहं संहरामि । (इति केशेषु ग्रहीतुमिच्छति ।)

युधिष्ठिरः — (वेगाद्भीममालिङ्ग्य,) दुरात्मन् भीमार्जुनशत्रो सुयोधनहतक,

आशैशवादनुदिनं जनितापराधो मत्तो बलेन भुजयोर्हतराजपुत्रः ।
आसाद्य मेऽन्तरमिदं भुजपञ्जरस्य जीवन्प्रयासि न पदात्पदमद्य पाप ॥

भीमसेनः — अये कथमार्यः सुयोधनशङ्कया क्रोधान्निर्दयं मामालिङ्गति ।

कञ्चुकी — (निरूप्य, सहर्षं) महाराज वञ्च्यसे । अयं खल्वायुष्मान्भीमसेनः सुयोधनक्षतजारुणीकृतसकलशरीराम्बरो दुर्लक्ष्यव्यक्तिः । अलमधुना सन्देहेनेति ।

हृदयस्थस्य भावस्य सुश्लिष्टार्थप्रकाशकम् । अन्यापदेशकथनं मनोरथ इति स्मृतः ॥

यथा रत्नावल्यां द्वितीयेऽङ्के, सुसङ्गता — सहि जस्स किदे तुमं आअदा सो अअं चिट्ठदि । [सखि, यस्य कृते त्वमागता, सोऽयं तिष्ठति ।]

सागरिका — (सासूयं), सहि कस्स किदे अहं आअदा ? [सखि, कस्य कृतेऽहमागता ?]

सुसङ्गता — अइ अण्णसंकिदे, णं चित्तफलअस्स । ता गेह्णतम् ।

[अयि अन्यशंकिते, ननु चित्रफलकस्य । तद्गृहाण तम् ।]

यद्वाक्यं वाक्यकुशलैरुपायेनाभिधीयते । सादृश्यार्थाभिनिष्पत्त्या स लेश इति कीर्तितः ॥

यथा शाकुन्तले सख्यौ — शकुन्तलादुष्यन्तयोराकारं विदित्वा, जनान्तिकं, हला सउंदले, जइ अज्ज तादो सण्णिहिदो हवे । (सखि शकुन्तले, यद्यद्य तातस्सन्निहितो भवेत् ।)

शकुन्तला — (सरोषं) तदो किं भवे । (ततः किं भवेत् ?)

सख्यौ — इमं जीविदसव्वस्सेणवि अदिहिं किदत्थिकरिस्सदि। (इमं जीवितसर्वस्वेनाप्यतिथिं कृतार्थीकरिष्यति।)

शकुन्तला — हळा अवेह। किं वि हिअए करिअ मंतेह। णवो वअणं सुणिस्सं।
(सख्यौ अपेत। किमपि हृदये कृत्वा मन्त्रयेथे। न वां वचनं श्रोष्यामि।)

परदोषैर्विचित्रार्थैर्यत्रात्मा परिकीर्त्यते। अदुष्टोऽन्योऽपि वा कश्चित्स तु क्षोभ इति स्मृतः॥

यथा रत्नावल्यां, तृतीयेऽङ्के, राजा — (अञ्जलिं बध्वा) प्रिये वासवदत्ते प्रसीद।

वासवदत्ता — अज्जउत्त, मा एव्वं भण। अण्णगदाइं एदाइं अक्खराइं।
(आर्यपुत्र, मा एवं भण। अन्यगतान्येतान्यक्षराणि।)

विदूषकः — भोदि, महाणुभावा क्खु तुमं। ताक्खमीअदु दाव एक्को अवराहो पिअवअस्सस्स।
[भवति, महानुभावा खलु त्वम्। तत्क्षम्यतां पतावानपराधः प्रियवयस्यस्य।]

वासवदत्ता — अज्ज वसन्तअ, णं पढमसंगमे विग्घं करंतीए मए जेव्व एदस्स अवरद्धं।
[आर्य वसन्तक, ननु प्रथमसङ्गमे विघ्नं कुर्वन्त्या मयैवैतस्यापराद्धम्।]

कीर्त्यमानैर्गुणैर्यत्र विविधार्थसमुद्भवैः। दोषा न परिकल्प्यन्ते तज्ज्ञेयं गुणकीर्तनम्॥

यथा रत्नावल्याम्, द्वितीयेऽङ्के, राजा —

दृष्टिं रुषा क्षिपसि भामिनि यद्यपीमां स्निग्धेयमेष्यति तथापि न रूक्षभावम्।
त्यक्त्वा त्वरां व्रज पदैः स्खलितैरयं ते खेदं गमिष्यति गुरुर्नितरां नितम्बः॥

पृष्टैरपृष्टैरथवा निर्णयः पर्यवस्थितः। तदाख्यानमिति ज्ञेयं लक्षणं नाटकाश्रयम्॥

यथोत्तररामचरिते, चतुर्थेऽङ्के, कौसल्या — अम्महे एदाणं मज्झेको एसो रामचंदकोमारलच्छीसावट्ठंभेहिं मुद्धललिदेहिं अंगेहिं दारओ अम्हाणं लोअणाइं सीअलावेइ। [अहो एतेषां मध्ये क एषः रामचन्द्रकौमारलक्ष्मीसावष्टम्भैर्मुग्धललितैरङ्गैर्दारकोऽस्माकं लोचने शीतलयति।]

अरुन्धती — (अपवार्य, सहर्षोत्कण्ठं,) इदं तन्नाम यद्भागीरथीनिवेदितं रहस्यं कर्णामृतम्। नत्वेतत् विद्मः कतरोऽयमायुष्मतोः कुशलवयोरिति।

वार्यमाणाः सुबहुभिर्व · युक्तिभिः। नार्यो यं नानुतिष्ठन्ति सोऽभिमानःप्रकीर्तितः॥

यथा रत्नावल्यां, तृतीयेऽङ्के, काञ्चनमाला — भट्टिणि करेहि से पसादं। एअ चरणपडिअ महाराजं उज्झिअ गदाए पच्चादावेन होदव्वं। (भर्त्रि, कुरुष्व अस्मै प्रसादम्। एवं चरणपतितं महाराजमुज्झित्वा गतायाः देव्याः पश्चात्तापेन भवितव्यम्।)

वासवदत्ता — अइ अपेहि अपण्डिदे। कुदो एत्थ पसादस्स पच्चादावस्स वा कारणं? (अयि, अपेहि अपण्डिते। कुतोऽत्र पश्चात्तापस्य प्रसादस्य वा कारणम्?)

लाभोपपत्तिमाख्याय स्वयं दूतमुखेन वा। प्रार्थ्यते यत्र कन्यादिरसा याच्ञेत्यभिधीयते॥

यथा महावीरचरिते —

कन्यारत्नमयोनिजन्म भवतामास्ते वयं चार्थिनो
रत्नं यत्क्वचिदस्ति तत्परिणमत्यस्मासु शक्रादपि।
कन्यायाश्च परार्थतैव हि मता तस्याः प्रदानादहं
बन्धुर्वो भविता पुलस्त्यपुलहप्रष्ठाश्च सम्बन्धिनः॥

उत्साहजननैरस्पष्टैः गुणैरौपम्यसंश्रयैः। प्रसिद्धैरुपगूढं च ज्ञेयं प्रोत्साहनं बुधैः॥

यथा रत्नावल्यां, चतुर्थेऽङ्के, विजयवर्मा प्राग्वृत्तयुद्धवर्णनायां प्राह — देव, कृतनिश्चयश्चासौ।

योद्धुं निर्गत्य विन्ध्यादभवदभिमुखस्तत्क्षणं दिग्विभागान्
विन्ध्येनेवापरेण द्विरदपतिघटापीडबन्धेन रुन्धन्।
वेगाद्बाणान्विमुञ्चन्समदगजघटोत्पिष्टपत्तिर्निपत्य
प्रत्यैच्छद्वाञ्छितासिद्विगुणितरभसस्तं रुमण्वान् क्षणेन॥

दृष्टे श्रुतेऽनुभूते वा वस्तुनो रामणीयके। अभिलाषो भवेद्यस्तु सा स्पृहेति प्रकीर्तिता॥

यथोत्तररामचरिते, जनकः —

कुवलयदलस्निग्धश्यामश्शिखण्डकमण्डनो वटुपरिषदं पुण्यश्रीकः श्रियैव सभाजनम्।
पुनरिव शिशुर्भूत्वा वत्सस्य मे रघुनन्दनो झटिति कुरुते दृष्टःकोऽयं दृशोरमृताञ्जनम्॥

अकार्यं सहसा कृत्वा कृत्वाकार्यमथापि वा। सन्तापो मनसो यस्तु पश्चात्तापस्स उच्यते॥

यथा रत्नावल्यां, तृतीयेऽङ्के, वासवदत्ता — कंचनमाळे, तं तहा चळणपडिदमय्यउत्तमवधीरिअ आअच्छंतीए मए अदिणिट्ठुरं एव्व मए किद इति। (हञ्जे काञ्चनमाले, तं तथा चरणपतितं आर्यपुत्र अवधीर्यागच्छन्त्या अतिनिष्ठुरमेव मया कृतम्। इति।)

प्रश्रयेणार्थसंयुक्तं यत्परस्यानुवर्तनम्। स्नेहाद्दाक्षिण्ययोगाद्वा सानुवृत्तिरतु संज्ञिता॥

यथा रत्नावल्यां तृतीयेऽङ्के, राजा — वयस्य, कथ दर्शनमपि भविष्यति प्रियायाः।

विदूषकः — भो कीस ण भविस्सदि जस्स दे उवहसितविहप्पदिबुद्धिविहवो अअ अमच्चो। (भोः कुतः न भविष्यति यस्य त उपहसितबृहस्पतिबुद्धिविभवोऽयममात्यः।)

राजा — न खलु किञ्चिन्न संभाव्यत इति।

साध्यते योऽर्थसम्बन्धो महद्भिरसमवायता। परस्परानुकूलेन सा युक्तिः परिकीर्तिता॥

यथा मालतीमाधवे, कामन्दकी — तदिदानीं विदर्भराजमन्त्रिणा सता देवरातेन माधवं पुत्रमान्वीक्षकीश्रवणाय कुण्डनपुरादिमां पद्मावतीं प्रतिप्रेषयता सुविहितम्।

अपत्यसम्बन्धविधिप्रतिज्ञा प्रियस्य नीता सुहृदः स्मृतिं च।
अलोकसामान्यगुणस्तनूजः प्ररोचनार्थं प्रकटीकृतश्च॥

अन्यच्च, मकरन्दोद्यानवृत्तान्तेन भगवतो विधेरप्यनुकूलतामवगच्छामि बकुलावलीचित्रफलक संविधानव्यतिकरश्च कमप्यद्भुतं प्रमोदमुल्लासयतीति।

अनेकयुक्तिमद्वाक्यमनेकार्थप्रसाधकम्। अनेकवाक्यसंयुक्तं ज्ञेयं निर्भासनं तु तत्॥

यथा मालतीमाधवे, मकरन्दः — वयस्य माधव,

अन्योन्यसम्भिन्नदृशां सखीनां तस्या अपि प्रागनुरागचिह्नम्।
कस्यापि कोऽपीति निवेदितं च धात्रेयिकायाश्चतुरं वचश्च॥

कलहंसकः — उपसृत्य, इदं च। चित्रफलकं दर्शयति।

प्रतिक्रियासमर्थस्य पात्रौचित्यवशेन यः। अपकारेऽप्युपशमः सा क्षमेति प्रकीर्तिता॥

यथोत्तररामचरिते, लवः — आत्मगतं, ईदृशो मां प्रत्यमीषामकारणस्नेहः। मया पुनरेभ्य एवाभिद्रुग्धमज्ञेन। यदायुधपरिग्रहो विहितः। (प्रकाशं), मृष्यन्तामिदानीं लवस्य बालिशतां तातपादाः। रामः — किमपराद्धं वत्सेन?

चन्द्रकेतुः — अश्वानुयात्रिकेभ्यस्तातप्रतापाविष्करणमुपश्रुत्य वीरायितमनेन।

रामः — नन्वयमलङ्कारः क्षत्रस्येति।

गुणानुवादः स ज्ञेयो यत्र भेदोपचारतः। गौणीं वृत्तिमुपाश्रित्य वस्तुनो रूपमुच्यते॥

यथा शाकुन्तले, राजा —

अनाघ्रातं पुष्पं किसलयमलूनं कररुहै रनाविद्धं रत्नं मधुनवमनास्वादितरसम्।
अखण्डं पुण्यानां फलमिव च तद्रूपमनघं न जाने भोक्तारं कमिह समुपस्थास्यति विधिः॥

आत्मभावमुपन्यस्य परमादृश्ययुक्तिभिः। तीव्रार्थभाषणं यत्स्यादाक्रन्दस्तु कीर्तितः॥

यथा मालतीमाधवे, (प्रविश्य), संभ्रान्ता बुद्धरक्षिता — परित्ताअह परित्ताअह। एसा णो पिअसही अमच्चणंदणस्स भइणी मदअन्तिआ एदिणा दुट्ठसद्दूलेण हतविद्दाविअपरिअणा अभिभविअदि। [एषा नः प्रियसख्यमात्यनन्दनस्य भगिनी मदयन्तिका एतेन दुष्टशार्दूलेन हतविद्रावितपरिजना अभिभूयते।]

अदिव्यं दिव्यमपि वा कृत्वा रूपविपर्ययम्। अविद्वान्वञ्च्यते यत्र कपटं तदुदाहृतम्॥

यथा मालतीमाधवे, कामन्दकी — वत्स मकरन्द, अनेनैव मालतीनैपथ्येनापवारितः प्रवर्तस्व परिणयायात्मानं नन्दनेनेति ।

यद्दोषैरन्यनामोक्तिः प्रसिद्धार्थप्रयोजनम् । अन्यत्रार्थेन सम्बद्धं ज्ञेयं तत्परिवादनम् ॥

यथा रत्नावल्यां, तृतीयेऽङ्के, वासवदत्ता चरणपतित राजानमुज्झित्वा निर्गता । विदूषकश्च राजानं भाषते — ण किदो कहं पसादो जं अज्जवि अक्खेदसरीरा चिट्ठम्ह । (न कृतः कथं प्रसादो यदद्यापि अक्षतशरीरास्तिष्ठाम' ।)

ततो ज्ञातायां राजा परिवदन्नाह — त्वत्कृतोऽयमनर्थोऽस्माकमापतित इति ।

प्राप्तानां यथा दोषाणां क्रियते शमनं पुनः । ज्ञेया साभ्युपपत्तिस्तु लक्षणं नाटकाश्रयम् ॥

यथा रत्नावल्यां, द्वितीयेऽङ्के, वासवदत्ता — कचणमाले अअ अय्यउत्तो । इअ उण सारिआ । अज्जउत्त किं पदम् । (काञ्चनमाले, अयमार्यपुत्रः । इयं पुनः सारिका । आर्यपुत्र, किमेतत् ?)

राजा – अपवार्य, वयस्य, वयस्य, किं ब्रवीमि ? त्वमेवास्या उत्तर प्रयच्छ ।

विदूषकः — होदि, अप्पा किल दुक्कं आलिहदुंति मम वअणं सुणिअ पिअवअस्सएण एदं विण्णाण दसिदम् । (भवति, आत्मा किल दुःख लिखतीति मम वचनं श्रुत्वा प्रियवयस्येनेदं विज्ञान दर्शितम् ।)

राजा — देवि, यथाह वसन्तकः ।

वासवदत्ता — अज्जउत्त, पसापि जा अवरा तुह समीपे आलिहिदा ता किं वसंदअस्स विण्णाणं । (आर्यपुत्र, पषापि याऽपरा तव समीपे आलिखिता, तत्किं वसन्तकस्य विज्ञानम् ?)

राजा — सवैलक्षस्मित, देवि, अलमन्यथा सम्भावितेन । इयं हि मया कापि कन्यका स्वचेतसैव परिकल्प्यालिखिता । न तु दृष्टपूर्वेति ।

यत्र सङ्कीर्तयन्दोषं गुणमर्थेन योजयेत् । . कार्यं तदिह कीर्तितम् ॥

यथा रत्नावल्यां, प्रथमेऽङ्के, यौगन्धरायण' —

प्रारम्भेऽस्मिन् स्वामिनो वृद्धिहेतौ दैवेनेत्थ दत्तहस्तावलम्बे ।
सिद्धेर्भ्रान्तिर्नास्ति सत्यं तथापि स्वेच्छाचारी भीत एवास्मि भर्तुः ॥

कार्येषु विपरीतेषु यदि कश्चित्प्रवर्तते । निवार्यते च कार्यज्ञै प्रतिषेधस्स कीर्तितः ॥

यथा महावीरचरिते, दशरथ' –

विरम नरपते कथं द्विजेऽस्मिन्नविरतवितीर्णगोसहस्रः ।
तव पलितनिरन्तरः पृषत्कं स्पृशति पुराणधनुर्धरस्य बाहुः ॥

प्रयुक्तार्थविधानाय मोहाद्यत्र प्रवर्तते । निवर्तते वृथाक्लेशस्स विज्ञेयो मृषोद्यमः ॥

यथा वीरचरिते –

तपो वा शस्त्रं वा व्यपदिशति यः कश्चिदिह वो सदर्पादुद्दामं द्विषमसहमानस्स्खलयतु । अरामां निस्सीरध्वजदशरथीकृत्य वसुधामतृप्तस्तत्कुल्यामपि परशुरामश्शमयति ॥

काकाश्लेषेण वा यत्र पदं द्व्यर्थं प्रयुज्यते । प्रधानमतिसन्धातुं सा छलोक्तिःप्रकीर्तिता ॥

यथा रत्नावल्यां, द्वितीयेऽङ्के, विदूषकः — देवि, सच्चं सवामि बह्मसुत्तेण जइ कदावि अह्मेहिं ईदिसी दिट्ठपुव्वा । [देवि, सत्यं शपे ब्रह्मसूत्रेण यदि कदाप्यस्माभिरीदृशी दृष्टपूर्वा ।

वासवदत्ता – अइ उज्जुए, वसंदओ खु एसो । ण आणासि तुमं एदस्स वक्कभणिदाइं अज्ज मम एदं चित्तं पेक्खिअ सीसवेअणा समुप्पण्णा । ता गमिस्सं अहं इति । [अयि ऋजुके, वसन्तकः खल्वेषः । न जानासि त्वं एतस्य वक्रभणितानि । अद्य मम एतच्चित्रं प्रेक्ष्य शीर्षवेदना समुत्पन्ना । तद्गमिष्येऽहमिति ।

यथा च मालतीमाधवे, प्रभवति निजस्य कन्यकाजनस्य महाराज इति ।

वाक्येऽभिधीयमानोऽर्थो येनान्यत्वं प्रपद्यते । भिन्नकण्ठध्वनिर्धीरैस्स काकुरिति कथ्यते ॥

यथा च वेणीसंहारे, भीमः – सहदेवमुद्दिश्य, सन्धेयास्ते भ्रातरो युष्माकम् । यथा चात्रैव

लाक्षागृहानलविषान्नसभाप्रवेशैः प्राणेषु वित्तनिचयेषु च नः प्रहृत्य ।
आकृष्टपाण्डववधूपरिधानकेशाः स्वस्था भवन्ति मयि जीवति धार्तराष्ट्राः ॥

असाधुकारिणं किञ्चित्पश्यतस्साधु मानिनः । सोत्प्रासं वचनं यत्स्यात्तमुन्माथं प्रचक्षते ॥

यथा रत्नावल्यां, तृतीयेऽङ्के, काञ्चनमाला – साहु रे वसन्तअ साहु । अदिसइदो तुए अमच्च जोअधराअणोवि इमाए संधिविग्गहचिन्ताए । [साधु रे वसन्तक साधु । अतिशयितस्त्वया अमात्ययौगन्धरायणोऽप्यनया सन्धिविग्रहचिन्तया ।] इति ।

यद्ग्राम्यं भवेद्वाक्यं गुरूणामधिकेष्वपि । तथावसरमासाद्य परिहासस्स कथ्यते ॥

यथोत्तररामचरिते, रामः — अस्ति चेदानीमश्वमेधसहचारिणी हिरण्मयी सीताप्रतिकृतिः । तत्रापि तावद्बाष्पदग्धं चक्षुर्विनोदयामि ।

सीता — धण्णा खु सा जा एव्वं अय्यउत्तेण बहुमण्णीअदि । जा एव्वं अय्यउत्तं विणोदअन्ती आसाबंधण खु जादा जीवलोअस्स । (धन्या खलु सा यैवमार्यपुत्रेण बहुमन्यते । यैवमार्यपुत्रं विनोदयन्ती आशाबन्धनं खलु जाता जीवलोकस्य ।) इति ।

तमसा — (सस्मितस्नेहास्रं परिष्वज्य) अयि वत्से, एवमात्मा संस्तूयते ।

सीता — (सलज्जं), परिहसिदम्हि भअवदीए। (परिहसितास्मि भगवत्या।)

सगुणोत्कर्षतो वापि कर्मणो वापदानतः। आत्मश्लाघापरं वाक्यं विकत्थनमिहोच्यते॥

यथा च वेणीसंहारे, अर्जुनः — तात, अम्ब,

सकलरिपुजयाशा यत्र बद्धा सुतैस्ते तृणमिव परिभूतो यस्य गर्वेण लोकः।
रणशिरसि निहन्ता तस्य राधासुतस्य प्रणमति पितरौ वां मध्यमः पाण्डवोऽयम्॥

भीमः —

चूर्णिताशेषकौरव्यः क्षीबो दुःशासनासृजा। भंक्ता सुयोधनस्योर्वोर्भीमोऽयं शिरसाञ्चति॥

यदृच्छया भवेद्योगो यत्राभीष्टेन केनचित्। अचिन्तितरसं धीमद्भिर्यदृच्छायोग उच्यते॥

यथा मालतीमाधवे, मालती — णाह तुह्मे उण कहं। [नाथ, यूयं पुनः कथम्!]

माधवः — सलज्जं,

त्वत्पाणिपङ्कजपरिग्रहधन्यजन्मा भूयासमित्यभिनिवेशकदर्थ्यमानः।
भ्राम्यन्नृमांसपणनाय परेतभूमावाकर्ण्य भीरु रुदितानि तवागतोऽस्मि॥

प्रत्यक्षमिति यत्रैकः परोक्षमिति चापरः। मन्यतेऽभिमतं वस्तु तद्वैषम्यमिति स्मृतम्॥

यथोत्तररामचरिते, वासन्ती — कथमद्यापि नोच्छ्वसिति रामभद्रः। हा प्रियसखि क्वासि, संभावयात्मनो जीवितेश्वरम्। विपत्तिदग्धामपि पुनःपुनर्मन्दभाग्यां दहसि।

सीता — भपसर्तुमिच्छामि। एष पुनश्चिरप्रणयसंभारसौम्यशीतलेन आर्यपुत्रस्पर्शेन दीर्घदारुणमपि झटिति सन्तापं लघयता वज्रलेपोपनद्ध इव पर्यस्तव्यापार आसञ्जितो मे हस्तः।

रामः — सखि, कुतः प्रलापः।

गृहीतो यःपूर्वं परिणयविधौ कङ्कणधरस्सुधासूतेः पादैरमृतशिशिरैर्यः परिचितः।
स एवायं तस्यास्तदितरकरौपम्यसुभगो मया लब्धःपाणिर्ललितलवलीकन्दलनिभः॥

गृह्णाति॥ सीता — हन्त, आर्यपुत्रस्पर्शमोहितायाः प्रमादः खलु संवृत्तः।

रामः — सखि वासन्ति, आनन्दनिमीलितः प्रियास्पर्शसाध्वसेन परवानस्मि। तस्त्वमेतं धारय। वासन्ती — कष्टमुन्माद एव। सीता ससम्भ्रमं हस्तमाक्षिप्यापसर्पति।

रामः — हा धिक्प्रमादः।

करपल्लवस्स तस्यास्सहसैव जडात्मनः परिभ्रष्टः।
परिकम्पिनः प्रकम्पी करिकरं इव पीवरस्स्विद्यन्॥

तमसा — सस्नेहकौतुकस्मितं निर्वर्ण्य,

प्रस्वेदरोमाञ्चितकम्पिताङ्गी जाता प्रियस्पर्शसुखेन वत्सा।
मरुन्नवाम्भःपरिधूतसिक्ता कदम्बयष्टिस्स्फुटकोरकेव ॥

सीता — अवशं गमनेनात्मना लज्जापितास्मि भगवत्या तमसया। किं किलैतन्मंस्यते एष परित्यागः एष चासङ्ग इति।

रामः — सर्वतोऽवलोक्य, हा कथं नास्त्येव। नन्वकरुणे वैदेहि। न मामेवं परित्यज्य गन्तुमर्हसि। वासन्ती– देव प्रसीद। स्वेनैव लोकोत्तरेण संस्तम्भयाऽतिभूमिं गतमात्मानम्। कुतोऽत्र मे प्रियसखी।

रामः – व्यक्तं नास्त्येव। कथमन्यथा वासन्त्यपि न पश्येत्। एष खलु स्वप्न एव स्यात्। कुतो रामस्य निद्रेति।

न साधयामि यद्येतदेवं कर्त्रास्म्यहं तदा। इत्युद्धवादेर्वाक्यस्य तत्प्रतिज्ञानमुच्यते ॥

यथा मकुटताडिते, भीमः –

ध्वस्ताः क्षुब्धा धार्तराष्ट्रास्समस्ताः पीतं रक्तं स्वादु दुश्शासनस्य।
पूर्णा कृष्णाकेशबन्धप्रतिज्ञा तिष्ठत्येकः कौरवस्योरुभङ्गः ॥

ऊरू निपीड्य गदया यदि नास्य तस्य पादेन रत्नमकुटं शकलीकरोमि।
देहं निपीतनिजधूमविजृम्भमाणज्वालाजटालवपुषि ज्वलने जुहोमि ॥

एवं मयात्र कर्तव्यमिति यन्निश्चितं वचः। स्नेहाद्दाक्षिण्यतो वापि प्रवृत्तिरसा निगद्यते ॥

यथा मालतीमाधवे, कामन्दकी –

मा वां सपत्नेष्वपि नाम तद्भूत्पापं यदस्यां त्वयि वा विशङ्क्यम्।
तत्सर्वथा सङ्गमनाय यत्नः प्राणव्ययेनापि मया विधेयः ॥

यदा शास्त्यर्थसम्पन्नं मनोरथसमुद्भवम्। अप्रार्थनीयमन्यद्वा विदुस्तामाशिषं बुधाः ॥

यथा मालतीमाधवे, कामन्दकी —

विधाता भद्रं नो वितरतु मनोज्ञाय विधये विधेयासुर्देवाः परमरमणीयां परिणतिम्।
कृतार्था भूयासं प्रियसुहृदपत्योपनयतः प्रयत्नः कृत्स्नोऽयं फलतु शिवतातिश्च भवतु ॥

प्रस्तावेनैव शेषोऽर्थः कृत्स्नो यत्र प्रतीयते। वचनेन विनानुक्तसिद्धिस्सा परिकीर्तिता ॥

यथा शाकुन्तले, राजा — भगवान् काश्यपश्शाश्वते ब्रह्मणि स्थित इति प्रकाशः। इयं च वस्सखी तदात्मजेति कथमेतत्?

अनसूया — शृणोत्वार्यः । अस्ति कौशिक इति कृतगोत्रनामधेयो महाप्रभावो राजर्षिः ।

राजा — अस्ति श्रूयते । ततः,

अनसूया — तं नौ सख्याः प्रभवमवगच्छ । तेनोज्झितायाश्शरीरसंवर्धनादिभिस्तात काश्यपोऽस्य पिता ।

राजा — उज्झितशब्देन जनितं मे कौतूहलम् । आमूलाच्छ्रोतुमिच्छामि ।

अनसूया — शृणोत्वार्यः । पुरा किल तस्य राजर्षेः उग्रे तपसि वर्तमानस्य किमपि जातशङ्कैर्देवैः मेनकानामाप्सरा नियमविघ्नकारिणी प्रेरिता ।

राजा — अस्त्येतदन्यसमाधिभीरुत्वं देवानाम् । ततस्ततः ।

अनसूया — ततो वसन्तोदारसमये तस्या उन्मादयितृकं रूपं प्रेक्ष्य, (इत्यर्धोक्ते लज्जया विरमति ।)

राजा — परस्तादवगम्यत एव । सर्वथा अप्सरस्सम्भवैवैषा । इति ।

आदौ यत्क्रोधजननमन्ते हर्षविवर्धनम् । तत्प्रियं वचन ज्ञेयमाशीर्वादसमन्वितम् ॥

यथा रत्नावल्यां, चतुर्थेऽङ्के, विदूषकः — अपवार्येन्द्रजालिकमाह — आः दास्याः पुत्र, इन्द्रजालिक, किमेतैर्देवैरप्सरोभिश्च दर्शितैः । यदि ते अनेन परितुष्टेन कार्यं तद्दर्शय सागरिकाम् । तत एतद्वचनानन्तरमग्निसम्भ्रमादुत्थितः राजा — न वसुभूत्यादय आवृता वह्निना ।

एतानि काव्यस्य विभूषणानि प्रायश्चतुष्षष्टिरुदाहृतानि ।
प्रबन्धशोभाकरणाय तज्ज्ञैस्सम्यक्प्रयोज्यानि यथा रसानि ॥

उदाहृता नाटकनाटिकानामियं चतुष्षष्टिचतुष्टयी या ।
रसाविरोधेन निबन्धनीया कथासु काव्येषु च सा महद्भिः ॥

भक्तीद्वादशताः पृथक्पृथगिमास्सञ्चिन्त्य शब्दार्थयो-
रसाहित्यस्य च शब्दशासनविदा कार्यः प्रबन्धे श्रमः ।
कीर्तिर्यावदनश्वरी हि विदुषा रोदोगृहं गाहते
ब्राह्मं लोकललामधाम तदमी तावत्किलाध्यासते ॥

—ः इति श्री महाराजाधिराज श्री भोजदेवविरचिते शृङ्गारप्रकाशे प्रबन्धाङ्गचतुष्षष्टिचतुष्टयप्रकाशो नाम द्वादशः प्रकाशः ः—



॥ श्रीः ॥

# त्रयोदशः रतिप्रकाशनप्रकाशः



तत्त्वज्ञानान्निःश्रेयसाधिगमो मोक्षः । तमीहमानस्य गार्हस्थ्येऽपि तदधिगमयोग्यताभिमानो मोक्षशृङ्गारः । धर्मशृङ्गारे भारतीवृत्तिः, वैदर्भी रीतिः, पौरस्त्या प्रवृत्तिः, पाञ्चाली रीतिः, स्वकीया नायिका धीरोदात्तश्च नायक इति । अर्थशृङ्गारे गौडीया रीतिः, औढ्रमागधी प्रवृत्तिः, आरभटी वृत्तिः स्वर्वा नायिका धीरोद्धतश्च नायक इति । कामशृङ्गारे आरभटी रीतिर्दाक्षिणात्या प्रवृत्तिः, कैशिकी वृत्तिस्सर्वा नायिका धीरललितश्च नायक इति । मोक्षशृङ्गारे लाटीया रीतिः आवन्त्या प्रवृत्तिस्सात्वती वृत्तिस्स्वकीया नायिका, धीरशान्तश्च नायक इति । एतेषामपि नायकविशेषाणां चतुर्वर्णानामपि च नायिकाविशेषाणां वक्ष्यमाणोत्तमादिस्वभेदोपयोगिनां यथायोगमुत्पद्यमानविभावानुभावव्यभिचारसंयोगैरभिव्यज्यते । रतेरभीष्टजनोपवनवरमन्दिरादय आलम्बनविभावाः। ऋतुमाल्यविलेपनादयोऽनुभावाः । व्यभिचारिणस्तु सम्भोगे हर्षधृतिस्मृतिमतिस्वेदरोमाञ्चगद्गदहासादयः । विप्रलम्भे ग्लानिचिन्तौत्सुक्यावेगविस्मयदैन्यासूयादयो भवन्ति । प्रीतेरभीष्टरूपरसगन्धस्पर्शशब्दपुत्रमित्रादय आलम्बनविभावाः । तदुपभोगसमागमसुखस्पर्शादयः उद्दीपनविभावाः। सर्वेन्द्रियाणां रोमाञ्चस्वेदस्वरभेदादयो व्यभिचारिणः । हर्षस्य मनोरथलाभेष्टजनसमागमदेवगुरुभर्तृराजप्रसादादय आलम्बनविभावाः । भोजनाच्छादनादय उद्दीपनविभावाः । नयनवदनप्रसादप्रियाभाषणालिङ्गनललितताडनादयोऽनुभावाः । हासधृतिस्मृतिमतिगर्वौत्सुक्यावेगचपलतोत्साहजडतादयो व्यभिचारिणः । रोमाञ्चस्य स्पर्शभयशीतहर्षक्रोधरोगादय आलम्बनविभावाः । प्रियालिङ्गनादर्शनयाभिषेकगुणकीर्तनोपकारस्मरणादय उद्दीपनविभावाः । प्रियागात्रस्पर्शनविलोकनादयोऽनुभावाः । हासत्रासविस्मयवितर्कावेगशङ्कावहित्थव्रीडावस्तम्भस्वेदवेपथुस्वरभेदादयो व्यभिचारिणः । धृते ऐश्वर्यकुलरूपयौवनविद्याबलादयः आलम्बनविभावाः । श्रुतविज्ञानशौचाचारदेवगुरुभक्त्यादय उद्दीपनविभावाः । प्राप्तविषयोपभोगाप्राप्तानुशोचादयो अनुभावाः । तृप्तिहर्षादयो व्यभिचारिणः । स्वेदस्य ऐश्वर्यकुलरूपयौवनधनविद्याबलादयः आलम्बनाविभावाः । भर्तृसम्भावनोत्तमादरानुरूपनारीप्रार्थने गुणप्रशंसादय उद्दीपनविभावाः । प्रश्नोत्तरादानभाषणोपहसनवानपारुष्यधर्षणाधिक्षेपव्यतिक्रमादयोऽनुभावाः । हासोत्साहक्रोधचपलतामर्षणादयः व्यभिचारिभावाः । हासस्य प्रतिज्ञाविसम्प्रलापसौरत्यधाष्टर्यकुहकपरचेष्टानुकरणपौरोभाग्यादय आलम्बनविभावाः । नायकसान्निध्यादय उद्दीपनविभावाः । भजनदर्शनसंदर्शनास्यरागपार्श्वग्रहणादयोऽनुभावाः । स्मितहसितविहसितोपहसितातिहसितापहसिताद्यनु-

भावविशेषाः । प्रेमाश्रुचपलतादयो व्यभिचारिणः । मदस्य मद्योपभोगादय आलम्बनविभावाः । मनोरथावाप्तीष्टदर्शनगीतवाद्यनृत्तवृत्तवर्णनादय उद्दीपनविभावाः । रुषाभिभाषणव्याकुलवचनमधुरमुखरागहृष्टतनुत्रासरहितसुकुमाराविष्टलालितस्खलितनयनघूर्णनादयोऽनुभावाः । अन्यग्लान्यसूयाश्रममोहहर्षधृतिस्मृतिचपलताश्रुगर्वौत्सुक्यनिद्रामर्षस्तम्भवेपथुरोमाञ्चपुलकादयः व्यभिचारिणः। मोहस्य अवलोकनावस्थावधारणादय आलम्बनविभावाः । संस्कृतप्रदेशदर्शनेष्टगुणाकर्णनर्तुमाल्यानुलेपनोपनतिप्रभृतय उद्दीपनविभावाः । गुणग्रहणकाकलीगीनादयोऽनुभावाः । निर्वेदग्लानिशङ्कावेगश्रमदैन्यचिन्तामतिस्मृतिचपलताव्रीडावहित्थजडताविषादोन्मादादयो व्यभिचारिणः । चिन्तायाः परद्रव्यापहारदारिद्र्येष्टजनवियोगादय आलम्बनविभावाः । प्रारब्धासिद्धिसमीहितानवाप्तिदेशभ्रमणादयः उद्दीपनविभावाः । सन्तानध्यानाधोमुख्यतनुभावादयोऽनुभावाः । शोकभयविस्मयविषादनिद्रानिर्वेदग्लानिशङ्काश्रमदैन्यमोहस्मृतिवैवर्ण्यादयो व्यभिचारिणः । स्मृतेस्स्वास्थ्यापरराप्रबोधसमानदर्शनोदाहरणदैवादय आलम्बनविभावाः । पूर्वानुभूतार्थविषयज्ञानादय उद्दीपनविभावाः । शिरःकम्पनभ्रूसमुन्नमनशून्यावलोकनाङ्गुलिविहङ्गादयोऽनुभावाः । हासशोकक्रोधोत्साहभयजुगुप्साविषादौत्सुक्यासूयोग्रतागर्वत्रासरतिस्तम्भस्वेदरोमाञ्चवेपथुवैवर्ण्याश्रुस्वरभेदादयो व्यभिचारिणः । मतेः शास्त्रोपदेशमन्त्राद्यैरर्थनिर्धारणादय आलम्बनविभावाः । विद्यावृद्धसंयोगाध्ययनाध्यापनतद्विद्याविद्सम्भाषणादय उद्दीपनविभावाः । तत्त्वाभिनिवेशदेशकालानुसरणादयोऽनुभावाः । ग्रहणशक्तिविकासादयस्सर्वे व्यभिचारिणः । वितर्कस्य सन्देहविमर्शादयः आलम्बनविभावाः । समानानेकधर्मोपपत्तिप्रतिपत्तिविशेषादय उद्दीपनविभावाः। भ्रूक्षेपमन्त्रसङ्क्रुद्धादयोऽनुभावाः । निर्वेदग्लानिशङ्काश्रमविषादविस्मयदैन्यचिन्तामोहस्मृतिमतिव्रीडावेगजडतास्तम्भस्वेदादयो व्यभिचारिणः । मोहस्य विस्मयव्यामोहविषादाध्यवसायाविषयसाहसादय आलम्बनविभावाः । विनयबलपराक्रमदेशकालशक्तिसम्पत्प्रतापादय उद्दीपनविभावाः । गाम्भीर्यादयो अनुभावाः । क्रोधासूयामर्षचिन्तास्मृतिमतिगर्वावेगरोमाञ्चस्वेदोग्रतौत्सुक्यादयो व्यभिचारिणः । क्रोधस्य आक्षेपानृतवचनोपघातवाक्पारुष्यद्रोहमात्सर्यादय आलम्बनविभावाः । ताडनपीडन पाटनभेदच्छेदप्रहरणादय उद्दीपनविभावाः । नयनरागभ्रुकुटिदन्तोष्ठपीडनगण्डस्फुरणहस्तनिष्पेषादयोऽनुभावाः । संमोहोत्साहामर्षवेगचपलतागद्गदादयो व्यभिचारिणः । अमर्षस्य विद्यैश्वर्यधनबलाधिकाराविक्षेपावसानादय आलम्बनविभावाः । स्वावस्थालोकनमधुरालापश्रवणकामिनीप्रोत्साहनादय उद्दीपनविभावाः । शिरःकम्पाधोमुख्यध्यानाध्यवसायोपायसहसान्वेषणादयोऽनुभावाः । क्रोधासूयातापोग्रतावेगवैवर्ण्यास्रादयो व्यभिचारिणः । असूयायाः परैश्वर्यसौभाग्यमेधाविद्यादय आलम्बनविभावाः । दोषख्यापनगुणोपघातचक्षुःप्रणिधानाधोमुख्यभ्रुकुटिक्रियादय उद्दीपनविभावाः । अवज्ञापराधद्वेषवेषच्छन्नादयोऽनुभावाः । अवज्ञोपहसितस्वरभेदादयो व्यभिचारिणः। ईर्ष्यायाः समानकुलशीलरूपविद्यावयोविभवबलपराक्रमेषु सपत्नीषु च क्रमेण प्रतिप्रासादस्थान-

दानमानादय आलम्बनविभावाः । अमर्षादवलोकनादय उद्दीपनविभावाः । मन्युव्यलीकविप्रियप्रणयकलहोपालम्भादयोऽनुभावाः । क्रोधोत्साहविस्मयवितर्कदैन्यजुगुप्सामोहनिर्वेदासूयामर्षवेपथुवैवर्ण्याश्रुस्वेदगद्गदादयो व्यभिचारिणः। चौर्याभिद्रवस्य नृपापराधसम्बन्धप्रलापादय आलम्बनविभावाः । द्रव्यापहारभाराभिनिवेशादय उद्दीपनविभावाः । ताडनपीडनवधबन्धभर्त्सनास्वरागादयोऽनुभावाः । क्रोधोत्साहविस्मयजुगुप्सासूयास्मृतिमतिमोहचपलताहर्षामर्षमदावेगवैवर्ण्याश्रुगद्गदादयो व्यभिचारिणः । जुगुप्साया सुहृद्यप्रियकथनश्रवणदर्शनपरिकीर्तनादय आलम्बनविभावाः । तत्स्वरूपविकारक्रियाविपरिणामादय उद्दीपनविभावाः । सर्वाङ्गसंहाराक्षिसङ्कोचमुखविकूणनहृल्लेखनिष्ठीवनोद्वेजनादयोऽनुभावाः । विस्मयनिर्वेदभयग्लानिशङ्कामोहस्मृतिजडतावेगविषादापस्मारमदवेपथुस्वरभेदवैवर्ण्याश्रुमूर्च्छाप्रलापादयो व्यभिचारिणः । विस्मयस्यासंभाव्यमानकौतुककर्मचित्रशिल्पविद्यातिशयादय आलम्बनविभावाः । दिव्यजनसंभाषणोपवनदेवकुलविहारदर्शनादय उद्दीपनविभावाः । नयनविस्तारानिमेषप्रेक्षणभ्रूविक्षेपसाधुवादप्रबन्धहाहाकारादयोऽनुभावाः । जडतामोहमूर्च्छादयो व्यभिचारिणः । निद्रायाः दौर्बल्यमुदश्रमक्लमालस्यचिन्तास्याहारस्वभावाभ्यासादय आलम्बनविभावाः । मनस्सन्तोषनिश्चिन्ततताविविक्तस्थानलाभानुकूलादय उद्दीपनविभावाः । शिरोवेदनगौरवशरीरलोलननेत्रघूर्णनजृम्भणगात्रमर्दननिःश्वसितोच्छ्वसितस्रस्तगात्रताक्षिनिमीलनसर्वाङ्गक्रियादयोऽनुभावाः । मोहजडतापस्मारस्तम्भस्वेदस्वरभेदवेपथुवैवर्ण्यास्रादयो व्यभिचारिणः । स्वप्नस्य निद्रादय आलम्बनविभावाः। निद्रादिकारणान्येवोद्दीपनविभावाः। अक्षिमीलनस्वप्नायितादयोऽनुभावाः । प्रायेण तु सर्वे रत्यादयो व्यभिचारिणः । प्रबोधस्य निद्राच्छेदाहारपरिणामस्वप्नान्ततीव्रशब्दस्पर्शादय आलम्बनविभावाः । प्राग्दृष्टपदार्थावलोकनारब्धस्मरणमित्रादिकार्यगौरवाचारपरिपालनादय उद्दीपनविभावाः । जृम्भणोन्मेषनिमेषाक्षिमर्दनशयनमोक्षाङ्गवलनादयोऽनुभावाः । उत्साहचिन्तास्मृतिमतिस्वरभेदास्रादयो व्यभिचारिणः । चपलतायाः रागद्वेषमात्सर्येर्ष्यामर्षप्रातिकूल्यादय आलम्बनविभावाः । पदार्थमानोत्कर्षप्रोत्साहनापकारस्मरणादय उद्दीपनविभावाः । वाक्पारुष्यदण्डपारुष्यार्थदूषणादयोऽनुभावाः । हासक्रोधोत्साहविस्मयजुगुप्साहर्षावेगविषादोग्रतात्रासरोमाञ्चवेपथुस्वेदस्वरभेदादयो व्यभिचारिणः । आलस्यस्य गर्भमदमान्द्यनैराश्यश्रमक्लमादय आलम्बनविभावाः । गात्रतादयोऽनुभावाः । निर्वेदश्रमविषादनिद्रादैन्यमोहजडताव्याधिस्वेदवेपथुस्तम्भादयः व्यभिचारिणः । आवेगस्य विद्युदुल्कानिर्घातनचन्द्रसूर्योपरागकेतुदर्शनभ्रमण प्रियाप्रियश्रवण दुस्स्वप्नदुर्निमित्तदर्शनाद्यमनाभिघातादयः आलम्बनविभावाः । उक्तविषयकीर्तनानुभवसम्प्रधारणादय उद्दीपनविभावाः । सर्वाङ्गस्रस्ततावकुण्ठनाक्षिमर्दनत्वरितगमनाङ्गपाडनप्रधावनच्छत्राश्रयणधूमाकुलविधूननत्वरितापसर्पणपश्चादवलोकनाभ्युत्थानालिङ्गनभूमिशयनपरिदेवितविलापाक्रन्दितदेवतानुस्मरणादयोऽनुभावाः । शोकभयविस्मयशङ्काश्रमचिन्तावैवर्ण्याश्रुप्रलयादयो व्यभिचारिणः । अश्रुणः शोकक्रोधहर्षधूमाञ्जन

जृम्भणभयानिमेषप्रेक्षणशीतरोगादय आलम्बनविभावाः । कार्यकरणानुबन्धप्रबन्धादय उद्दीपनविभावाः । नेत्रसंमार्जनबाष्पमोक्षत्रिविधरोदनादयोऽनुभावाः । तत्र फुल्लकपोलताङ्गनिमीलिताक्षं अपर्याप्तमुक्ताश्रमस्वस्थगात्रं संभ्रमिपातविचेष्टितविलापदुःखजं प्रस्फुरितोष्ठकपोलं सनिश्वासं सशिरःकम्पभ्रूकटाक्षादयः व्यभिचारिणः । प्रलयस्य मूर्च्छाश्रमाभिघातनिद्रामोहमदादय आलम्बनविभावाः । श्रमादिकारणान्येवोद्दीपनविभावाः । निश्चैतन्यभ्रमणपतनघूर्णनादर्शनादयोऽनुभावाः । ग्लानिजडतास्तम्भवैवर्ण्यादयो व्यभिचारिणः । जडताया इष्टानिष्टश्रवणदर्शनव्याध्यादय आलम्बनविभावाः । तद्रामणीयकोद्वेजनादय उद्दीपनविभावाः । कार्याप्रतिपत्त्यकथनाभाषणतूष्णींभावनिमेषनिरीक्षणादयोऽनुभावाः । निर्वेदग्लानिश्रमदैन्यमोहविषादनिद्रास्तम्भवैवर्ण्यादयो व्यभिचारिणः । शमस्य तत्त्वज्ञानादय आलम्बनविभावाः । योगाभ्यासादय उद्दीपनविभावाः । रोमाञ्चहर्षधृत्यादयो व्यभिचारिण इति ।

उक्तरसोऽयं विभावादिभावसञ्चारिसङ्करः । क्रमेण सर्वभावानां शृङ्गारेषु चतुर्ष्वपि ॥
व्यक्तरस तैर्विभावाद्यैः स्थायीभावो रसस्स्मृतः । सम्भोगो विप्रलम्भश्च शृङ्गारोऽपि द्विधामतः ॥
समवाये य उद्भूतश्चिरं यश्चावतिष्ठते । भावः स्थायीति स ज्ञेयो व्यभिचारी ततोऽन्यथा ॥
विभावो द्विविधैवात्रालम्बनोद्दीपनात्मकः । एकोऽनुभवसंस्कारे जनकोऽन्यस्तु स द्विधा ॥
अन्तर्बहिश्च भावोऽत्र सहैव व्यभिचारिभिः । स्मृतीच्छाद्वेषयत्नानामन्तरसन्तान इष्यते ॥
मनोवाग्बुद्धिवपुषां बहिरारम्भ एव तु । जन्मानुबन्धा .... ॥
विभावश्चानुभावश्च व्यभिचारीव पूर्यते । विभावाज्जन्म भावानामुद्दीपनविभावतः ॥
अनुबन्धोऽनुभावेभ्यो . . . स्थायिनोपद्रवे सति ॥

स्थायिनोपद्रवे सति जन्मानुबन्धातिशयानुषङ्गात्ततःपरं सानुगमान् क्रमेण भावेषु तल्लक्षणलक्ष्ययोगात्पञ्चपञ्चाशानुपवर्णयामः । शृङ्गाराविर्भावहेतवः शृङ्गारप्रभवा एव । ता रत्यादयो भावा एकोनपञ्चाशदिति यदुक्तं नाधिका न न्यूना इति तत्र मनोऽनुकूल एवात्मनस्सुखानुभवो रतिः । सा चाष्टधा— नैसर्गिकी, सांसर्गिकी, आभियोगिकी, आध्यात्मिकी, औपमानिकी, वैषयिकी, सांप्रयोगिकी, आभिमानिकी चेति । जन्मान्तरवासनानिसर्गस्थयुक्ता नैसर्गिकी । सा च जाता, अनुबन्धा, प्रवृद्धा, संवृत्ता, अनुवर्तिनी चेति पञ्चधा । तत्रालम्बनविभावादुत्पद्यमाना जाता यथा –

इयं महेन्द्रप्रभृतीनधिश्रियश्चतुर्दिगीशानवमत्य मानिनी ।
अरूपहार्यं मदनस्य निग्रहात् पिनाकपाणिं पतिमाप्तुमिच्छति ॥

(कुमारसम्भवे, ५, ५३.)

उत्पत्तेरवान्तरमुद्दीपनैरुद्दीप्यमाना सानुबन्धत्वादनुबन्धिनी यथा —

यथाश्रुतं वेदविदांवर त्वया जनोऽयमुच्चैःपदलङ्घनोत्सुकः ।
तपःकिलेदं तदवाप्तिसाधनं मनोरथानामगतिर्न विद्यते ॥ (कु. सं. ५, ६४)

सत्यनुबन्धे संस्कारस्यानवरतप्रबोधात् स्मरणेच्छाद्वेषप्रयत्नजन्ममिर्मनोवाग्बुद्धिशरीरादिभिरनुभावैस्सञ्चारिभिस्संसृज्यमाना प्राप्तप्राप्यप्रकर्षावस्था प्रवृद्धा यथा —

अलं विवादेन यथा श्रुतस्त्वया तथाविधस्तावदशेषमस्तु वः ।
ममात्र भावैकरसं मनस्स्थितं न कामवृत्तिर्वचनीयमीक्षते ॥ (कु. सं. ५, ८२)

अथ पृथगालम्बनानुभवसंस्कारोद्दीपनस्मृत्यादिजन्मानुभवसञ्चारिसंभावे तुल्यबलभावान्तरसंपर्किणी संपृक्ता यथा —

सन्तापसन्ततिमहाव्यसनाय तस्यामासक्तमेतदनपेक्षितहेतुचेतः ।
प्रायश्शुभं च विदधात्यशुभं च जन्तो स्सर्वङ्कषा भगवती भवितव्यतैव ॥
(मालतीमाधवे १. २६)

बलासामान्यानुभवान्तरेणाभिभूताभिर्संस्कारमात्रेणानुवर्तेत इत्यनुवर्तिनी यथा —

शैलात्मजापि पितुरुच्छिरसोऽभिलाषं व्यर्थं समीक्ष्य ललितं वपुरात्मनश्च ।
सख्योस्समक्षमिति चाधिकजातलज्जा शून्या जगाम भवनाभिमुखी कथंचित् ॥
(कुमारसम्भवे ३, ७५)

संसर्गे भवा सांसर्गिकी । सा च पूर्ववदेव जातादिभेदात् पञ्चधा । तत्र जाता यथा मेघसन्देशे —

भित्वा सद्यःकिसलयपुटान्देवदारुद्रुमाणां ये तत्क्षीरस्रुतिसुरभयो दक्षिणेन प्रवृत्ताः ।
आलिङ्ग्यन्ते गुणवति मया ते तुषाराद्रिवाताःपूर्वं स्पृष्टं यदि किल भवेदङ्गमेभिस्तवेति ॥

अनुबन्धिनी यथा —

द्यूते पणः प्रणयकेलिषु कण्ठपाशः क्रीडापरिश्रमहरं व्यजनं रतान्ते ।
शय्या निशीथकलहे हरिणेक्षणायाः प्राप्तं मया विधिवशादिदमुत्तरीयम् ॥

प्रवृद्धा यथा —

आयाते दयिते मरुस्थलभुवामुत्प्रेक्ष्य दुर्लङ्घयतां
गेहिन्या परितोषबाष्पकलिलामासज्य दृष्टिं मुखे ।
दत्वा पीलुशमीकरीरकवलं चेलाञ्चलेनादरा-
दुन्मृष्टं करभस्य केसरसटाभारावलग्नं रजः ॥

संपृक्ता यथा —

यस्यान्ते दिवसास्तया सह तथानीताः पुनरस्वे गृहे
यत्संबन्धकथाभिरेव नियतं दीर्घाभिरस्थीयत ।
एकस्संप्रति नाशितप्रियतमस्तामेव पापः कथं
रामः पञ्चवटीं विलोकयतु वा गच्छत्वसंभाव्य वा ॥

अनुवर्तिनी यथा किरातार्जुनीये –

प्रियेण संग्रथ्य विपक्षसन्निधावुपाहितां वक्षसि पीवरस्तने ।
स्रजं न काचिद्विजहौ जलाविलां वसन्ति हि प्रेम्णि गुणा न वस्तुनि ॥

आभियोगप्रभवा आभियोगिकी । सापि पञ्चधा । तत्र जाता यथा —

स्तिमितविलसितानामुल्लसद्भ्रूलतानामसृणमुकुलितानां प्रान्तविस्तारभाजाम् ।
प्रतिनयननिपाते किंचिदाकुञ्चितानां विविधमहमभूवं पात्रमालोकितानाम् ॥

अनुबन्धिनी यथा – (मा. मा. १. ३०.)

अलसवलितमुग्धस्निग्धनिष्पन्दमन्दैरधिकविकसदन्तर्विस्मयस्मेरतारैः ।
हृदयमशरणं मे पक्ष्मलाक्ष्याः कटाक्षै रपहृतमपविद्धं पीतमुन्मूलितं च ॥

प्रवृद्धा यथा — (मा. मा. १. ३१.)

पश्यामि तामित इतःपुरतश्च पश्चादन्तर्बहिः परित एव विवर्तमानाम् ।
उद्बुद्धमुग्धकनकाब्जनिभं वहन्तीमासक्ततिर्यगपवर्तितदृष्टिवक्त्रम् ॥

संपृक्ता यथा — (मा. मा. १. ४३.)

यान्त्या मुहुर्वलितकन्धरमाननं तदावृत्तवृन्तशतपत्रनिभं वहन्त्या ।
दिग्धोऽमृतेन च विषेण च पक्ष्मलाक्ष्या गाढं निखात इव मे हृदये कटाक्षः ॥

अनुवर्तिनी यथा — (मा. मा. १. ३२.)

यद्बालप्रणितसुहृत्प्रमोहमुग्धं सौजन्याद्विहितवती गतव्यथं माम् ।
तत्कामं प्रभवति पूर्णपात्रवृत्त्या स्वीकर्तुं मम हृदयं च जीवितं च ॥ (मा. मा. ४. १.)

आध्यात्मभवा आध्यात्मिकी । आमुष्मिक एव तामनुभवति न च क्षरादय इत्यर्थः ।
सापि पञ्चधा । तत्र जाता यथा शाकुन्तले —

कास्विदवकुण्ठनवती नातिपरिस्फुटशरीरलावण्या ।
मध्ये तपोधनानां किसलयमिव पाण्डुपत्राणाम् ॥

अनुबन्धिनी यथा —

तन्वी मेघजलार्द्रपल्लवतया धौताधरेवाश्रुभिश्शून्येवाभरणैस्वकालविरहाद्विश्रान्तपुष्पोद्गमा।
नूनं मौनमिवाश्रिता मधुलिहां शब्दैर्विना लक्ष्यते चण्डी मामवधूय पादपतितं
जातानुतापेव सा ॥

प्रवृद्धा यथा —

मन्ये मम स्मरणदारुणचित्तवृत्तौ वृत्तं रहःप्रणयमप्रतिपद्यमाने ।
खेदाद्भ्रुवोः कुटिलयोरतिलोहिताक्ष्या भग्नं शरासनमिवातिरुषा स्मरस्य ॥

संपृक्ता यथा —

इदमुपगतमेवं रूपमक्लिष्टकान्ति प्रथमपरिगृहीतं स्यान्नवेत्यव्यवस्यन् ।
भ्रमर इव विभाते कुन्दमन्तस्तुषारं न च खलु परिभोक्तुं नैव शक्नोमि हातुम् ॥

अनुवर्तिनी यथा –

कामं प्रत्यादिष्टां स्मरामि न परिग्रहं मुनेस्तनयाम् । बलवत्तु दूयमानं प्रत्याययतीव मे हृदयम् ॥

उपमानैर्युक्ता औपमानिकी । सापि पञ्चधा । तत्र जाता यथा —

श्यामा स्वङ्गं चकितहरिणीप्रेक्षणे दृष्टिपातं वक्त्रच्छायां शशिनि शिखिनां बर्हभारेषु केशान् ।
उत्पश्यामि प्रतनुषु नदीवीचिषु भ्रूविलासं हन्तैकस्मिन्क्वचिदपि न ते चण्डि सादृश्यमस्ति ॥

अनुबन्धिनी यथा –

त्वामालिख्य प्रणयकुपितां धातुरागैश्शिलाया मात्मानं ते चरणपतितं यावदिच्छामि कर्तुम् ।
अस्रैस्तावन्मुहुरुपचितैर्दृष्टिरालुप्यते मे क्रूरस्तस्मिन्नपि न सहते सङ्गमं नौ कृतान्तः ॥

प्रवृद्धा यथा –

अपि जनकसुतायास्तच्च तच्चानुरूपं स्फुटमिव शिशुयुग्मे नैपुणोन्नेयमस्ति ।
ननु पुनरिव तन्मे गोचरीभूतमक्ष्णोरभिनवशतपत्रश्रीमदास्यं प्रियायाः ॥

सपृक्ता यथा शाकुन्तले —

न नमयितुमधिज्यमस्मि शक्तो धनुरिदमाहितसायकं मृगेषु ।
सहवसतिमुपेत्य यैः प्रियायाः कृत इव मुग्धवधूविलोकितोपदेशः ॥

अनुवर्तिनी यथा —

यत्त्वन्नेत्रसमानकान्ति सलिले मग्नं तदिन्दीवरं
मेघैरन्तरितः प्रिये तव मुखच्छायानुकारी शशी ।

अनुबन्धिनी यथा –

अपरिक्षतकोमलस्य यावत्कुसुमस्येव नवस्य षट्पदेन ।
अधरस्य पिपासता मया ते सदयं सुन्दरि गृह्यते रसोऽस्य ॥

प्रवृद्धा यथा शाकुन्तले –

मुहुरंगुलिसंवृताधरोष्ठं प्रतिषेधाक्षरविक्लवाभिरामम् ।
मुखमंसविवर्तिपक्ष्मलाक्ष्याः कथमप्युन्नमितं न चुम्बितं तु ॥

संपृक्ता यथा —

शिखरिणि क्व नु नाम कियच्चिरं किमभिधानमसावकरोत्तपः ।
तरुणि येन तवाधरपाटलं दशति बिम्बफलं शुकशावकः ॥

अनुवर्तिनी यथा –

निरानन्दः कौन्दे मधुनि विधुरो बालबकुले न साले सालम्बो लवमपि लवङ्गे न रमते ।
प्रियङ्गौ नासङ्गं रचयति न चूते विचरति स्मरल्लक्ष्मीलीलाकमलमधुपानं मधुकरः ॥

गन्धे जाता यथा मालतीमाधवे –

प्रासादानामुररिवलभीजालवातायनेभ्यो प्राप्तामोदः परिणतसुरागन्धसम्पर्कहृद्यः ।
माल्यामोदोमुहुरुपचितस्फीतकर्पूरवासो वायुर्यूनामभिमतवधूसन्निधानं व्यनक्ति ॥

अनुबन्धिनी यथा रघुवंशे –

तदाननं मृत्सुरभि क्षितीश्वरो रहस्युपाघ्राय न तृप्तिमाययौ ।
करीव सिक्तं पृषतैः पयोमुचां शुचिव्यपाये वनराजिपल्वलम् ॥

प्रवृद्धा यथा, मालतीमाधवे —

सुरभिणि श्वसिते दधतस्तृषं नवसुधामधुरे च तवाधरे ।
अलमलेरिव गन्धरसावमू मम नसौमनसौ मनसो मुदे ॥

संपृक्ता यथा —

आर्द्रकेसरसुगन्धि ते मुखं मत्तमत्तनयनं स्वभावतः ।
अत्र लब्धवसतिर्गुणान्तरं किं विलासिनि मदः करिष्यति ॥

अनुवर्तिनी यथा –

गेहाजिरेषु नवशालिकणावपातगन्धानुभावसुभगेषु कृषीवलानाम् ।
आनन्दयन्ति मुसलोल्लसनावधूतपाणिस्खलद्वलयपद्धतयो वधूभ्यः ॥

संप्रयोगजा या साम्प्रयोगिकी । सापि पञ्चधैव । तत्र जाता यथा वेणीसंहारे –

उत्तिष्ठन्त्या रतान्ते भरमुरगपतौ पाणिनैकेन कृत्वा
धृत्वा चान्येन वासो विगलितकबरीभारमंसे वहन्त्याः ।
भूयस्तत्कालकान्तिद्विगुणितसुरतप्रीतिना शौरिणा व-
श्शय्यामालिङ्ग्य नीतं वपुरलसलसद्बाहु लक्ष्म्याः पुनातु ॥

अनुबन्धिनी यथा –

उन्नमय्य सकचग्रहमास्यं चुम्बति प्रियतमे हठवृत्त्या ।
हुं विमुञ्च मम वेति च मन्दं जल्पितं जयति मानवतीनाम् ॥

प्रवृद्धा यथा –

धन्यास्थ याः कथयथ प्रियसङ्गमेऽपि विस्रब्धचाटुकशतानि रतान्तरेषु ।
नीवीं प्रति प्रणिहिते तु करे प्रियेण सख्यश्शपामि यदि किञ्चिदपि स्मरामि ॥

संपृक्ता यथा –

अद्यापि तत्कनककुण्डलघृष्टगण्डमास्यं स्मरामि विपरीतरताभियोगे ।
आन्दोळनश्रमजलस्फुटघर्मबिन्दुमुक्ताफलप्रकरविच्छुरितं प्रियायाः ॥

अनुबन्धिनी यथोत्तररामचरिते, चित्रदर्शनानन्तरं रामस्य, –

किमपि किमपि मन्दंमन्दमासक्तियोगा दविरलितकपोलं जल्पतोरक्रमेण ।
सपुलकपरिरम्भव्यापृतैकैकदोष्णोरविदितगतयामा रात्रिरेवं व्यरंसीत् ॥

अभिमानप्रभवा आभिमानिकी । सापि पञ्चधा । तत्र जाता यथा –

न किञ्चिदपि कुर्वाणस्सौख्यैर्दुःखान्यपोहति । तत्तस्य किमपि द्रव्यं योहि यस्य प्रियो जनः॥

अनुबन्धिनी यथा –

यदेव रोचते मह्यं तदेव कुरुते प्रिया । इति वेत्ति न जानाति तत्प्रियं यत्करोति सा ॥

प्रवृद्धा यथा उत्तररामचरिते –

अद्वैतं सुखदुःखयोरनुगतं सर्वास्ववस्थासु यत्
विश्रामो हृदयस्य यत्र जरसा यस्मिन्नहार्यो रसः ।
कालेनावरणात्ययात्परिणते यत्प्रेमसारे स्थितं
भद्रं तस्य सुमानुषस्य कथमप्येकं हि तत्प्रार्थ्यते ॥

सम्पृक्ता यथा —

इयं गेहे लक्ष्मीरियममृतवर्तिर्नयनयोरसावस्यास्स्पर्शो वपुषि बहुलश्चन्दनरसः ।
अयं बाहुः कण्ठे शिशिरमसृणो मौक्तिकसरः किमस्या न प्रेयो यदि परमसह्यस्तु विरहः ॥

अनुवर्तिनी यथा उत्तररामचरिते —

श्लाघ्यस्त्यागोऽपि वैदेह्याः पत्युः प्राग्वंशवासिनः । अनन्यजानेरासीद्यत्सैव जाया हिरण्मयी ॥

रतिरेव सांप्रयोगप्रयोजना प्रीतिः । सापि साम्प्रयोगिकीं विना अभ्यासिकया सह रतिवदष्टप्रकारैव । ताः पुनश्च जातादिभेदात् प्रत्येकं पञ्चधा । तत्र नैसर्गिकी जाता यथा शाकुन्तले —

आलक्ष्य दन्तमुकुलान्यनिमित्तहासैरव्यक्तवर्णरमणीयवचःप्रवृत्तीन् ।
अङ्कागतान्प्रणयिनस्तनयान्वहन्तो धन्यास्तदङ्गरजसा मलिनीभवन्ति ॥

अनुबन्धिनी यथा, उत्तररामचरिते —

इयं ते जननी प्राप्ता त्वदालोकनतत्परा । स्नेहप्रस्रवनिर्भिन्नमुद्वहन्ती स्तनांशुकम् ॥

प्रकृष्टा यथा रघुवंशे —

तमङ्कमारोप्य शरीरयोगजैस्सुखैर्निषिञ्चन्तमिवामृतं त्वचि ।
उपान्तसम्मीलितलोचनो नृप श्चिरात्सुखस्पर्शरसज्ञतां ययौ ॥

सम्पर्किणी यथा —

अपरिष्वज्य ह .... । अस्मद्वियोगदुःखार्तं न त्वेनं द्रष्टुमुत्सहे ॥

अनुगामिनी यथा —

अहं हि पुत्रिणामग्र्यस्सत्पुत्रेण तवामुना । पौलोमीसम्भवेनेव जयन्तेन पुरन्दरः ॥

सांसर्गिकी जाता यथा —

दिष्ट्या सैष महाबाहुरञ्जनानन्दवर्धनः । यस्य वीर्येण कृतिनो वयं च भुवनानि च ॥

अनुबन्धिनी यथा, उत्तररामचरिते —

विश्वम्भरा भगवती भवतीमसूत राजा प्रजापतिसमो जनकः पिता ते ।
तेषां वधूस्त्वमसि नन्दिनि पार्थिवानां येषां कुलेषु सविता च गुरुर्वयं च ॥

प्रकृष्टा यथा, महानाटके —

उत्पत्तिर्देवयजना ब्रह्मवादी नृपः पिता । सुप्रसन्नोज्ज्वला मूर्तिरस्यास्स्नेहं करोति मे ॥

संपृक्ता यथा —

यावत्पुनरियं सुभ्रूरुत्सुकाभिरसमुत्सुका । सखीभिर्याति संयोगं लताभिश्श्रीरिवार्तवी ॥

अनुबन्धिनी यथा, रघुवंशे —

लङ्केश्वरप्रणतिभङ्गदृढव्रतं तद्वन्द्यं युगं चरणयोर्जनकात्मजायाः ।
ज्येष्ठानुवृत्तिजटिलं च शिरोऽस्य साधोरन्योन्यपावनमभूदुभयं समेत्य ॥

आभियोगिकी जाता यथा, रघुवंशे —

पुत्रस्य ते रणशिरस्ययमग्रयायी दुष्यन्त इत्यभिमतो भुवनस्य भर्ता ।
चापेन यस्य विनिवर्तितकर्मजातं तत्कोटिमत्कुलिशमाभरणं मघोनः ॥

अनुबन्धिनी यथा, रघुवंशे —

दुर्जातबन्धुरयमृक्षहरीश्वरो मे पौलस्त्य एष समरेषु पुरः प्रहर्ता ।
इत्यादरेण कथितौ रघुनन्दनेन व्युत्क्रम्य लक्ष्मणमुभौ भरतो ववन्दे ॥

प्रवृद्धा यथा, उत्तररामचरिते —

ददतु तरवः पुष्पैरर्घ्यं फलैश्च मधुश्च्युतः स्फुटितकमलामोदप्रायाः प्रयान्तु वनानिलाः ।
कलमविरलं रज्यत्कण्ठाः क्वणन्तु शकुन्तयः पुनरिदमयं देवो रामस्स्वयं वनमागतः ॥

संपृक्ता यथा —

तदङ्गेषु जरां यातु यत्त्वयोपकृतं मम । नरः प्रत्युपकाराणामापत्सु लभते फलम् ॥

अनुवर्तिनी यथा, रघुवंशे —

अन्तर्गतप्रार्थनमन्तिकस्थं जयन्तमुद्वीक्ष्य कृतस्मितेन ।
आमृज्य वक्षो हरिचन्दनाङ्कं मन्दारमाला हरिणा पिनद्धा ॥

आध्यात्मिकी जाता यथा, किरातार्जुनीये —

परितस्तं पृथासूनुर्लोभेन परितस्थिरे । अविघ्नते निबद्धो हि बलात्प्रह्लादते मनः ॥

अनुबन्धिनी यथा, उत्तररामचरिते —

बाष्पान्विता निगमिता मम दृष्टिरस्मिन्वात्सल्यसन्धिहृदयं मदसुप्रमोदः ।
सञ्जातवेपथुभिरुज्झितधैर्यवृत्तिरिच्छामि चैनमदयं परिरब्धुमङ्गैः ॥

प्रवृद्धा यथा, शाकुन्तले —

अनेन कस्यापि कुलाङ्कुरेण स्पृष्टस्य गात्रेषु सुखं ममैतत् ।
कां निर्वृतिं चेतसि तस्य कुर्याद्यस्यायमङ्गात्कृतिनः प्ररूढः ॥

संपृक्ता यथा, उत्तररामचरिते —

विरोधो विश्रान्तःप्रसरति रसो निर्वृतिघनस्तदौद्धत्यं क्वापि व्रजति विनयः प्रह्वयति माम् ।
झटित्यस्मिन्दृष्टे किमपि परवानस्मि यदि वा महार्घस्तीर्थानामिव हि महतां कोऽप्यतिशयः ॥

अनुवर्तिनी यथा, उत्तररामचरिते –

यदृच्छा संवादः किमु गुणगणानामतिशयःपुराणो वा जन्मान्तरनिबिडबद्धः परिचयः ।
निजो वा सम्बन्धः किमु विधिवशात्केऽप्यविदितो ममैतस्मिन्दृष्टे हृदयमवधानं रचयति ॥

औपमानिकी जाता यथा, उत्तररामचरिते –

मुनिजनशिशुरेकस्सर्वतस्संप्रकोपात् नव इव रघुवंशस्याप्रसिद्धः प्ररोहः ।
दलितकरिकपोलग्रन्थिटङ्कारघोरज्वलितशरसहस्रः कौतुकं मे करोति ॥

अनुबन्धिनी यथा, उत्तररामचरिते –

कुवलयदलस्निग्धश्यामशिखण्डकमण्डनो वटुपरिषदं पुण्यश्रीकश्श्रियैव सभाजयन् ।
पुनरिव शिशुर्भूतो वत्सस्स मे रघुनन्दनो झटिति कुरुते दृष्टः कोऽयं दृशोरमृताञ्जनम् ॥

प्रवृद्धा यथा —

वत्सायाश्च रघूद्वहस्य च शिशावस्मिन्नभिव्यज्यते
सम्पृक्तिः प्रतिबिम्बितेव निखिला सैवाकृति स्सा द्युतिः ।
सा वाणी विनयस्स एव सहजः पुण्यानुभावोऽप्यसौ
हा हा देवि किमुत्पथैर्मम मनः पारिप्लवं धावति ॥

संपृक्ता यथा उत्तररामचरिते —

अतिशयितसुरासुरप्रभावं शिशुमवलोक्य तथैव तुल्यरूपम् ।
कुशिकसुतमुखद्विषां प्रमाथे धृतधनुषं रघुनन्दनं स्मरामि ॥

अनुवर्तिनी यथा —

तदाकाराधिकाकारांमालिङ्गयत्वां सुदुर्लभम् । वत्सच्छायावृतो वत्सस्स एनालिङ्ग्यते पुनः ॥

वैषयिकी पुन पञ्चधा । तत्र शब्दजाता यथा उत्तररामचरिते –

एते ते कुहरेषु गद्गदनदद्गोदावरीवारयो मेघालिङ्गितलुङ्गनीलशिखराः क्षोणीभृतो दक्षिणाः ।
अन्योन्यप्रतिघातसकुलदलत्कल्लोलकोलाहलैरुत्तालास्त इमे गभीरपयसः
पुण्यास्सरित्सङ्गमाः ॥

अनुबन्धिनी यथा –

नाधन्यैः क्षणदाभिराममधुराःकिञ्चिद्विनिद्रालस-
श्रोत्रैश्च व्रणमुग्धचारणवधूदन्तच्छदायासिनः ।
श्रूयन्ते मृदुपीतवक्त्रमरुतः पौराळरीतिक्रमव्यालोलाङ्गुलिरुद्धमुक्तसुषिरश्रोणीरवा वेणवः ॥

प्रकृष्टा यथा —

अभ्यात्स्वर्लोकचूडामणिपटलशिखाश्रेणिशोणीकृतांघ्रौ
क्षोणीभार .... जुषि जगद्याहवे वः ।
राज्ञामुद्दामदोष्णां रणशिरसि लसत्कीकसच्छेदभीमाः
शस्त्राणां क्वाणकाराःप्रतिहतिगुरवो यच्छ्रुतिर्दोहदो नः ॥

संपृक्ता यथा, उत्तररामचरिते —

अथ कोऽयमिन्द्रमणिमेचकच्छविर्ध्वनिनैव बद्धपुलकं करोति माम् ।
नवनीलनीरधरगर्जितक्षणलब्धकुट्मलकदम्बडम्बरम् ॥

अनुवर्तिनी यथा मालतीमाधवे —

अस्माकमेकपद एव मरुद्विकीर्णजीमूतजालरसितानुकृतिर्निनादः ।
गम्भीरमङ्गलमृदङ्गसहस्रजन्मा शब्दान्तरश्रवणशक्तिमपाकरोति ॥

स्पर्शे जाता यथा कुमारसम्भवे —

भागीरथीनिर्झरशीकराणां वोढा मुहुः कम्पितदेवदारुः ।
यद्वायुरन्विष्टमृगैः किरातैरासेव्यते भिन्नशिखण्डिबर्हः ॥

अनुबन्धिनी यथा —

इह तुङ्गकुम्भघटितेतरेतरस्तनभारदूरविनिवारितोदरम् ।
परिपाण्डुगण्डफलकाः परस्परं परिरेभिरे कुकुरकौरवस्त्रियः ॥

प्रकृष्टा यथा, उत्तररामचरिते —

दिनकरकुलचन्द्रचन्द्रकेतो सरभसमेहि दृढं परिष्वजस्व ।
तुहिनशकलशीतलैस्तवाङ्गैश्शममुपयातु ममापि चित्तदाहः ॥

संपृक्ता यथा, मालतीमाधवे —

तदेतदसितोत्पलद्युतिशरीरमस्मिन्नभून्ममापि दृढपीडनैरपि न तृप्तिरालिङ्गनैः ।
यदुल्लसितविभ्रमाव्रतनिपीतवत्य. पुरा नवप्रणयविभ्रमाकुलितमालतीदृष्टयः ॥

अनुबन्धिनी यथा, शाकुन्तले —

रम्यान्तरःकमलिनीभरितैस्सरोभिश्छायाद्रुमैर्नियमितार्कमयूखतापः ।
भूयात्कुशेशयरजोमृदुरेणुरस्याः शान्तानुकूलपवनश्च शिवश्च पन्थाः ॥

रूपे जाता यथा —

.... घनश्यामलोत्तुङ्गसानुर्मदमुखरमयूरीमुक्तसंसक्तकेकः ।
शकुनिशबलनीलानोकहस्निग्धवर्षाविक . . वृहिणीपर्वतप्रीतिमक्ष्णोः ॥

अनुबन्धिनी यथा —

साम्यं संप्रति सेवते विचकिलं षाण्मासिकैर्मौक्तिकै-
र्बाह्लीकीदशनव्रणारुणतरैः पुष्पैरशोकश्चितः ।
हूणीनां कुरुते मधूककुसुमं लावण्यलुण्टाकतां
लाटीनामिनिभं चकास्ति च पतद्दन्ताग्रतः केसरम् ॥

प्रकृष्टा यथा —

पुष्पेषु शंखशकलच्छविषु छदानां राजीभिरङ्कितमलक्तकलोहिनीभिः ।
गोरोचनाहरितबभ्रु बहिःपलाशमामोदते कुमुदमम्भसि पल्वलस्य ॥

संपृक्ता यथा —

अभीक्ष्पीतान्तिकधूसरेभ्यो गर्भस्थताम्बूलरसारुणेभ्यः ।
परश्रियं कर्षति काञ्चनारं पाञ्चालनारीदशनच्छदेभ्यः ॥

अनुबन्धिनी यथा —

तिक्ताविलासान्यधुना पुराणमाञ्जिष्ठचेलच्छविधूसराणि ।
अलम्बुसायाः कुसुमानि सीम्नि लोलन्ति मन्दं मरुदाहृतानि ॥

रसे जाता यथा —

उच्छ्वस्योच्छ्वस्य दीर्घं कथमपि शनकैः पाटलागन्धगम्यं
प्रभ्रष्टं कर्करीतस्फुटसितसिकतासेकसत्कर्णिकायाः ।
दूराद्धारानिपातप्रविततकणिकासिच्यमानाननेन
स्वच्छं धन्येन वारि द्रुततुहिनजडं पीयते पाणिनैवम् ॥

अनुबन्धिनी यथा —

इक्षुदण्डस्य मद्यस्य दध्नःपिष्टकृतस्य च । वराहस्य च मांसस्य सैष गच्छति फाल्गुनः ॥

प्रकृष्टा यथा, महावीरचरिते —

संज्ञप्यते वत्सतरी सर्पिष्यन्नं च पच्यते । श्रोत्रिय श्रोत्रियगृहानागतोसि जुषस्वनः ॥

संपृक्ता यथा, रघुवंशे —

लवङ्गमालाकलितावतंसा स्ते नारिकेलान्तरपः पिबन्तः ।
आस्वादितार्द्रक्रमुकाः समुद्रादभ्यागतस्य प्रतिपत्तिमापुः ॥

अनुवर्तिनी यथा, रघुवंशे —

विनयन्ते स्म तद्योधामधुभिर्विजयश्रमम् । आस्तीर्णाजिनरत्नासु द्राक्षावलयभूमिषु ॥

गन्धे जाता यथा, कुमारसम्भवे —

कपोलकण्डूः करिभिर्विनेतुं विघट्टितानां सरलद्रुमाणाम् ।
यत्र स्रुतक्षीरतया प्रसूतः सानूनि गन्धः सुरभीकरोति ॥

अनुबन्धिनी यथा —

वान्ति कह्लारसुभगाः सप्तच्छदसुगन्धयः । शेफालीकलिकाकोशकषायामोदिनोऽनिलाः ॥

प्रकृष्टा यथा —

असेसइह्लादं सदरंमिइ अणेहिं मुहेहिं । अड्ड आहरपुरंओणअ अवसागंधगब्भिमा सिहिजाळा ॥

संपृक्ता यथा —

मूले वृन्तं तदनुचिपिटं कुब्जपृष्ठं च किञ्चिद्ग्रीवावृत्तान्तच्छदमथ ततः श्लिष्टमुत्पिञ्जलाग्रम् ।
वातोद्धूतादवनतमुखं बन्धिनीमुक्तसन्धेर्गन्धान्धालिस्खलितकुसुमं पाटलं पाटलायाः ॥

अनुबन्धिनी यथा —

शून्यग्रामटिकोपकण्ठरचितक्षुद्रैककूपीपयःपर्यासाहितसेकशाकितहरित्कच्छप्रदेशोद्भवाः ।
अस्मिन्हन्त हरन्ति हालिकरतक्रीडाविमर्दस्फुटत्पर्कैर्वारुकगन्धगन्धितजरद्गोमायवो वायवः ॥

आभ्यासिकी जाता यथा, शाकुन्तले —

मेदश्छेदकृशोदरं लघु भवत्युत्थानयोग्यं वपु-
स्सत्वानामपि लक्ष्यते विकृतिमच्चित्तं भयक्रोधयोः ।
उत्कर्षस्स च धन्विनां यदिषवस्सिध्यन्ति लक्ष्ये चले
मिथ्या हि व्यसनं वदन्ति मृगयामीदृग्विनोदः कुतः ॥

अनुबन्धिनी यथा, रघुवंशे —

व्याघ्रानभीरभिमुखोत्पतितान् गुहाभ्यः फुल्लासनाग्रविटपानिव वायुरुग्णान् ।
शिक्षा विशेषलघुहस्ततया निमेषात्तूणींचकार शरपूरितवक्त्ररन्ध्रान् ॥

प्रकृष्टा यथा, रघुवंशे —

इति विस्मृतान्यकरणीयमात्मनस्सचिवालम्बितधुरं धराधिपम् ।
परिवृद्धरागमनुबद्धसेवया मृगयाजहार चतुरेव कामिनी ॥

संपृक्ता यथा, रघुवंशे —

अपि तुरगसमीपादुत्पतन्तं मयूरं न स रुचिरकलापं बाणलक्षीचकार ।
सपदि गतमनस्कश्छिन्नमाल्यानुकीर्णे रतिविगलितबन्धे केशपाशे प्रियायाः ॥

अनुवर्तिनी यथा, शाकुन्तले —

गाहन्तां महिषा निपानसलिलं शृङ्गैर्मुहुस्ताडितं
छायाबद्धकदम्बकं मृगकुलं रोमन्थमभ्यस्यतु ।
विस्रब्धं क्रियतां वराहततिभिर्मुस्ताक्षतिः पल्वले
विश्रान्तिं लभतामिदं च शिथिलज्याबन्धमस्मद्धनुः ॥

आभिमानिकी जाता यथा, उत्तररामचरिते —

किरति कलितकिञ्चित्कोपरज्यन्मुखश्रीरविरतगुणगुञ्जत्कोटिना कार्मुकेण ।
समरशिरसि चञ्चत्पञ्चचूडश्चमूनामुपरि शरतुषारं कोऽप्ययं वीरपोतः ॥

अनुगामिनी यथा —

हेरम्बदन्तमुसलोल्लिखितैकभित्ति वक्षोविशालविशिखव्रणलाञ्छितं मे ।
रोमाञ्चकञ्चुकितमद्भुतवीरलाभात्सत्यं ब्रवीमि परिरब्धुमिवेच्छति त्वाम् ॥

प्रकृष्टा यथा —

दत्तेन्द्राभयदक्षिणैर्भगवतो वैवस्वतादामनोर्दृप्तानां दहनीयदीपिकनिजक्षात्रप्रतापाग्निभिः ।
आदित्यैर्यदि विग्रहो नृपतिभिस्सद्यो ममैतत्ततो दीप्ताग्रदीधितिशिखाभिरहो ?
नीराजितज्यं धनुः ॥

संपृक्ता यथा, वेणीसंहारे —

राज्ञो मानधनस्य कार्मुकभृतो दुर्योधनस्याग्रतः
प्रत्यक्षं कुरुबान्धवस्य मिषतः कर्णस्य शल्यस्य च ।
पीतं तस्य मयाद्य पाण्डववधूकेशाम्बराकर्षिणः
कोष्णं जीवत एव तीक्ष्णकरजक्षुण्णादसृग्वक्षसः ॥

अनुवर्तिनी यथा, विक्रमोर्वशीये —

मया नाम जितं यस्मात्त्वया जय उदीर्यते । जयशब्दरसहस्राक्षादागतः पुरुषान्तरम् ॥
सैष भावो रतिर्नाम कामकल्पद्रुमाङ्कुरः । सौहृदांकुरकन्दश्च द्विप्रकारोऽपि दर्शितः ॥
भावान्तरेभ्यस्सर्वेभ्यो रतिभावः प्रकृष्यते । कविवर्गस्समग्रोऽपि तमेनमनुधावति ॥

निसर्गसंसर्गमुखैः प्रभेदै र्जन्मानुबन्धातिशयादिभिश्च ।
इदं विनिश्चित्य निवेशयन्तः कवीन्द्रकीर्ति कवयो लभन्ते ॥

—ः इति श्री महाराजाधिराज श्री भोजदेवविरचिते शृङ्गारप्रकाशे
रतिप्रकाशनो नाम त्रयोदशः प्रकाशः ः—



Errata:

P 562 रूपे आता यथा –

अयमभिनवमेघश्यामलोत्तुङ्गसानुर्मदमुदितमयूरीबद्धविस्रब्धनृत्यः ।
शकुनिशबलनीलानोकहस्निग्धवर्ष्मा वितरति बृहदश्मा पर्वतः प्रीतिमक्ष्णोः ॥

P 564 प्रकृष्टा यथा –

दत्तेन्द्राभयदक्षिणै र्भगवतो वैवस्वतादामनो-
र्दृप्ताना दहनाय दीपितनिजक्षात्रप्रतापाग्निभिः ।
आदित्यैर्यदि विग्रहो नृपतिभिर्धर्म्यं ममैतत्ततो
दोसास्त्रस्फुरदुग्रदीधितिभरैर्नीराजितज्यं धनुः ॥

॥ श्रीः ॥

# चतुर्दशः हर्षादिभावपञ्चकप्रकाशनप्रकाशः

**मनोरथावाप्तौ मनःप्रसादो हर्षः । स जन्मनि यथा, महावीरचरिते —**

रक्षोघ्नानि च मङ्गळानि सुदिने कल्प्यानि दारक्रिया
वैदेह्याश्च रघूद्वहस्य च कुले दीक्षाप्रवेशश्च नः ।
आस्थेयानि च तानि तानि जगतां क्षेमाय रामात्मनो
दैत्यारेश्चरिताद्भुतान्यथ खलु व्यग्राः प्रमोदामहे ॥

**अनुबन्धे यथा, रघुवंशे –**

जनाय शुद्धान्तचराय शंसते कुमारजन्मामृतसम्मिताक्षरम् ।
अदेयमासीत् त्रयमेव भूपतेश्शशिप्रभं छत्रमुभे च चामरे ॥

**प्रकर्षे यथा, उत्तररामचरिते —**

जातस्य ते पितुरपीन्द्रजितो निहन्तुर्वत्सस्य वत्स कति नाम दिनान्यमूनि ।
तस्याप्यपत्यमनुतिष्ठति वीरधर्मं दिष्ट्या गतं दशरथस्य कुलं प्रतिष्ठाम् ॥

**संपृक्ते यथा —**

आश्वासितस्य मम नाम सुतोपलब्ध्या सारत्त्वया सह कृशोदरि विप्रयोगः ।
व्यावर्तितावरजः प्रथमाभ्रवृष्ट्या वृक्षस्य वैद्युत इवाग्निरुपस्थितोऽयम् ॥

**अनुवृत्तौ यथा —**

विवृद्धिं कम्पस्य प्रथयतितरां साध्वसवशा दविस्पष्टं दृष्टिं तिरयति मुहुर्बाष्पसलिलैः ।
स्खलद्वर्णां वाणीं जडयतितरां गद्गदितया जरायास्साहाय्यं मम हि परितोषोऽद्य कुरुते ॥

**सहसोत्पन्नावेगक्षमने विक्षोभजन्मा अन्तश्शरीरोच्छ्वासो रोमाञ्चः । तस्य जन्मनि यथा –**

उन्नमितैकभ्रूलतमाननमस्याः पदानि रचयन्त्याः । कण्टकिते न प्रथयति मय्यनुरागं कपोलेन ॥

**अनुबन्धे यथा –**

प्रीतं यूनि तस्मिन्नभिलाषबन्धं शशाक शालीनतया न वक्तुम् ।
रोमाञ्चलक्ष्येण स गाढयष्टिं भित्वा निराक्रामदरालकेश्याः ॥ (रघु. ६. ८०.)

प्रकर्षे यथा —

विवृण्वती शैलसुतापि भाव मङ्गैस्स्फुरद्बालकदम्बकल्पैः ।
साचीकृता चारुतरेण तस्थौ मुखेन पर्यस्तविलोचनेन ॥ (कुमार. ३. ६८)

सम्पर्को यथा —

प्रस्वेदरोमाञ्चितकम्पिताङ्गी जाता प्रियस्पर्शसुखेन वत्सा ।
मरुन्नवाम्भःपरिधूतसिक्ता कदम्बयष्टिस्फुटकोरकेव ॥ (कु. ३. ७२)

अनुगमो यथा —

एकस्मिन् शयने मया मयसुतामालिङ्ग्य निद्रालसा-
मुन्निद्रं शयितेन मच्चरणयोस्संवाहनव्यापृताम् ।
पादाग्रेण तिलोत्तमास्तनतटे सस्नेहमापीडितां
हर्षावेगसमर्पितानि पुलकान्यद्यापि नो मुञ्चति ॥

अभीष्टप्राप्ते मनोव्याकुलापगमः धृतिः । तस्य जन्म यथा —

अनुसानुपुष्पितलताविततिः फलितोरुभूरुहविविक्तवनः ।
धृतिमाततान तनयस्य हरे .... मचलः ॥

अनुबन्धो यथा —

विषयपतिरलब्धो धेनुभिर्धातुपूतं कतिचिदभिमतायां सीम्नि सीरावहन्ति ।
शिथिलयति न भार्यां चातिथेयीं सपर्यामिति सुकृतमनेन व्यञ्जितं नः फलेन ॥

प्रकर्षे यथा, रत्नावल्यां —

यातो विक्रमबाहुरात्मसमतां प्राप्तेयमुर्वीतले सारं सागरिका ससागरमहीप्राप्त्येकहेतुः प्रिया ।
देवी प्रीतिमुपागता च भगिनीलाभाज्जिताः कोसलाः किं नास्ति त्वयि सत्यमात्य-
वृषभे यस्मिन्करोमि स्पृहाम् ॥

संपर्को यथा, मालतीमाधवे —

निकामं क्षामाङ्गी सरसकदलीगर्भसुभगा कलाशेषामूर्तिश्शशिन इव नेत्रोत्सवकरी ।
अवस्थामापन्ना मदनदहनोदाहविधुरा मियं नःकल्याणी रमयति मनो मोहयति च ॥

अनुगमो यथा —

अत्युष्णात्सघृतादन्नादच्छिद्राद्वाससस्सितात् । अपरप्रेष्यभावाच्च भूरि वाञ्छन्विनश्यति ॥

हर्षादिभिर्मनोविकासविशेषविकासो हासः । तज्जन्म यथा —

एतत्किं शिरसि स्थितं मम पितुः खण्ड सुधाजन्मनो
लालाटं किमिदं विलोचनमिदं हस्तेऽस्य किं पन्नगाः ।
इत्थं क्रौञ्चरिपोः क्रमादुपगते दिग्वाससश्शूलिनः
प्रश्ने वामकरोपरोधसुभगं देव्यास्स्मितं पातु वः ॥

अनुबन्धो यथा —

मातर्जीव किमेतदञ्जलिगतं तातेन गोपायते
वत्स स्वादु फलं प्रयच्छति न मे गत्वा गृहाण स्वयम् ।
गौर्येत्थं गदिते गुहे विघटयत्याकृष्य सन्ध्याञ्जलिं
शम्भोर्भिन्नसमाधिरुद्धरभसो हासोद्गमः पातु वः ॥

प्रकर्षो यथा —

स एष भुवनत्रयप्रथितसंयमश्शङ्करो बिभर्ति वपुषाधुना विरहकातरः कामिनीम् ।
अनेन किल निर्जिता वयमिति प्रियायाः करं करेण परिताडयन्जयति जातहासस्स्मरः ॥

अपकर्षो यथा —

वपुर्दळनसम्भ्रमात्स्वनखरं प्रविष्टे रिपौ क यात इति विस्मयात्प्रहितलोचनस्सर्वतः ।
वृथेति करताडनान्निपतितं पुरोदानवं निरीक्ष्य भुवि रेणुवज्जयति जातहासो हरिः ॥

अनुगमो यथा —

औत्सुक्येन कृतत्वरा सहभुवा व्यावर्तमाना हि या
तैस्तैर्बन्धुवधूजनस्य वचनैर्नीताभिमुख्यं पुनः ।
दृष्ट्वाग्रे वरमात्तसाध्वसरसा गौरी नवे सङ्गमे
संरोहत्पुलका हरेण हसता श्लिष्टा शिवायास्तु वः ॥

आत्मोत्कर्षसम्भावनया परावज्ञानं गर्वः । तज्जन्म यथा —

लब्धापत्यमभूत्पुरामृतहृतौ वह्निप्रभाभासुरैः पक्षाळीतरितामरप्रहरणैर्धैर्योचितं मण्डनम् ।
तेनास्मद्भुजपञ्जरेऽत्र च मुहुर्व्यर्थोद्यमान्कुर्वता व्यालोलेन गरुत्मतापि सुचिरं
क्रीडाशकुन्तायितम् ॥

अनुबन्धो यथा, वेणीसंहारे –

अस्त्रज्वालावलीढप्रतिबलजलधेरन्तरौर्वायमाणे
सेनानाथे स्थितेऽस्मिन्मम पितरि गुरौ सर्वधन्वीश्वराणाम् ।
कर्णाऽलंसम्भ्रमेण व्रज कृपसमरं मुञ्च हार्दिक्यशङ्कां
ताते चापद्वितीये वहति रणधुरं को भयस्यावकाशः ॥

प्रकर्षो यथा, वेणीसंहारे —

धृतायुधो यावदहं तावदन्यैः किमायुधैः । यद्वा न सिद्धमस्त्रेण मम तत्केन सेत्स्यति ॥

संपर्को यथा,

चक्रं वामवुहा कृतान्तगृहिणां दत्ताग्रपञ्चांगुलं वज्रं भूधरपक्षशोणितसुरापानोन्मदं वा वृथा ।
शूलं चासुररक्तबिन्दुनिचितंगृह्णातु शूलायुधो धृष्टद्युम्नमहंनिहन्मि समरे कश्चि-
त्परित्रायताम् ॥

अनुगमो यथा —

मैनाकःकिमयंरुणद्धि गगने मन्मार्गमव्याहतं शक्तिस्तस्यकुतस्स वज्रपतनाद्भीतो महेन्द्रादपि।
तार्क्ष्यस्सोऽपि समंनिजेन विभुना जानाति मां रावणं आः ज्ञातं स जटायुरेष
जरसा क्लिष्टो वधं वाञ्छति ॥

मदिराद्युपयोगान्मनस्सम्मोहानन्दसंभेदो मदः । तज्जन्म यथा, कुमारसम्भवे —

पार्वती तदुपयोगसम्भवांविक्रियांगतवती मनोहराम् ।
अप्रतर्क्यविधियोग्यनिर्मितामाहतेवसहकारतां ययौ ॥

अनुबन्धो यथा, कुमारसम्भवे –

तत्क्षणं व्यपरिवर्तितह्रियो र्नैष्यतोश्शयनमिद्धरागयोः ।
संबभूव वशवर्तिनीद्वयोश्शूलिनस्सुवदनामदस्य च ॥

प्रकर्षो यथा, कुमारसम्भवे –

घूर्णमाननयनं स्खलत्पदं स्वेदबिन्दुमदकारणस्मितम् ।
आननेन नतु तावदीश्वर श्चक्षुषा चिरमुमामुखं पपौ॥

संपर्को यथा, किरातार्जुनीये —

शीधुपानविधुरेषु वधूनां निघ्नतामुपगतेषु वपुष्षु ।
ईहितं रतिरसाहितभावं वीतलक्ष्यमपि कामिषु रेजे ॥

अनुगमो यथा, किरातार्जुनीये —

आमोदवासितचलाधरपल्लवेषु निद्राकषायितविपाटललोचनेषु ।
व्यामृष्टपत्रलतिकेषु विलासिनीनां शोभां बबन्ध वदनेषु मदस्य शेषाः ॥

पुरुषार्थेष्वपरिसमाप्तेः प्रयत्नविशेष उत्साहः । तज्जन्म यथा —

मूर्ध्ना जाम्बवतोऽभिवाद्य चरणा वापृच्छ्य सेनापती-
नाश्वास्याश्रुमुखान्मुहुःप्रियसखा न्प्रेष्यान् समादिश्य च ।
आरम्भं जगृहे महेन्द्रशिखरादम्भोनिधेर्लङ्घने
रंहस्वीरघुनाथपादरजसामुच्चैस्स्मरन्मारुतिः ॥

अनुबन्धो यथा —

पुत्रो रघुस्तस्य पदं प्रशास्ति महाक्रतोर्विश्वजितः प्रयोक्ता ।
चतुर्दिगावर्जितसम्भृतां यो मृत्पात्रशेषामकरोद्विभूतिम् ॥

प्रकर्षो यथा —

दिङ्मातङ्गघटाविभक्तचतुरा घाटा मही साध्यते
सिद्धा सापि वदन्त एव हि वयं रोमाञ्चिताः पश्यत ।
विप्राय प्रतिपाद्यते किमपरं रामाय तस्मै नमो
यस्मादाविरभूत् कथाद्भुतमिदं यत्रैव चास्तं गतम् ॥

सम्पर्को यथा, रघुवंशे —

अथाधिशिश्ये प्रयतः प्रदोषे रथं रघुः कल्पितशस्त्रगर्भम् ।
सामन्तसम्भावनयैव धीरः कैलासनाथं तपसा जिगीषुः ॥

अनुगमो यथा —

शक्त्या वक्षसि मग्नया सहमया मूढे प्लवङ्गाधिपे विद्राणेषु च विद्रवत्सु कपिषु प्राप्तावकाशे द्विषि ।
मा भैष्टेति निरुन्धतः कपिबलान्यस्योद्यमः प्रथिते मर्मच्छेदविसंस्थुलाक्षरजडा
वाचस्त्वया न श्रुताः ॥

शास्त्रपरिभावनयार्थनिर्धारणं मतिः । तस्या जन्म यथा, शाकुन्तले —

रम्याणि वीक्ष्य मधुरांश्च निशम्य शब्दान् पर्युत्सुको भवति यत्सुखितोऽपि जन्तुः ।
तच्चेतसा स्मरति नूनमबोधपूर्वं भावस्थितानि जननान्तरसौहृदानि ॥

अनुबन्धो यथा, मालतीमाधवे —

व्यतिषजति पदार्थानान्तरः कोऽपि हेतुर्न खलु बहिरुपाधीन्प्रीतयस्संश्रयन्ते ।
विकसति हि पतङ्गस्योदये पुण्डरीकं द्रवति च हिमरश्मावुद्गते चन्द्रकान्तः ॥

प्रकर्षो यथा, उत्तररामचरिते —

एको रसः करुण एव निमित्तभेदाद्भिन्नः पृथक्पृथगिव श्रयते विवर्तान् ।
आवर्तबुद्बुदतरङ्गमयान्विकारानम्भो यथा सलिलमेव हि तत्समग्रम् ॥

सम्पर्को यथा, मालतीमाधवे —

यातानुतद्भगवती भवनं सखी नो जीवन्त्युपैष्यति न वेत्यथ शङ्कितोऽस्मि ।
प्रायेण बान्धवसुहृत्प्रियसङ्गमादि सौदामिनीस्फुरणचञ्चलमेव सौख्यम् ॥

अनुगमो यथा —

तदेतच्चक्षुर्णामपथ मपदं विश्ववचसा मनाधारं बुद्धे र्नियतकरणग्रामसुहृदः ।
यदालोके यूनां कनकफलकस्फारजघना घनाकारा तन्वी किमपि कमनीयं जनयति ॥

अर्थेषु यथामत्यूहो वितर्कः । तस्य जन्म यथा —

शिरीषपुष्पाधिकसौकुमार्यौ बाहू तदीयाविति मे वितर्कः ।
पराजितेनापि कृतौ हरस्य यौ कण्ठपाशौ मकरध्वजेन ॥

अनुबन्धिनी यथा, शाकुन्तले —

चित्रे निवेश्य परिकल्पितसत्वयोगा रूपोच्चयेन विधिना मनसा कृता नु ।
स्त्रीरत्नसृष्टिरपरा प्रतिभाति सा मे धातुर्विभुत्वमनुचिन्त्य वपुश्च तस्याः ॥

प्रकृष्टा यथा, विक्रमोर्वशीये —

अस्यास्सर्गविधौ प्रजापतिरभूच्चन्द्रो नु कान्तिप्रदः
शृङ्गारैकरसस्स्वयं नु मदनो मासो नु पुष्पाकरः ।
वेदाभ्यासजडः कथं स विषयव्यावृत्तकौतूहलो
निर्मातुं प्रभवेन्मनोहरमिदं रूपं पुराणो मुनिः ॥

संपर्को यथा, रघुवंशे —

न नूनमारूढरुषा शरीरमनेन दग्धं कुसुमायुधस्य ।
व्रीडादमुं देवमुदीक्ष्य मन्ये संन्यस्तदेहस्स्वयमेव कामः ॥

अनुगमो यथा, शाकुन्तले —

अंसंशयं क्षत्रपरिग्रहक्षमा यदार्यमस्यामभिलाषि मे मनः ।
सतां हि सन्देहपदेषु वस्तुषु प्रमाणमन्तःकरणप्रवृत्तयः ॥

अतिशयितपदार्थदर्शनाच्चित्तविस्तारो विस्मयः । तस्य जन्मनि यथा —

उभौ रम्भास्तम्भावुपरि विपरीतौ कमलयो स्तदूर्ध्वं रत्नाश्मस्थलमथ दुरूहं किमपि तत् ।
ततःकुम्भौ पश्चाद्बिसकिसलये कन्दलमये तदन्विन्दाविन्दीवरमधुकराः किं पुनरिदम् ॥

अनुबन्धे यथा —

इतस्स्वपिति केशवःकुलमितस्तदीयद्विषामितश्च शरणार्थिनश्शिखरिणां गणाश्शेरते ।
इतोऽपि बडबानलस्सहसमस्तसंवर्तकैरहो विततमूर्जितं भरसहं च सिन्धोर्वपुः ॥

प्रकर्षे यथा —

कृष्णेनाम्ब गतेन रन्तुमधुना मृद्भक्षिता स्वेच्छया
सत्यं कृष्ण कएवमाह मुसली मिथ्याम्ब पश्याननम् ।
व्यादेहीति विदारितेऽथ वदने दृष्ट्वा समग्रं जग-
न्माता यस्य जगाम विस्मयपदं पायात्स वः केशवः ॥

संपृक्ता यथा, उत्तररामचरिते —

दलति हृदयं गाढोद्वेगो द्विधा तु नभिद्यते वहति विकलः कायो मोहं न मुञ्चति चेतनाम् ।
ज्वलयति तनूमन्तर्दाहः करोति नभस्मसा त्प्रहरति विधिर्मर्मच्छेदी न कृन्तति जीवितम् ॥

अनुगमो यथा —

वीचीव्याप्तवियन्निरुद्धवसुधं कागाधरन्ध्रं पयो
गोलांगूलसलीलपाणितुलिताः क्षुद्राः क्व ते क्ष्माभृतः ।
बध्वा दाशरथि स्तथापि जलधि प्रत्याजहार प्रियां
ग्रावाणो वितरन्ति वारिणि यदा पुंसोऽनुकूलो विधिः ॥

रौद्रादिदर्शनान्मनसो वैक्लव्यं भयम् । तज्जन्म यथा —

मन्त्रान्मृत्युजितो जपद्भिरसकृद्ध्यायद्भिरिष्टात्सुरा-
ञ्छुष्यत्तालुभिराकुलाकुलपदैर्निर्वाग्भिरुत्कम्पिभिः ।
अध्वन्यैरिह जीवितेशमहिषव्याधूम्रधूमाविला
लङ्घ्यन्ते करिमांसघस्मरकणत्कौलेयकाः पल्लयः ॥

अनुबन्धो यथा —

सत्त्वभ्रंशविषादिभिःकथमपि त्रस्तैः क्षणं वेत्रिभिर्दृष्टोद्दष्टिविघातजिह्मितमुखैरव्याहतप्रक्रमः।
रामान्वेषणतत्परःपरिजनैरुन्मुक्तहाहारवःकन्यान्तःपुरमेव हा प्रविशति क्रुद्धो मुनिर्भार्गवः॥

प्रकर्षो यथा —

वराहः कल्याणं वितरतु स वो यस्य शशभृत्कलाकोटीकान्तं क्रमविगलदम्बुद्धतिभयात्।
मिथ्यासम्मूर्छिताभिश्चतुरुदधिकल्लोलपटलैरनामृष्टं दंष्ट्राशिखर मधिशेते वसुमती ॥

रौद्रादिजन्मा चित्तचमत्कारः त्रासः। तस्य जन्म यथा, किरातार्जुनीये –

परिस्फुरन्मीनविघट्टितोरव स्सुराङ्गनास्त्रासविलोलदृष्टयः।
उपाययुः कम्पितपाणिपल्लवा स्सखीजनस्यापि विलोकनीयताम् ॥

अनुबन्धो यथा —

किं मुग्धे शुकपञ्जरेण रसिके किंशारिकान्वेषणे
स्वच्छे मुञ्चसि किंन चित्रफलकं किं वीणया रागिणि।
नायं भूषणसंग्रहस्य समयो लीलावति त्वर्यता-
मित्यासन्पुरविद्रवे भवदरिस्त्रीणां वयस्या गिरः॥

प्रकर्षो यथा —

स पातु वो यस्य हतावशेषास्तत्तुल्यवर्णाञ्जनरञ्जितेषु।
लावण्ययुक्तेष्वपि वित्रसन्ति दैत्यास्स्वकान्तानयनोत्पलेषु ॥

संवर्को यथा –

*श्रुत्वायं सहसा गतं निजपुराद् त्रासेन निर्गच्छतां*
शत्रूणामवरोधनैर्जललवप्रस्यन्दताम्यत्पुटाम्।
शुभ्रे वेश्मनि पल्लविन्युपवने वाप्यां नवाम्भोरुहि
क्रोडाद्रौ च मुहुर्मुहुर्विवलितग्रीवैर्विमुक्ता दृशः॥

अनुगमो यथा —

अञ्जविहरिइ चमकइ कहविणमंदरेणदलिआइ।
चन्दकलाकंदले कोमलाइ लच्छी एअंगाइ ॥

अनिष्टागमोत्प्रेक्षणं शङ्का । तस्या जन्म यथा, महावीरचरिते —

दूराद्वीयो धरणीधराभं यस्ताटकेयं तृणवद्व्यधूनोत् ।
हन्ता सुबाहोरपि ताटकारिः स राजपुत्रो हृदि बाधते माम् ॥

अनुबन्धो यथा, मालतीमाधवे —

किमपि किमपि शङ्के मङ्गलेभ्यो यदन्यद्विरमतु परिहासश्चण्डि पर्युत्सुकोऽस्मि ।
कलयति परितोऽहं वल्लभे देहि वाचं भ्रमति हृदयमन्तर्विह्वलं निर्दयासि ॥

प्रकर्षो यथा, मालतीमाधवे —

मम हि कुवलयाक्षीं प्रत्यनिष्टैकबुद्धेरविरतमनुबन्धोत्कम्प एवान्तरात्मा ।
स्फुरति च खलु चक्षुर्वाममेतच्च कष्टं वचनमिह भवत्योरसर्वथा हा हतोऽस्मि ॥

संपर्को यथा, महावीरचरिते —

हा वत्साः खरदूषणत्रिशिरसो वध्यास्थ पापस्य मे
हा हा वत्स विभीषण त्वमपि मे कार्येण हेयः स्थितेः ।
हा मद्वत्सलवत्स रावण महत्पश्यामि ते सङ्कटं
वत्से केकसि हा हतासि न चिरात् त्रीन्पुत्रकान्द्रक्ष्यसि ॥

अनुगमो यथा, बालचरिते —

हेलाखण्डितचण्डहेमहरिणैर्बाणैःकुलंविद्विषां शेषीभूतविभूषणं गुणनिधौ कृत्वातु रामे स्थिते ।
प्रत्युज्जीवनशङ्कया यदजितो लङ्कापतेःकातरैर्नैर्मुक्ताःकुसुमस्रजोनचसुरैरास्फालितोदुन्दुभिः॥

भयानुरागादिजमाचेष्टाप्रतिघातः स्तम्भः । तस्य जन्म यथा, रघुवंशे —

वामेतरस्तस्य भुजःप्रहर्तुर्नखप्रभाभूषितकङ्कपत्रे ।
सक्तांगुलिस्सायकपुंख एव चित्रार्पितारम्भ इवावतस्थे ॥

अनुबन्धो यथा, सेतुबन्धे —

साअरदंसण एत्था अ०खितो सरिअ वेवमाणशरीरा सहसा ।
लिहिअ०वटिआणिप्पंदणिराअलोअणा कइणिवहा ॥

प्रकर्षो यथा, उत्तररामचरिते —

व्यतिकर इव भीमस्तामसो वैद्युतश्च प्रणिहितमपि चक्षुर्ग्रस्तमुक्तं हिनस्ति ।
अथ लिखितमिवैतत्सैन्यमस्पन्दमास्ते नियतमजितवीर्यं जृम्भते जृम्भकास्त्रम् ॥

संपर्को यथा, रघुवंशे —

तं वीक्ष्य वेपथुमती सरसाङ्गयष्टिर्निक्षेप एव पदमुद्धृतमुद्वहन्ती ।
मार्गाचलव्यतिकराकुलितेव सिन्धु श्शैलाधिराजतनया न ययौ न तस्थौ ॥

अनुगमो यथा, रघुवंशे —

बाहुप्रतिष्टम्भविवृद्धमन्युरभ्यर्णमागस्कृतमस्पृशद्भिः ।
राजा स्वतेजोभिरदह्यतान्तर्भोगीव मन्त्रप्रतिरुद्धवीर्यः ॥

श्रमानुरागाद्यपेक्षमनःक्षोभजन्मा वपुर्जलोद्भेदस्स्वेदः । तज्जन्म यथा, कुमारसम्भवे —

हिमव्यपायाद्विशदाधराणा मापाण्डुरीभूतमुखच्छवीनाम् ।
स्वेदोद्गमः किंपुरुषाङ्गनानां चक्रे पदं पत्रविशेषकेषु ॥

अनुबन्धो यथा, किरातार्जुनीये —

तस्याहवायासविलोलमौलेस्संरम्भताम्रायतलोचनस्य ।
निर्वापयिष्यन्निव रोषतप्तं संस्नापयामास मुखं निदाघः ॥

प्रकर्षो यथा —

करस्पर्शानन्दात्पुलकितवधूरोजकलशे श्रमाम्भो वामार्धे वमति मदनाकूतसुलभम् ।
विभोर्वारं वारं कृतसमधिकोद्धूलनविधिस्तनौ भस्मस्नानं कथमपि समाप्तं विजयते ॥

सम्पर्को यथा, किरातार्जुनीये —

प्राप्य मन्मथमदादतिभूमिं दुर्वहस्तनभरास्सुरतस्य ।
शश्रमुः श्रमजलार्द्रललाटश्लिष्टकेशमसितायतकेश्यः ॥

अनुगमो यथा, रघुवंशे —

सुरतश्रमवारिबिन्दवो नतु तावद्विरमन्ति ते मुखे ।
स्वयमस्तमितास्यहो बत क्षयिणां देहभृतामसारतः ॥

हर्षादिजन्मावास्सङ्गः स्वरभेदः । तस्य जन्म यथा —

वासिष्ठैस्सुकृतोद्भवोऽध्वरशतैरस्त्यग्निकुण्डोद्भवो
भूपालः परमार इत्यधिपतिस्ससाब्धिकांचेर्भुवः ।
अद्याप्यद्भुतहर्षगद्गदगिरो गायन्ति यस्योद्भटं
विश्वामित्रजयोर्जितस्य भुजयोर्विस्फूर्जितं गुर्जराः ॥

अनुबन्धो यथा, रघुवंशे —

विललाप स बाष्पगद्गदं सहजामप्यपहाय धीरताम् ।
अभितप्तमयोऽपि मार्दवं भजते कैव कथा शरीरिषु ॥

प्रकर्षो यथा —

आनन्दाश्रुतरङ्गलोचनयुगं मार्गार्पितं बिभ्रती हर्षाद्गद्गदया गिरा परिजनं व्यापारयन्ती मुहुः ।
सैषास्माशयनिर्विकल्पहृदया सौख्याच्चिरप्रार्थितादम्बा निष्करुणेन दग्धविधिना दूरं विसंवादिता ॥

संपर्को यथा —

पिपिप्रिय सससस्वयं मुमुमुखासवं देहि मे तततत्यज दुदुद्रुतं भभभभाजनं काञ्चनम् ।
इति स्खलितजल्पितं मदवशात्कुरङ्गीदृशः प्रगे हसितहेतवे सहचरीभिरध्यैयत ॥

अनुगमो यथा, शिशुपालवधे —

पाणिपल्लवविधूननमन्तः सीत्कृतानि नयनार्धनिमेषाः ।
योषितां रहसि गद्गदवाचामस्त्रतामुपययुर्मदनस्य ॥

भयानुरागाद्यपेक्षितचित्तविक्षोभजः कम्पो वेपथुः । तज्जन्म यथा —

मा गर्वमुद्वह कपोलतले चकास्ति कान्तस्वहस्तलिखिता मम मञ्जरीति ।
अन्यापि किं सखि न भाजनमीदृशानां वैरी नचेद्भवतु वेपथुरन्तरायः ॥

अनुबन्धो यथा, मालतीमाधवे —

रम्भोरु संहर भयं क्षमते विकारमुत्कम्पिनस्स्तनतटस्य न मध्यभागः ।
इत्थं त्वयैव कथितप्रणयप्रसादसङ्कल्पनिर्वृतिषु संस्तुत एष दासः ॥

प्रकर्षो यथा, रत्नावल्याम् —

आतङ्कश्रममाध्वसव्यतिकरोत्कम्पः कथं सह्यतामङ्गैर्मुग्धमयूखपुष्परुचिभिर्लावण्यसारैरयम् ।
आनद्धस्तनकुम्भकुड्मलगुरुश्वासामुखं नश्यते मध्यस्य त्रिवलीतरङ्गकलुषो भङ्गः प्रिये माच भूत् ॥

सम्पर्को यथा, मालतीमाधवे —

वारंवारं तिरयति दृशावुद्गतो बाष्पपूरस्तत्सङ्कल्पोपहितजडिमस्तम्भमभ्येति गात्रम् ।
सद्यस्स्विद्यन्नयमविरतोत्कम्पलोलांगुलीकः पाणिर्लेखा विधिषु नितरां वर्तते किं करोमि ॥

अनुगमो यथा —

प॰फुरिओ॰ठइं त॰खणणि॰दरिअरुभिरमह्॰क्खदं ।
उक्खुडिअकं णोलंपलह॰थं दसणकेसरं मुहकमलं ॥

घर्षणानुरागादिजन्मा मनस्सङ्कोचो व्रीडा । तस्या जन्म यथा, रघुवंशे —

तयोरपाङ्गप्रतिसारितानि किञ्चिद्व्यवस्थापितसंहृतानि ।
ह्रीयन्त्रणामानशिरे मनोज्ञामन्योन्यलोलानि विलोचनानि ॥

अनुबन्धो यथा, वेणीसंहारे —

अद्यैवावां रणमुपगतौ तातमम्बां च दृष्ट्वा घ्रातस्ताभ्यां शिरसि विनतोऽहं च दुश्शासनश्च ।
तस्मिन्बाले प्रसभमरिणा प्रापिते तामवस्थां पार्श्वं पित्रोरपगतघृणः किन्नु वक्ष्यामि गत्वा ॥

प्रकर्षो यथा —

द्विषन्निहतरक्षसां सुतसुहृद्वधूबान्धवप्रलापमतिदुस्सहं प्रथितखेदमाकर्णयन् ।
निजान्यपि मुखान्यहो नमितकन्धरो दुर्मना नसंप्रति दशाननस्सुचिरमीक्षते लज्जया ॥

सम्पर्को यथा —

प्रत्यग्रारिकृताभिमन्युनिधनप्रोद्भूततीव्रक्रुधः
कीर्णा बाष्पकणैः पतन्ति धनुषि व्रीडाजडा दृष्टयः ।
पार्थस्याकृतशात्रवप्रतिकृते रन्तश्शुचा मुह्यते
हा वत्सेति गिरस्स्फुरन्ति न पुनर्निर्यान्ति कण्ठाद्बहिः ॥

अनुगमो यथा —

केयूरीकृतकङ्कणावलिरसौ कर्णावतंसीकृतव्यालोलालकपद्धतिःपथि पुरोबद्धाञ्जलिःपृच्छति ।
यावत्किञ्चिदुदन्तमात्मकमितुस्तावत्सएवेत्यथ व्रीडावक्रितकण्ठनालमबला कैःकैर्नभिन्नारसैः ॥

इङ्गिताकारगोपनमवहित्थम् । तस्य जन्म यथा, शाकुन्तले —

क्व वयं क्व परोक्षमन्मथो मृगशावैस्सममेधितो जनः ।
परिहासविजल्पितं सखे परमार्थेन न गृह्यतां वचः ॥

अनुबन्धो यथा, कुमारसम्भवे —

एवंवादिनि देवर्षौ पार्श्वे पितुरधोमुखी । लीलाकमलपत्राणि गणयामास पार्वती ॥

प्रकर्षो यथा, गाथासप्तशत्याम् —

पाअडिअणेहसब्भावणिब्भरतीएजहतुमंदिट्ठो । संवरणवावडाए अण्णो विजणोतहच्चेअ ॥
[ प्रकटितस्नेहसद्भावनिरन्तरया यथा त्वं दृष्टः । संवरणव्यापृतया अन्योऽपि जनस्तथैव ॥ ]

संपर्को यथा, शाकुन्तले —

अभिमुखे मयि संहृतमीक्षितं हसितमन्यनिमित्तकृतोदयम् ।
विनयवारितवृत्तिरतस्तया न विवृतो मदनो नच संवृतः ॥

अनुगमो यथा —

प्रम्लानोत्पलकोमले सखि दृशौ नीलाञ्जनेनाञ्चिते
कर्पूरच्छुरणाच्च गण्डफलके संवर्गिकः पाण्डिमा ।
श्वासास्सन्तु च कन्दुकभ्रमिभुवः किन्तु प्रभावाहिना-
मङ्गानां कृशिमानमुत्कटममुं को नाम नोत्प्रेक्षते ॥

मनसोऽस्थैर्यं चपलता । तस्या जन्म यथा, रघुवंशे —

आलोकमार्गं सहसा व्रजन्त्या कयाचिदुद्वेष्टनवान्तमाल्यः ।
बन्धुं न सम्भावित एव तावत्करेण रुद्धोऽपि च केशपाशः ॥

अनुबन्धो यथा, रघुवंशे —

प्रसाधितालम्बितमग्रपादमुत्क्षिप्य काचिद्द्रवरागमेव ।
उत्सृष्टलीलागति रागवाक्षादलक्तकाङ्कां पदवीं ततान ॥

प्रकर्षो यथा, रघुवंशे—

विलोचनं दक्षिणमञ्जनेन संभाव्य तद्वञ्चितवामनेत्रा ।
तथैव वातायनसन्निकर्षं ययौ शलाकामपरा वहन्ती ॥

संपर्को यथा, रघुवंशे —

जालान्तरप्रेषितदृष्टिरन्या प्रस्थानभिन्नां नवबन्धनीवीम् ।
नाभिप्रविष्टाभरणप्रभेण हस्तेन तस्थाववलम्ब्य वासः ॥

अनुगमो यथा, रघुवंशे —

तासां मुखैरासवगन्धगर्भैर्व्याप्तान्तरास्सान्द्रकुतूहलानाम् ।
विलोलनेत्रभ्रमरैर्गवाक्षास्सहस्रपत्राभरणा इवासन् ॥

शृङ्गारादिभिर्मनसः क्रियाविद्वेष आलस्यम् । तस्य जन्म यथा —

णिद्दालसपरिघुम्मिरतस्सवलत्थततार आलोआ ।
कामस्सवि दुव्विसहा दिठिणिवाआ ससिमुहीण ॥

[ निद्रालसपरिघूर्णनशीलत्र्यश्रवलदर्धतारकालोकाः । कामस्यापि दुर्विषहा दृष्टिनिपाताश्शशिमुख्याः ॥]

अनुबन्धो यथा —

आर्द्रास्स्रजो मलयजोदकमच्छमेकं वासश्च वासवरिपुर्मनृपेऽलसाङ्गः ।
सञ्चिक्लिशे कलितरुद्रनिकेतनाद्रिभारेण तत्क्षणमसौ मणिभूषणानाम् ॥

प्रकर्षो यथा —

घरिणीए घणत्थणपेळ्ळणसुहपडिअस्सहोतपहिअस्स ।
अवसठणंगारअवारविट्ठि दिअहासु सुहावे॰ति ॥

[ गृहिण्या घनस्तनपीडनसुखपतितस्य भविष्यत्पथिकस्य ।
अपशकुनाङ्गारक मां विष्टिदिवसास्सुखयन्ति ॥ ]

सम्पर्को यथा, मालतीमाधवे —

अलसवलितमुग्धस्निग्धनिस्पन्दमन्दैरधिकविकसदन्तर्विस्मयस्मेरतारैः ।
हृदयमशरणं मे पक्ष्मलाक्ष्याःकटाक्षैरपहृतमपविद्धं पीतमुन्मूलितं च ॥

अनुगमो यथा, वेणीसंहारे —

उत्तिष्ठन्त्या रतान्ते भरमुरगपतौ पाणिनैकेन कृत्वा
धृत्वा चान्येन वासो विलुलितकबरीभारमंसे वहन्त्याः ।
भूयस्तत्कालकान्तिद्विगुणितसुरतप्रीतिना शौरिणा व-
श्शय्यामालिङ्ग्य नीतं वपुरलसलसद्बाहु लक्ष्म्याः पुनातु ॥

इन्द्रियाणां निमीलनं निद्रा । तस्या जन्म यथा —

पृष्ठभ्राम्यदमन्दमन्दरगिरिग्रावाग्रकण्डूयनान्निद्रालोःकमठाकृतेर्भगवतश्श्वासानिलःपातु वः।
यत्संस्कारबलानुवर्तनवशाद्वेलाच्छलेनाम्भसां यातायातमहर्निशं जलनिधेर्नाद्यापि
विश्राम्यति ॥

अनुबन्धो यथा, किरातार्जुनीये —

आसादिता तत्प्रथमं प्रसह्य प्रगल्भतायाः पदवीं हरन्ती ।
सहैव भीमा विदधे गणानां निद्रा निवासं प्रतिभा गुणस्य ॥

प्रकर्षो यथा, रघुवंशे —

ततो धनुष्कर्षणमूढहस्त मेकान्तपर्यस्तशिरस्त्रजालम् ।
तस्थौ ध्वजस्तम्भनिषण्णदेहं निद्राविधेयं नरदेवसैन्यम् ॥

सम्पर्को यथा, किरातार्जुनीये —

अंसस्थलैः केचिदभिन्नधैर्याः स्कन्धेषु संश्लेपवतां तरूणाम् ।
मदेनमीलन्नयनास्सलीलं नागा इव स्रस्तकरा निषेदुः ॥

अनुगमो यथा, शिशुपालवधे —

प्रहरकमपनीय स्वं विनिद्रासतोच्चैःप्रतिपदमुपहूतः केनचिज्जागृहीति ।
मुहुरविशदवर्णान्निद्रया शून्यशून्यां ददद्पिगिरमन्तर्बुध्यते नो मनुष्यः ॥

निद्रादिकार्यं सुप्तम् । तस्य जन्म यथा, शिशुपालवधे —

आश्लेषिणःपृथुतरक्रमपीतशीतमायामिनीं घनमुदो रजनीर्युवानः ।
ऊर्वोर्मुहुर्वलनबन्धनसन्धिलीलपादान्तसंवलिततूलपटास्स्वपन्ति ॥

अनुबन्धो यथा —

ओसुचइद्दिण्णपडिव०खवेअणं वसढिलेहिअंगेहिं ।
णिव्वन्ति असुरअरसाणुबन्धसुभणि०भरं सुहा ॥

प्रकर्षो यथा —

लघुनि तृणकुटीरे क्षेत्रकोणे यवानां नवकमलपलाशस्रस्तरे सोपधाने ।
परिहरति सुषुप्तिं हालिकद्वन्द्वमारात्कुचकलशमहोष्माबद्धरेखस्तुषारः ॥

सम्पर्को यथा, कुमारसम्भवे —

त्रिभागशेषासु निशासु च क्षणं निमील्य नेत्रे सहसाप्यबुध्यत ।
क्व नीलकण्ठ व्रजसीत्यलक्ष्यवागसत्यकण्ठार्पितबाहुबन्धना ॥

अनुगमो यथा —

अकुणंतो०छिअमाणं णिसासु सुहसुत्तदरविबु०आणं ।
सु०णअइअपासपरिभासणवेअणं जइसिवेजाणंतो ॥

निद्रासुप्तेषु चेतनालाभः प्रबोधः । तस्य जन्म यथा, कुमारसम्भवे —

स व्यबुध्यत बुधस्तवोचितश्शातकुम्भकमलाकरैस्समम् ।
मूर्छनापरिगृहीतकैशिकैःकिन्नरैरुषसि गीतमङ्गलः ॥

अनुबन्धो यथा —

प्रत्यग्रोन्मेषजिह्मा क्षणमनभिमुखीरत्नदीपप्रभाणा-
मात्मव्यापारगुर्वीजनितजललवा जृम्भितैस्साङ्गभङ्गैः ।

नागाङ्कं मोक्तुमिच्छोश्शयनमुरुफणाचक्रवाळोपधानं
निद्राच्छेदाभिताम्रा चिरमवतु हरेर्दृष्टिराकेकरा वः ॥

प्रकर्षो यथा, शिशुपालवधे —

क्षणशयितविबुद्धाः कल्पयन्तःप्रयोगा नुदधिमहतिराज्ये काव्यवद्दुर्विगाहे ।
गहनमपररात्रप्राप्तबुद्धिप्रसादाः कवय इव महीपाश्चिन्तयन्त्यर्थजातम् ॥

सम्पर्को यथा, रघुवंशे –

उषसि स गजयूथकर्णतालैः पटुपटहध्वनिभिर्विनीतनिद्रः ।
अरमतमधुरस्वराणि शृण्वन् विहगविकूजितवन्दिमङ्गलानि ॥

अनुगमो यथा —

विस्रम्भादुपसृज्य पीडननमत्प्रोत्तुङ्गपीनस्तने श्वासावे .... सि ।
ईषन्मीलितनेत्रया श्लथभुजापाशं चिरादागतो नाथन्यःपरिरभ्यते दयितया
जाग्रत्स्वपत्या निशि ॥

चतुर्विंशतिरित्येते भावा हर्षादिसंज्ञकाः । अतःपरं प्रवक्ष्यन्ते विप्रलम्भसमाश्रयाः ॥
चतुर्विंशतिरुत्कण्ठा चिन्तारभृत्यादयोऽपरे ॥

तत्र प्रायेण विप्रलम्भाश्रयभावचतुर्विंशादिकं उदाह्रियते । मनसो मह्याप्तिरुत्कण्ठा ।
तस्या जन्म यथा —

देशैरन्तरिता शतैश्च सरितामुर्वीभृतां काननैर्यत्नेनापि नयाति लोचनपथं कान्तेति जानन्नपि।
उद्ग्रीवश्चरणार्धरुद्धवसुधःकृत्वाश्रुपूर्णे दृशौ तामाशां पथिकस्तथापि किमपि ध्यायन्मुहुर्वीक्षते॥

अनुबन्धो यथा, कुमारसम्भवे —

पशुपतिरपि तान्यहानि कृच्छ्रा दगमयदद्रिसुतासमागमोत्कः ।
कमपरमवशं न विप्रकुर्यु र्विभुमपि तं यदमी स्पृशन्ति भावाः ॥

प्रकर्षो यथा, मालतीमाधवे –

प्रयान्तीव प्राणास्सुतनु हृदय ध्वंसत इव ज्वलन्तीवाङ्गानि प्रसरति समन्तादिव तमः ।
त्वरा प्रस्तावोऽयं नखलु परिवासस्य विपर्यस्तदक्ष्णोरानन्दं वितर मयि माभूरकरुणा ॥

सम्पर्को यथा, मालतीमाधवे —

भूयोभूय स्सविधनगरीरथ्यया पर्यटन्त दृष्ट्वा दृष्ट्वा भवनवलभीतुङ्गवातायनस्था ।
साक्षात्कामं नवमिव रतिर्मालती माधवं यद्गाढोत्कण्ठा लुलितलुलितैरङ्गकैस्ताम्यतीति ॥

अनुगमो यथा, शाकुन्तले —

यास्यत्यद्य शकुन्तलेति हृदयं संस्पृष्टमुत्कण्ठया
कण्ठस्तम्भितबाष्पवृत्तिकलुषश्चिन्ताजडं दर्शनम् ।
वैक्लव्यं मम तावदीदृशमहो स्नेहादरण्यौकसः
पीड्यन्ते गृहिणः कथं नु तनयाविश्लेषदुःखैर्नवैः ॥

दृष्टश्रुतानुमितेषु प्राप्तिपर्याहारार्थमुपायपरिभावना मनसश्चिन्ता । तज्जन्म यथा —

सन्ध्या रागवती स्वभावकुटिला गङ्गा द्विजिह्वःफणी
वक्राङ्गैर्मलिनश्शशी च सततं जात्यैव मूर्खो वृषः ।
इत्थं दुर्जनसङ्कटे पतिगृहे वासः कथं सह्यतां
देव्याः पाणिनिविष्टमास्यमसकृच्चिन्तान्वितं पातु वः ॥

अनुबन्धो यथा, मेघसन्देशे —

अङ्गेनाङ्गं प्रतनु तनुना गाढतप्तेन तप्तं सास्रेणास्रद्रवमविरतोत्कण्ठमुत्कण्ठितेन ।
उष्णोच्छ्वासं समधिकतरोच्छ्वासिना दूरवर्ती सङ्कल्पैस्तैर्विशति विधिना वैरिणा रुद्धमार्गः ॥

प्रकर्षो यथा, मालतीमाधवे —

लीनेव प्रतिबिम्बितेव लिखितेवोत्कीर्णरूपेवचप्रत्युप्तेवच वज्रलेपघटितेवान्तर्निखातेव च ।
सा नश्चेतसि कीलितेव विशिखैश्चेतोभुवःपञ्चभिश्चिन्तासन्ततितन्तुजालनिबिडस्यूतेवलग्ना प्रिया ॥

संपर्को यथा —

हृदयान्नापयातोऽसि दिक्षु सर्वासु दृश्यसे । वत्स राम गतोऽसीति सन्तापादनुमीयसे ॥

अनुगमो यथा —

व्रीहिस्तम्बकरः प्रभूतपयसः प्रत्यागता धेनवः
प्रत्युज्जीवितमिक्षुणा भृशमिति ध्यायन्नपेतान्यधीः ।
सान्द्रोशीरकुटुम्बिनीस्तनभरव्यालुप्तघर्मक्लमो
देवे नीरमुदारमुज्झति सुखं शेते निशि ग्रामणीः ॥

मनसि स्वानुभूतार्थनिष्पत्तिः प्रतिबिम्बितस्मृतिः । तस्या जन्म यथा, रघुवंशे —

अत्रानुगोदं मृगयानिवृत्तस्तरङ्गवातेन विनीतखेदः ।
रहस्त्वदुत्सङ्गनिषण्णमूर्धा स्मरामि वानीरगृहेषु सुप्तम् ॥

अनुबन्धो यथा, रघुवंशे —

पूर्वानुभूतं स्मरता च रात्रौ कम्पोत्तरं भीरु तवोपगूढम् ।
गुहाविसारीण्यतिवाहितानि मया कथंचिद्घनगर्जितानि ॥

प्रकर्षो यथा, उत्तररामचरिते —

समयरसवर्तत इहैव यत्र मां समनन्दयन्सुमुखि गौतमार्पितः ।
अयमागृहीतकमनीयकङ्कणस्तव मूर्तिमानिव महोत्सवः करः ॥

संपर्को यथा, उत्तररामचरिते —

पुरा यत्र स्रोतःपुलिनमधुना तत्र सरितां विपर्यासं यातो घनविरलभावः क्षितिरुहाम् ।
बहोर्दृष्टं कालादपरमिव मन्ये वनमिदं निवेशश्शैलानां तदिदमिति बुद्धिं द्रढयति ॥

अनुगमो यथा, शाकुन्तले —

इतः प्रत्यादेशात्स्वजनमनुगन्तुं व्यवसिता ततस्तिष्ठेत्युच्चैर्वदति गुरुशिष्ये गुरुसमे ।
पुनर्दृष्टिं बाष्पप्रसरकलुषामर्पितवती मयि क्रूरे यत्तत्सविषमिव शल्यं दहति माम् ॥

मनःप्रतिकूलेषु तैक्ष्ण्यप्रतिबन्धः क्रोधः । तस्य जन्म यथा, कुमारसम्भवे —

तपःपरामर्शविवृद्धमन्योर्भ्रूभङ्गदुष्प्रेक्ष्यमुखस्य तस्य ।
स्फुरन्नुदर्चिस्सहसा तृतीया दक्ष्णः कृशानुः किल निष्पपात ॥

अनुबन्धो यथा, वेणीसंहारे —

यो यश्शस्त्रं बिभर्ति स्वभुजगुरुमदः पाण्डवीनां चमूनां
यो यः पाञ्चालगोत्रे शिशुरधिकवया गर्भशय्यां गतो वा ।
यो यस्तत्कर्मसाक्षी चरति मयि रणे यश्च यश्च प्रतीपः
क्रोधान्धस्तस्य तस्य स्वयमपि जगतामन्तकस्यान्तकोऽहम् ॥

प्रकर्षो यथा, वेणीसंहारे —

कृष्टा येन विलोलकेशनिवहा पाञ्चालराजात्मजा येनास्याःपरिधानमप्यपहृतं राज्ञां गुरूणां पुरः ।
यस्योरस्थलशोणितासवमहं पातुं प्रतिज्ञातवान्सोऽयं मद्भुजपञ्जरे निपतितस्संरक्ष्यतां कौरवः ॥

सम्पर्को यथा —

इयं सा लोलाक्षी त्रिभुवनललामैकवसतिरसचायं दुष्टात्मा स्वसुरपकृतं येन मम तत् ।
इतस्तीव्रःकामो गुरुरयमितःक्रोधदहनःकुतो वेषश्चायं कथमिदमिति भ्राम्यति मनः ॥

अनुगमो यथा, महावीरचरिते —

अमृताध्मातजीमूतस्निग्धसंहननस्य ते। कुठारः कम्बुकण्ठस्य कष्टं कण्ठे पतिष्यति ॥

कृतापराधेषु क्रोधाप्रशान्तिरमर्षः। तस्य जन्म यथा, महावीरचरिते –

अर्थित्वे प्रकटीकृतेऽपि न फलप्राप्तिःप्रभोःप्रत्युत
द्रुह्यन्दाशरथिर्विरुद्धचरितो युक्तस्तया कन्यया।
उत्कर्षश्च परस्य मानयशसोर्विस्रंसनं चात्मनः
स्त्रीरत्नं च जगत्पतिर्दशमुखो दृप्तः कथं मृष्यते ॥

अनुबन्धो यथा —

न्यक्कारो ह्ययमेवमे यदरयस्तत्राप्यसौ तापसस्सोऽप्यत्रैव निहन्ति राक्षसहताञ्जीवत्यहोरावणः।
धिग्धिक्छक्रजितं प्रबोधितवता किंकुम्भकर्णेनवा स्वर्गग्रामटिकाविलुण्ठनपरैःपीनैः
किमेभिर्भुजैः ॥

प्रकर्षो यथा, वेणीसंहारे —

तातं शस्त्रग्रहणविमुखं निश्चयेनोपलभ्य त्यक्त्वा शङ्कां खलु निदधतः पाणिमस्योत्तमाङ्गे।
अश्वत्थामा करधृतधनुःपाण्डुपाञ्चालसेनातूलोत्क्षेपप्रलयपवनः किं नयातस्स्मृतिं ते ॥

सम्पर्को यथा, महावीरचरिते –

यत्क्षत्रियेष्वपि पुनस्स्थितमाधिपत्यं तैरेव संप्रति धृतानि पुनर्धनूंषि।
उन्माद्यतां भुजमदेन मयापि तेषामुच्छृंखलानि चरितानि पुनश्श्रुतानि ॥

अनुगमो यथा, वेणीसंहारे —

लाक्षागृहानलविषान्नसभाप्रवेशैः प्राणेषु वित्तनिचयेषु च नः प्रहृत्य।
आकृष्टपाण्डववधूपरिधानकेशास्स्वस्था भवन्ति मयि जीवति धार्तराष्ट्राः ? ॥

पराभ्युदयासहनमसूया। तस्या जन्म यथा, रघुवंशे —

निर्घातोग्रैः कुञ्जलीनान् जिघांसु र्ज्यानिर्घोषैः क्षोभयामास सिंहान्।
, नूनं तेषामभ्यसूयापरोऽभू द्वीर्योदग्रे राजशब्दे मृगेषु ॥

अनुबन्धो यथा, रघुवंशे —

हरिर्यथैकः पुरुषोत्तमस्स्मृतो महेश्वरस्त्र्यम्बक एव नापरः।
तथा विदुर्मां मुनयश्शतक्रतुं द्वितीयगामी न हि शब्द एष नः ॥

प्रकर्षो यथा, रघुवंशे –

प्रमन्यवः प्रागपि कोसलेन्द्रे प्रत्येकमात्तस्वतया बभूवुः ।
ततो नृपाश्चक्षमिरे समेतास्त्रीरत्नलाभं न तदात्मजस्य ॥

संपर्को यथा, उत्तररामचरिते –

वन्द्यास्ते न विचारणीयचरितास्तिष्ठन्तु हुं वर्तते
सुन्दस्त्रीनिधनेऽप्यखण्डयशसो लोके महान्तो हि ते ।
यानि त्रीणि कुतोमुखान्यपि पदान्यासन् खरायोधने
यद्वा कौशलमिन्द्रसूनुदमने तत्राप्यभिज्ञो जनः ॥

अनुगमो यथा, रघुवंशे —

असक्तमद्रिष्वपि सारवत्तया न मे त्वदन्येन विसोढमायुधम् ।
अवेहि मां प्रीत मृतेतुरङ्गमादृतं वृणीष्वेति तमाह वासवः ॥

समानेषु मानदानाद्यमर्षणमीर्ष्या । तस्या जन्म यथा —

गोत्रंगोत्रमुपैति यश्चलतया व्यापारमूलात्प्रभो श्रद्धा याच पितुर्ममैव कटके दृष्ट्वावहन्तीजलम् ।
सोऽयं सागर .... मूर्धानमारोपितेत्युक्तःकोपकषायपाटलदृशा गौर्या हरः पातु वः ॥

अनुबन्धो यथा —

कुविआ अ सच्चहामा समेवि बहुआणं णवरमाणक्खलणे ।
पाअडिअहिअअसारो पेमसङ्करिसो पअट्टई मण्णू ॥

[कुपिता च सत्यभामा समेऽपि वधूनां केवलमानक्षरणे । प्रकटितहृदयसारः प्रेमसङ्घर्षःप्रवर्तते मन्युः ॥]

प्रकर्षो यथा, वेणीसंहारे —

अयं यावत्पापो न निधनमुपेयादरिशरैः परित्यक्तं तावत्प्रियमपि मयास्त्रं रणमुखे ।
बलानां नाथेऽस्मि न्परिकुपितभीमार्जुनभये समुत्पन्ने राजा प्रियसखममुं वेत्ति समरे ॥

संपर्को यथा, अमरुकशतके —

लाक्षालक्ष्मललाटपट्टमभितःकेयूरमुद्रा गले वक्त्रे कज्जलकालिमा नयनयोस्ताम्बूलरागोऽपरः ।
दृष्ट्वा कोपविधायिमण्डनमिदं प्रातश्चिरं प्रेयसःक्रीडातामरसोदरे मृगदृशश्वासास्समाप्तिंगताः ॥

अनुगमो यथा, कुमारसम्भवे —

निर्विभुज्य दशनच्छदं ततो वाचि भर्तुरवधीरणा परा ।
शैलराजतनयासमीपगामाललाप विजयामहेतुकम् ॥

दोषकोपाद्दण्डपारुष्यमुग्रता । तस्या जन्म यथा, विक्रमोर्वशीये —

आत्मनो वधमाहर्ता क्वासौ विहगतस्करः । येन तत्प्रथमं स्तेयं गोप्तुरेव गृहे कृतम् ॥

अनुबन्धो यथा —

तेनाथनाथ दुरुदाहरणातपेन सौम्यापि नाम परुषत्वमभिप्रपन्नः ।
जज्वाल तीक्ष्णविशदाऽसहसोद्गिरन्ती वागर्चिषा पवनकान्तशिलेव सीता ॥

प्रकर्षो यथा —

कृतमनुमतं दृष्टं वा यैरिदं गुरुपातकं मनुजपशुभिर्निर्मर्यादैर्भवद्भिरुदायुधैः ।
नरकरिपुणा सार्धं तेषां सभीमकिरीटिनामयमहमसृङ्मेदोमांसैः करोमि दिशां बलिम् ॥

सम्पर्को यथा, मालतीमाधवे —

प्रणयसखीसलीलपरिहासरसाधिगतैर्ललितशिरीषपुष्पहननैरपि ताम्यति यत् ।
वपुषि वधाय तत्र तव शस्त्रमुपक्षिपतः पततु शिरस्यकाण्डयमदण्ड इवैष भुजः ॥

अनुगमो यथा —

क्व वत्सलः क्व च तपस्विजनस्य हन्ता कन्याविटःपतिरसौ परिरक्षतु त्वाम् ।
श्वेता पपात चरिता वनवर्तिकेव किं चेष्टते ननु चिरात्कवलीकृतासि ॥

कामाद्यभिनिवेशातिशयादनियन्त्रप्रलाप उन्मादः । तस्य जन्म यथा, महावीरचरिते —

एह्येहि वत्स रघुनन्दन रामभद्र चुम्बामि मूर्धनि चिराय परिष्वजे त्वाम् ।
आरोप्य वा हृदि दिवानिशमुद्वहामि वन्देऽथवा चरणपुष्करकद्वयं ते ॥

अनुबन्धो यथा, विक्रमोर्वशीये —

तरङ्गभ्रूभङ्गा क्षुभितविहगश्रेणिरशना विकर्षन्ती फेनं वसनमिव संरम्भशिथिलम् ।
यथाविद्धं याति स्खलितमभिसन्धाय बहुशो नदीभावेनेयं ध्रुवमसहना सा परिणता ॥

प्रकर्षो यथा —

नवेषु लोध्रप्रसवेषु कान्तिर्दृशः कुरङ्गेषु गजेषु यातम् ।
लतासु नम्रत्वमिति प्रमथ्य व्यक्तं विविक्ता विपिने प्रियास्मिन् ॥

सम्पर्को यथा, विक्रमोर्वशीये —

हंस प्रयच्छ मे कान्तां गतिरस्यास्त्वया हृता । सम्भावितैकदेशेन स्तेयं यदभियुज्यते ॥

अनुगमो यथा —

भ्रमय जलदानम्भोगर्भान्प्रमोदय कोकिलान्कलय शिखिनःकेकोत्कण्ठान्कठोरय केतकान्।
विरहिणि जने मूर्छालब्ध्वा विनोदयति व्यथामकरुणपुनःसंज्ञां व्याधिं विहाय किमीहसे ॥

भयानुरागादिजन्मा मनःशरीराभिषङ्गो व्याधिः। तस्य जन्म यथा, मालतीमाधवे —

यदिन्द्रावानन्दं प्रणयिनि जने वा नभजते व्यनक्त्यन्तस्तापं तदयमतिधीरोऽपि विषमम्।
प्रियंगुश्यामाङ्गप्रकृतिरपि चापाण्डुमधुरं वपुःक्षामंक्षामं वहति रमणीयश्च भवति ॥

अनुबन्धो यथा, मालतीमाधवे —

मनोरोगस्तीव्रो विषमिव विसर्पन्नविरतं प्रमाथी निर्धूमं ज्वलति विधुतः पावक इव।
हिनस्ति प्रत्यङ्गं ज्वर इव गरीयानितइतो नमां त्रातुं तातःप्रभवति नचाम्बा च भवति ॥

प्रकर्षो यथा कुमारसम्भवे —

तदाप्रभृत्युन्मदना पितुर्गृहे ललाटिकाचन्दनधूसरालका।
न जातु बाला लभतेस्म निर्वृतिं तुषारसङ्घातशिलातलेष्वपि ॥

संपर्को यथा, रत्नावल्याम् —

स्थितमुरसि विशालं पद्मिनीपत्रमेत त्कथयति नतथान्तर्मन्मथोत्थामवस्थाम्।
अतिशयपरितापम्लापिताङ्ग्या यथास्यास्स्तनयुगपरिणाहं मण्डलाभ्यां ब्रवीति ॥

अनुगमो यथा, मालतीमाधवे —

इयमवयवैः पाण्डुक्षामैरलंकृतमण्डना कलितकुसुमा बालेवान्तर्लतापरिशोषिणी।
वहतिच वरारोहा रम्यां विवाहमहोत्सवश्रियमुदयिनीमुद्भूतांच व्यनक्ति मनोरुजम् ॥

मनःपीडादिजन्मा शरीरावसादो ग्लानिः। तस्या जन्म यथा, उत्तररामचरिते —

प्रकृत्या रमणीयोऽपि क्षीयमाणः प्रतिक्षणम्। दुःखमावहति प्रातश्शशेरापाण्डुरच्छविः ॥

अनुबन्धो यथा, मालतीमाधवे —

किसलयमिव मुग्धं बन्धनाद्विप्रलूनं हृदयकुसुमशोषी दारुणो दीर्घशोकः।
ग्लपयति परिपाण्डुक्षाममस्याश्शरीरं शरदिज इव घर्मः केतकीगर्भपत्रम् ॥

प्रकर्षो यथा, मालतीमाधवे —

परिमृदितमृणालीम्लानमङ्गं प्रवृत्तिः कथमपि परिवारप्रार्थनाभिः क्रियासु।
कलयतिच हिमांशोर्निष्कलङ्कस्य लक्ष्मीमभिनवकरिदन्तच्छेदकान्तः कपोलः ॥

सम्पर्को यथा, शाकुन्तले –

क्षामक्षामकपोलमाननमुरःकाठिन्यमुक्तस्तनं मध्यःक्षामतरःप्रकामविनतावंसौ छविःपाण्डुरा
शोच्याच प्रियदर्शनाच मदनक्लिष्टेयमालक्ष्यते पत्राणामिव शोषणेन मरुता स्पृष्टालतामाधवी॥

अनुगमो यथा, किरातार्जुनीये —

निपातितेऽधिशिरोधरमायते सममरत्नियुगे युगचक्षुषः ।
त्रिचतुरेषु पदेषु किरीटिना लुलितमौलिमदामिव चरकले ॥

निरतिशयप्रयासजन्मा शरीरायासः श्रमः । तस्य जन्म यथा –

तनुरियं तरलायतलोचने श्वसितकम्पितपीनघनस्तनी ।
श्रममपास्य तपसे गता पुनः किमिति सम्भ्रमकारिणि खिद्यते ॥

अनुबन्धो यथा, मालतीमाधवे —

स्खलयति वचनं ते संश्रयत्यङ्गमङ्गं जनयति मुखचन्द्रोद्भासिनस्स्वेदबिन्दून् ।
मुकुलयतिच नेत्रे सर्वथा सुभ्रु खेदस्त्वयि विलसति तुल्यं वल्लभालोकनेन ॥

प्रकर्षो यथा, शाकुन्तले —

स्रस्तांसावतिमात्रलोहिततलौ बाहू घटोत्क्षेपणा-
दद्यापि स्तनवेपथुं न जहति श्वासाः प्रमाणाधिकाः ।
बद्धं कर्णशिरीषरोधिवदने घर्माम्भसां जालकं
स्तब्धे स्रंसिनि चैकहस्तयमिताः पर्याकुला मूर्धजाः ॥

संपर्को यथा, शाकुन्तले –

औत्सुक्यमात्रमवसाययति प्रतिष्ठा क्लिश्नाति लब्धपरिपालनवृत्तिरेव ।
नैव श्रमापनयनाय नच श्रमाय राज्यं स्वहस्तधृतदण्डमिवातपत्रम् ॥

अनुगमो यथा, किरातार्जुनीये –

निवृत्तवृत्तोरुपयोधरक्लमः प्रवृत्तिनिर्ह्रादिविभूषणारवः ।
नितम्बिनीनां भृशमादधे धृतिं नभःप्रयाणादवनौ परिक्रमः ॥

दैवादिभिरसंरम्भविघातो विषादः । तस्य जन्म यथा, उत्तररामचरिते —

हेलोल्लोलक्षुभितकरुणोज्जृम्भणस्तम्भनार्थं यो यो यत्नःकथमपि समाधीयते तन्नमन्तः ।
भित्वा भित्वा प्रसरति बलात्कोऽपि चेतोविकारस्तोयस्यैवाप्रतिहतरवस्सैकतं सेतुमोघः ॥

अनुबन्धो यथा, उत्तररामचरिते –

व्यर्थं यत्र कपीन्द्रसख्यमपि मे क्लेशः हरीणां वृथा
प्रज्ञा जाम्बवतोऽपि यत्र न गतिः पुत्रस्य वायोरपि ।
मार्गं यत्र न विश्वकर्मतनयः कर्तुं नलोऽपि क्षमः
सौमित्रेरपि पत्रिणामविषये तत्र प्रिये क्वासि मे ॥

प्रकर्षो यथा, वेणीसंहारे —

हते द्रोणे च भीष्मे च यदासादवलम्बनम् । वत्सस्य मे सुहृत्प्रेयान् राधेयस्सोऽप्ययं हतः ॥

संपर्को यथा, वेणीसंहारे –

तीर्णे भीष्ममहोदधौ कथमपि द्रोणानले निर्वृते
कर्णाशीविषभोगिनि प्रशमिते शल्ये च याते दिवम् ।
भीमेन प्रियसाहसेन रभसादल्पावशेषे जये
सर्वे जीवितसंशयं वयममी वाचा समारोपिताः ॥

अनुगमो यथा, मालतीमाधवे –

चिरादाशातन्तुस्त्रुटतु बिसिनीसूत्रभिदुरो महानाधिर्व्याधिर्निरवधिरिदानीं प्रसरतु ।
प्रतिष्ठामव्याजां व्रजतु मयि पारिप्लवधुरा विधिस्स्वास्थ्यं धत्तां भवतु कृतकृत्यश्च मदनः ॥

इतिकर्तव्यतामनालोको मोहः । तस्य जन्म यथा, मालतीमाधवे —

न यत्र प्रत्याशामनुपतति नोवारहयति प्रतिक्षिप्तं चेतः प्रविशति च मोहान्धतमसम् ।
अकिञ्चित्कुर्वाणाःपशव इव तस्यां वयमहो विधातुर्वामत्वाद्विपदि परिवर्तामह इमे ॥

अनुबन्धो यथा, मालतीमाधवे —

पिहितनयनो बाष्पाम्भोभिर्मुहुरत्वतिसम्भृतैर्धनुषि विनमन्मध्ये स्विन्नांविधाय तनुं ततः ।
शिथिलवरणोद्धारः कृच्छ्रात्पदात्पदमावह न्कथमयमहो चिन्ताशून्यो न याति न तिष्ठति ॥

प्रकर्षो यथा, उत्तररामचरिते —

विनिश्चेतुं शक्यो न सुखमिति वा दुःखमितिवा प्रमोदो निद्रावा किमुविषविसर्पःकिमुमदः ।
तव स्पर्शे स्पर्शे मम हि परिमूढेन्द्रियगणो विकारश्चैतन्यं भ्रमयति च संमीलयति च ॥

सम्पर्को यथा, उदात्तराघवे –

वत्सस्याभयवारिधेः प्रतिभयं शङ्के कुतो राक्षसात्
त्रस्तश्चैप मुनिर्विरौति मनसोऽप्यस्त्येव मे सम्भ्रमः ।

माहासीज्जनकात्मजामिति गुरुस्नेहान्मुहुर्याचते
न स्थातुं नच गन्तुमाकुलतया मूढस्य मे निश्चयः ॥

अनुगमो यथा, रघुवंशे —

ता राघवं दृष्टिभिरापतन्त्यो नार्यो न जग्मुर्विषयान्तराणि ।
तदा हि सर्वेन्द्रियवृत्तिरासां सर्वात्मना चक्षुरिव प्रविष्टा ॥

इष्टविरहादिभिर्मनोवैधुर्यं शोकः । तज्जन्म यथा, उत्तररामचरिते —

हा हा देवि स्फुटति हृदयं स्रंसते देहबन्धः शून्यं मन्ये जगदविरतज्वालमन्तर्ज्वलामि ।
सीदन्नन्धे तमसि विधुरो मज्जतीवान्तरात्मा विष्वङ्मोहः स्थगयति कथं मन्दभाग्यः करोमि ॥

अनुबन्धो यथा, रघुवंशे —

नवपल्लवसंस्तरेऽपि ते मृदु दूयेत यदङ्गमर्पितम् ।
तदिदं विसहिष्यते कथं तव वामोरु चिताधिरोहणम् ॥

प्रकर्षो यथा, मालतीमाधवे —

प्राणाः प्रयान्ति परितस्तमसावृतेऽस्मिन् मर्मच्छिदो मम रुजः प्रसरन्त्यपूर्वाः ।
अक्ष्णोर्मुखेन्दुमुपधेहि गिरं च देहि हा वत्स मय्यकरुणस्सहसैव मा भूः ॥

सम्पर्को यथा, रघुवंशे —

शापोऽप्यदृष्टतनयाननपद्मशोभे सानुग्रहो भगवता मयि पातितोऽयम् ।
कृष्यां दहन्नपि खलु क्षितिमिन्धनेद्धो बीजप्ररोहजननीं ज्वलनः करोति ॥

अनुगमो यथा, रघुवंशे —

तस्य प्रसह्य हृदयं किल शोकशंकुः प्लक्षप्ररोह इह सौधतलं बबाधे ।
प्राणान्तहेतुमपि तं भिषजामसाध्यं लाभं प्रियानुगमनत्वरया स मेने ॥

सहवासत्यागानुत्कर्षो दैन्यम् । तस्य जन्म यथा, रघुवंशे —

नृपस्य वर्णाश्रमपालनं यत्स एव धर्मो मनुना प्रणीतः ।
निर्वासिताप्येवमतस्त्वयाहं तपस्विसामान्यमपेक्षणीया ॥

अनुबन्धो यथा, शाकुन्तले —

अस्मान्साधु विचिन्त्य संयमधनानुच्चैः कुलं चात्मन-
स्त्वय्यस्याः कथमप्यबान्धवकृतां प्रेमप्रवृत्तिं च ताम् ।

सामान्यप्रतिपत्तिपूर्वकमियं दारेषु दृश्या त्वया
भाग्यायत्तमतःपरं नखलु तद्वाच्यं वधूबन्धुभिः ॥

प्रकर्षो यथा, वेणीसंहारे –

दायादा न ययोर्बलेन गणितास्तौ द्रोणभीष्मौ हतौ
कर्णस्यात्मजमग्रतश्शमयतो भीतं जगत्फल्गुनात् ।
वत्सानां निधने न मे त्वयि रिपुः शेषप्रतिज्ञोऽधुना
मानं वैरिषु मुञ्च तात पितरावन्धाविमौ पालय ॥

सम्पर्को यथा, वेणीसंहारे —

अन्धोऽनुभूतशतपुत्रविपत्तिदुःखश्शोच्यां दशामुपगतस्सतु भार्ययाहम् ।
तस्मिन्नशेषितसुहृद्गुरुबन्धुवर्गे दुर्योधनेऽपि हि कृतो भवता निराशः ॥

अनुगमो यथा –

मानेनेच्छति वारयत्युपशमे क्ष्मामालिखन्त्यां हि मां
स्वातन्त्र्ये परिवृत्य तिष्ठति करौ व्याधूय धैर्ये गते ।
तृष्णे त्वामनुबध्नता फलमियत्प्राप्तं मया यातया
यस्स्पृष्टो न पदा स एव चरणौ स्प्रष्टुं न संमन्यते ॥

निषादादिजन्मकान्तेरन्यथात्व वैवर्ण्यम् । तस्य जन्म यथा, मालतीमाधवे —

उज्वलालोकया स्निग्धा त्वया त्यक्ता न राजते । मलीमसमुखीवर्तिः प्रदीपशिखया यथा ॥

अनुबन्धो यथा, रघुवंशे —

सञ्चारिणी दीपशिखेव रात्रौ यं यं व्यतीयाय पतिंवरा सा ।
नरेन्द्रमार्गाट्ट इव प्रपेदे विवर्णभावं स स भूमिपालः ॥

प्रकर्षो यथा —

सहि साह सुतेण समं अहं पिक अणिग आपहाये॰मि ।
अ॰ण॰चिअदीसइजेणद॰पणेकाविसामुही ॥

सम्पर्को यथा, मालतीमाधवे —

समानप्रेमाणं जनमसुलभं प्रार्थितवतो विधौवामारम्भे मम समुचितैषा परिणतिः ।
तथाप्यस्मिन्दानश्रवणसमयेऽस्याः प्रविगलत्प्रभं प्रातश्चन्द्रद्युतिवदनमन्तर्दहति माम् ॥

अनुगमो यथा, किरातार्जुनीये —

स्वयं साराध्येशं शतमखमखण्डेन तपसा परोच्छित्या लभ्यामभिलषति लक्ष्मीं हरिसुते।
मनोभिरसावेगैः प्रणयविहतिध्वस्तरुचयस्सगन्धर्वा धाम त्रिदशपतिना स्वं प्रतिययुः ॥

प्रतीकाराशयमनोव्याकुलमावेगः। तस्य जन्म यथा, किरातार्जुनीये —

प्रेक्षणीयकमिव क्षणमासन् ह्रीतभंगुरविलोचनपाताः।
सम्भ्रमद्रुतगृहीतदुकूलच्छाद्यमानवपुषस्सुरकान्ताः ॥

अनुबन्धो यथा, किरातार्जुनीये —

अप्रभूतमतनीयसि तन्वी कात्र धाम्नि विहितैकतरोरूः।
क्षौममाकुलकराविकर्षणक्रान्तपल्लवमभीष्टतमेन ॥

प्रकर्षो यथा —

शून्या दिशस्सपदि वीक्ष्य शुचा वराकी मृत्योर्मुखं विशति वा शमयन्निराशाः।
एता मताश्श्वपचपातकदीपरोगादागच्छ .... वरंपकुरिक्षया वः ॥

संपर्को यथा, रत्नावल्याम् —

अलमलमतिमात्रं साहसेनामुना ते त्वरितमयि विमुञ्च त्वं लतापाशमेनम्।
वलितमिव निरोद्धुं जीवितं जीवितेशे क्षणमिह मम कण्ठे बाहुपाशं निधेहि ॥

अनुगमो यथा, रघुवंशे —

संछिन्नबन्धद्रुतयुग्मशून्यं भग्नाक्षपर्यस्तरथं क्षणेन।
रामापरित्राणविहस्तयोधं सेनानिवेशं तुमुलंचकार ॥

दुःखक्रोधावसाननयनजलमश्रु। तस्य जन्म यथा, शाकुन्तले —

उत्पक्ष्मणोर्नयनयोरुपरुद्धवृत्तिं बाष्पं कुरु स्थिरतया विरतानुबन्धम्।
अस्मिन्नलक्षितनतोन्नतभूमिभागे मार्गे पदानि खलु ते विषमीभवन्ति ॥

अनुबन्धो यथा —

किं सुन्दरि प्ररुदितासि ममोपपन्ने वंशस्थितेरधिगमान्महति प्रमोदे।
पीनोन्नतस्तननिपातिभिरानयन्ती मुक्ताफलैर्विरचनां पुनरुक्तमस्त्रैः ॥

प्रकर्षो यथा —

ततःकैरप्युक्ते परिणयविधौ काष्ठमुनिभिः पुराणैरातङ्कग्लपितहृदयेन क्षितिभृताम्।
विना वाचं नैतं क्षणमिति विधायाननमधःपतद्बाष्पाम्भोभिर्लिखितमिव दत्तं प्रतिवचः ॥

संपर्को यथा, उत्तररामचरिते –

अयं तावद्बाष्पस्त्रुटित इव मुक्तामणिसरो विसर्पन्धाराभिर्लुठति धरणीं जर्जरकणः ।
निरुद्धोऽप्यावेगस्स्फुरदधरनासापुटतया परेषामुन्नेयो भवति च भराध्मातहृदयः ॥

अनुगमो यथा –

अकृतकबलारम्भैर्वक्त्रैर्भयस्थगितेक्षणैः किमपि वलितग्रीवं स्थित्वा मुहुर्मृगपंक्तयः ।
गगनमसकृत्पश्यन्त्येतास्तथाश्रुयुतैर्मुखैर्निपतति यथा शृङ्गाग्रेभ्यो भ्रमत्नयनोदकम् ॥

सर्वेन्द्रियास्तमय. प्रसुप्तिः । तज्जन्म यथा, कुमारसम्भवे –

तीव्राभिषङ्गप्रभवेण वृत्तिं मोहेन संस्तम्भयतेन्द्रियाणाम् ।
अज्ञातभर्तृव्यसना मुहूर्तं कृतोपकारेव रतिर्बभूव ॥

अनुबन्धो यथा, रघुवंशे –

ततोभिषङ्गानिलविप्रविद्धा प्रभ्रश्यमानाभरणप्रसूना ।
स्वमूर्तिलाभप्रकृतिं धरित्रीं लतेव सीता सहसा जगाम ॥

प्रकर्षो यथा, वेणीसंहारे –

पर्यस्तनेत्रमचिरोद्गतचन्द्रकान्तमुद्भिद्यमाननवयौवनरम्यचिह्नम् ।
प्राणापहारिपरिवर्तितदृष्टिदृष्टं कर्णेन तत्कथमिवाननपङ्कजं ते ॥

संपर्को यथा, रघुवंशे –

रघुर्भृशं वक्षसि तेन ताडितः पपात भूमौ सह सैनिकाश्रुभिः ।
मुहूर्तमात्रादवधूय च व्यथां सहोत्थितः सैनिकहर्षनिस्वनैः ॥

अनुगमो यथा –

आविर्भूते शशिनि तमसा मुच्यमानेव रात्रिर्नैशस्यार्चिर्हुतभुज इव च्छिन्नभूयिष्ठधूमा ।
मोहेनान्तर्वरतनुरियं दृश्यते मुक्तकल्पा गङ्गारोधःप्रसरकलुषा गच्छतीव प्रसादम् ॥

मनसः क्रियास्वपाटवं जाड्यम् । तस्य जन्म यथा –

आहारे विरतिस्समस्तविषयग्रामे निवृत्तिः परा नासाग्रे नयनं यदेतदपरं यच्चैकनिष्ठं मनः ।
मौनं चेदमिदं च शून्यमखिलं यद्विश्वमाभाति ते तद्ब्रूयास्सखि योगिनी किमसि भोः
किं वा वियोगिन्यसि ॥

अनुबन्धो यथा –

शिथिलशिथिलं न्यस्य स्वैरं धनुश्शिखरे शिरो नयनसलिलैः कुर्वन्मौर्वीं लतामपरामिव ।
अहहविकलश्श्रुत्वा श्रुत्वा घनस्तनितध्वनिं किमपि किमपि ध्यायन्नार्यो नयाति नतिष्ठति ॥

प्रकर्षो यथा —

विचिन्तयन्ती यमनन्यमानसा तपोनिधिं वेत्सि न मामुपस्थितम् ।
स्मरिष्यति त्वां न स बोधितोऽपिसन् कथां प्रमत्तः प्रथमोदितामिव ॥

सम्पर्को यथा, मालतीमाधवे —

परिच्छेदातीतस्सकलवचनानामविषयः पुनर्जन्मन्यस्मिन्ननुभवपथं यो न गतवान् ।
विवेकप्रध्वंसादुपचितमहामोहगहनो विकारः कोऽप्यन्तर्जडयति च तापं च तनुते ॥

अनुगमो यथा, मालतीमाधवे —

आश्चर्यमुत्पलदृशो वदनामलेन्दु सान्निध्यतो मम मुहुर्जडिमानमेत्य ।
जात्येन चन्द्रमणिनेव महीधरस्य सन्धार्यते द्रवमयो मनसो विकारः ॥

पदार्थनिन्दनं जुगुप्सा । तस्या जन्म यथा, उत्तररामचरिते —

रेहस्त दक्षिण मृतस्य शिशोर्द्विजस्य जीवातवे विसृज शूद्रमुनौ कृपाणम् ।
रामस्य गात्रमसिनिर्भरगर्भखिन्नसीताविवासनपटोः करुणा कुतस्ते ॥

अनुबन्धो यथा –

विस्रम्भादुरसि निपत्य जातनिद्रामुन्मुच्य प्रियगृहिणीं गृहस्य शोभाम् ।
आतङ्कस्फुरितकठोरगर्भगुर्वीं क्रव्याद्भ्यो बलिमिव दारुणः क्षिपामि ॥

प्रकर्षो यथा, उत्तररामचरिते —

त्वं जीवितं त्वमसि मे हृदयं द्वितीयं त्वं कौमुदीनयनयोरमृतं त्वमङ्गे ।
इत्यादिभिः प्रियशतैरनुरुध्य मुग्धां तामेव शान्तमथवा किमतःपरेण ॥

सम्पर्को यथा, वेणीसंहारे —

धिक्सानुजं कुरुकुलाधिपतिं विगजातशत्रुं धिग्भूपतीन्विफलशस्त्रभृतो धिगस्मान् ।
केशग्रहःखलु तदा द्रुपदात्मजायाः द्रोणस्य चाद्य लिखितैरिव वीक्षितो यैः ॥

अनुगमो यथा —

सर्वेऽङ्गोपानभिष्वङ्गा दाम्नायसमतां गताः । युष्माकमभ्युपगमाः प्रमाणं पुण्यपापयोः ॥

वैराग्यादिभिर्मन खेदो निर्वेदः । तस्य जन्म यथा —

शीतेनोद्धृषितस्य माषशिमिवच्चिन्तार्णवे मज्जतः
शान्ताग्नेस्स्फुटिताधरस्य धमतः क्षुत्क्षाम कुक्षेर्मम ।
निद्रा काप्यवमानितेव दयिता सन्त्यज्य दूरं गता
सत्पात्रप्रतिपादितेव वसुधा न क्षीयते शर्वरी ॥

अनुबन्धो यथा —

मातर्लक्ष्मि भजस्व कञ्चिदपरं मत्काङ्क्षिणी मास्मभू-
र्भोगेभ्यस्स्पृहयालवो नहि वयं का निस्पृहाणामसि ।
सद्यस्स्यूतपलाशपत्रपुटिकापात्रे पवित्रीकृते
भिक्षासक्तुभिरेव सम्प्रति वयं वृत्ति समीहामहे ॥

प्रकर्षो यथा —

क तावानानन्दो निरतिशयविस्रम्भवहुलः क तेऽन्योन्यं यत्र क्वचन गहनाः कौतुकरसाः ।
सुखे वा दुःखे वा क्वनु खलु तदैक्यं हृदययोस्तथाप्येष प्राणस्स्फुरति नतु तापो विरमति ॥

संपर्को यथा —

अयं शून्यो ग्रामस्सुरसदनमेतच्च पतितं परश्शुष्का वापी .... पूरयमितश्शीर्णविटपः ।
वयस्यै ते वा .... कृशदशाभाग्यगतयस्समानैस्संयोगःकटुरपि मनो मे रमयति ॥

अनुगमो यथा —

जरामरणदौर्गत्य व्याधयस्तावदासताम् । जन्मैव किं न धीरस्य भूयोभूयस्त्रपाकरम् ॥

तत्त्वज्ञानादिभिर्मन कषायोपरमश्शमः । तस्य जन्म यथा —

स्थितिः पुण्यारण्ये सहपरिचयो हन्त हरिणैः फलैर्मूलैर्वृत्तिः प्रतिदिवसतल्पानि पृषदः ।
इतीय सामग्री भवति हरभक्तिं स्पृहयता वनं वा गेहं वा सदृशमुपशान्तैकमनसाम् ॥

अनुबन्धो यथा —

अवश्यं यातारश्चिरतरमुषित्वापि विषया वियोगे कोभेदस्त्यजति नजनो यत्स्वयममून् ।
व्रजन्तस्स्वातन्त्र्यादतुलपरितापाय मनस स्स्वयं त्यक्ता ह्येते शमसुखमनन्तं विदधति ॥

प्रकर्षो यथा —

यदासीदज्ञानं स्मरतिमिरसंस्कारजनितं तदा दृष्टं नारीमयमिदमशेषं जगदपि ।
इदानीमस्माकं पटुतरविवेकाञ्जनजुषा समीभूता दृष्टिस्त्रिभुवनमपि ब्रह्म मनुते ॥

संपर्को यथा, काव्यप्रकाशे —

अलमतिचपलत्वात्स्वप्नमायोपमत्वात् परिणतिविरसत्वात्सङ्गमेन प्रियायाः ।
इति यदि शतकृत्वस्तत्वमालोचयामस्तदपि न हरिणाक्षीं विस्मरत्यन्तरात्मा ॥

अनुगमो यथा –

यन्मीमांसयतश्श्रुती स्वतरसा साक्षात्कृतब्रह्मणो
विश्वामित्रमहामुनेरपि च यं वर्तामहे चेतसि ।
अप्युल्लीढकषायपालनधियां सद्यस्समाधिश्लथे
तत्सङ्गीतकमन्तरेण हृदयं हर्षाश्रुरीनर्तिनः ॥

एते रत्यादयो भावाश्शृङ्गारव्यक्तिहेतवः । कात्स्न्र्यादेकोनपञ्चाशद्रतिभेदाः प्रकाशिताः ॥
जन्मानुबन्धातिशयस्सम्पर्कानुगमादिति । युञ्जीत सर्वभावेषु वर्गयोरुभयोरपि ॥

यदपि च गदितं प्रकर्षगामी भवति रसो रतिविस्मयादिरेव ।
तदपि न समञ्जसं प्रकृष्टाः प्रतिनिजभेदममी हि सर्व एव ॥



इति श्री महाराजाधिराज श्री भोजदेवविरचिते शृङ्गारप्रकाशे
हर्षादिभावपञ्चकप्रकाशनो नाम चतुर्दशः प्रकाशः.

## द्वितीयसम्पुटस्समाप्तः



एषा भोजकृता कृतिर्निरुपमा शृङ्गारनाडिन्धमा
गुप्ता विश्रुतभूम्नि केरलधरासीम्नि प्रियं भावुकैः ।
लब्धायश्रितसह्यसम्भवसरित्कर्नाटनीवृद्घनी
श्रीखण्डद्रवचर्चिकेव परमामोदं विधत्तां सताम् ॥

# प्राकृतगाथानां छायाः-

पुटे

३०९. अद्धच्छिपेच्छिअं माकुरुज साहाइअ पुळोएसु ।
सोअसुदिट्ठो होहिइ तुमं पि मुद्धा किलिज्जिहिसि ॥
अर्धाक्षिप्रेक्षितं माकुरु स्वाभाविकं प्रलोकय। सोपि सुदृष्टो भविष्यति त्वमपि मुग्धा कलयिष्यते ॥

३१०. जं जं पेच्छामि दिसं पुरओ लिहिएव्व दीससे तत्थ ।
तुह पडिमापरिवाडिं वहइव्व सअलं दिसाचक्कं ॥
यां यां पश्यामि दिशं पुरतो लिखितेव दृश्यसे तत्र ।
तव प्रतिमापरिपाटीं वहतीव सकलं दिशाचक्रम् ॥

३११. तं दइआहिण्णाणं जम्मि वि अंगं वि राहवेण णिजिहिद ।
सीआपरिमरिसेणव उडेति णवो णिरन्तरं रोमञ्चो ॥
तदु दयिताभिज्ञानं यस्मिन्नप्यङ्गे राघवेण निहितम् ।
सीतापरिमर्षणेव उदेति नवो निरन्तरं रोमाञ्चः ॥

३३६. काअ खाअइ खुहिओ कूरं फेलेइ णिब्भरं रुट्ठो ।सुअणं गेण्हइ कण्ठे हक्केइ अणति भण्डेरो ॥
कूर भक्तं क्षुधितः खादति काकं च निर्भर रुष्टः सन् क्षिपति,
श्वानं च निवारयति, नप्तारं च कण्ठे गृह्णाति स्थविरजातिः ॥

,, आउज्झिअ पिट्ठिअए जइ कुक्कुलिणा ममज्झ मसाले ।
पेक्खन्त हला उलकलणिआ हद्दा कस्स कन्देमि ॥
आवर्ज्य केशेषु नमयित्वा ताड्यते राजकुलनियुक्तान् प्रेक्षमाणाननाहत्य कस्याक्रन्दामि ॥

३३७. सेलसुआरुद्धद्धं मुद्धाणाबद्धमुद्धससिलेहम् । सीसपरिट्ठिअगङ्गं सञ्झापणहं पमहणाहम् ॥
शैलसुतारुद्धार्धं मूर्धाबद्धमुग्धशशिलेखम् । शीर्षपरिष्ठितगङ्गं सन्ध्याप्रणत प्रमथनाथम् ॥

,, संहदचक्कआजुआ विअसिअकमलमुणालसंछणा । वावी वहुव्व रोहणविलित्तथणआ सुहावेद ॥
संहतचक्रवाकयुगा विकसितकमलमृणालसंछन्ना । वापीवधूरिव रोचनाविलिप्तस्तनी सुखयति ॥

३३७ अहिणवमणहरविरइअवलअ विहाइ णववहुआ ।
कुन्दलअव्व समुप्फुल्ल गुच्छपरिणित्त भमरगणा ॥
अभिनवमनोहरविरचितवलयविभूषा विभाति नववधू-। कुन्दलतेव समुत्फुल्लगुच्छपरिनिर्यद्भ्रमरगणा ॥

३३८. काराविऊण खउरं गामउड्ढ मज्जिओ जिमिओअ ।
णक्खत्ततिहिवारे जोइसिअ पुच्छिउञ्चलिओ ॥
कारयित्वा क्षौरं ग्रामप्रधानः मज्जित्वा जिमितश्च । नक्षत्रतिथिवारान् ज्योतिषं प्रष्टुं चलितः ॥

पुटे

३३९. खाहि विसं पिअ मुत्तं णिज्जसु मारीअ पडउ दे वज्जम् ।

दन्तखण्डिअथणआ खविऊण सुअं सवयि माआ ॥

खाद विषं पिब मूत्रं नीयसे मार्या पततु ते वज्रम् । दन्तखण्डितस्तनी क्षिप्त्वा सुतं शपति माता ॥

,, णमह हरं रोसाणलणिद्दड्ढमुद्धमम्महसरीरम् ।

वित्थअणिअम्बणिग्गअगङ्गासोत्तं व हिमवन्तम् ॥

नमत हरं रोषानलनिर्दग्धमुग्धमन्मथशरीरम् । विस्तृतनितम्बनिर्गतगङ्गास्रोतसमिव हिमवन्तम् ॥

कोला खणन्ति मोत्थं गिद्धा खाअन्ति मडअमंसाइम् ।

उडआ हणन्ति काए काआ उलुए वि आअन्ति ॥

कोलाः खनन्ति मुस्तं गृध्राः खादन्ति मृतकमांसानि ।

उलूका घ्नन्ति काकान् काका उलूकानपि बाधन्ति (क्षिपन्ति) ॥

३४०. सुरहिमहुपाणलम्पडभमरगणाबद्धमण्डलीबन्धम् ।

कस्स मणं णाणन्दइ कुम्मिपुट्ठट्ठिअ कमलम् ॥

सुरभिमधुपानलम्पटभ्रमरगणाबद्धमण्डलीबन्धम् । कस्य मनो नानन्दयति कूर्मपृष्ठस्थितं कमलम् ॥

३४०. पट्टंसुउत्तरिज्जेण पामरो पामरीए परिपुसइ । अइगुरु अकूरकुम्भिभरेण सेउल्लिअं वअणम् ॥

पट्टांशुकोत्तरीयेण पामरः पामर्याः प्रोञ्छति । अतिगुरुककूरकुम्भीभरेण स्वेदार्द्रितं वदनम् ॥

३४८. अम्हारिसाविकइणो हलिअन्दहालपमुहावि । मण्डुक्कमक्क डावि हुहोन्ति हरिसप्पसिंहादि ॥

अस्मादृशा अपि मन्दप्रतिभानाः कवयः हरिचन्द्रहलप्रमुखाश्च लोकोत्तरप्रतिभाशालिनः

विख्याते चाविख्याते च शब्दाः साधारणा भवन्ति तद्यथा हरिशब्द एवेति व्याख्यानम् ।

,, मोरकलावे जं वहइ तद्दणामह सरिसणाउ ।

उस्सीसा पाअन्ति गवुमणु णत्तिहिं जाणुणाउ ॥

मयूरःकलापे यं वहति तस्य नाम्नः सदृशनामा । उच्छीर्षात् पादान्तगतोऽनुनकं यथा नौका ॥

अर्धचन्द्रः प्राच्याः प्रतीचीं गत इत्यर्थः ॥

३५८. विवाहिऊ णयबहुआ सासुरअदोलिआइ णिज्जंति ।

रोअइ दिअरो तां सण्ठवेइ पासेण वजन्तो ॥

विवाहनववधूः श्वशुरकगृहं दोलिकया नीयमाना ।

रोदिति देवरस्तां संस्थापयति पार्श्वेन व्रजन् ॥



Foreword P III, Para 1

We find that Dr Kane does refer to "Saraswathi-Kantha-.bharana", but not to "Shringara Prakasha".